मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे

वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥ २ ॥

अत्र तदन्तिकमेव रन्तुं गतासीति प्राधान्येनाधमपदेन व्यज्यते ।

**बालचित्तानुरञ्जनी**— उत्तमकाव्यस्य लक्षणमुक्त्वा उदाहरणमाह यथेति । काचिन्नायिका नायकं प्रति प्रेषितां तेनोपभुक्तां स्वदूतीं सेर्ष्यमाह । हे दूति । नायकसमीपं गतास्मीति मिथ्यावादिनि इतः मत्सकाशात् त्वं वापीं स्नातुं गतासि । तस्याधमस्यान्तिकं पुनर्न गतासि । मादृशस्य बान्धवजनस्य पीडागमः दुःखप्राप्तिः त्वया न ज्ञायते । वापीं स्नातुं गतासीति कुतोऽवगमः इत्याकाङ्क्षायामाह । स्तनयोः तटं स्थलं निःशेषं यथा च्युतं चन्दनं यस्मात् । अधरश्च नितरां मृष्टोऽपगतो रागो यस्य । नेत्रे च दूरं अत्यर्थं अविद्यमानाञ्जने तथा तन्वी कृशा इयं तनुः सञ्जातरोमाञ्चा च । अत्राधमपदसहायानां व्यञ्जकत्वमभिप्रेत्याह **अत्रेति** । तत्रैव तात्पर्यात् प्राधान्यम् । गाढालिङ्गनेन च्युतं न तु क्षालितं, चुम्बनेन नितरां मृष्टो न त्वीषच्चुम्बनेन । अत्यर्थमनञ्जने न त्वीषत् । तनुत्वे ग्लानत्वे सति पुलकितत्वम् न तु पुलकितत्वमात्रम् दूतीमप्युपभुक्तवानित्यधमत्वम् । अत्र स्नातुं गतासीति विधिप्रतीतेर्वाच्याद् व्यङ्ग्यस्य चमत्कारः ।

**सारबोधिनी**—नायकाभिसरणाय प्रेषिता तं सम्भुज्य समागतां दूतीं प्रति स्नानकार्यप्रकाशमुखेन संभोगं काचित् प्रकाशयति निःशेषेति । **इतीति** । दूतस्य मिथ्याभाषणं स्वभावः । दूति न तु सखि, सखीत्वे मत्प्रतारणं मत्प्रियसंभोगश्च न स्यात् । उद्देश्यकार्याकरणेन मत्प्रियरमणेन च बान्धवजनस्य यथा पीडा भवति न तज्जानासि । तस्य नीचाभिलाषित्वेन प्रसिद्धस्य अतोऽधमस्य नीचकार्यकर्तुः ।

**प्राधान्येनेति** । अधमपदस्य पदान्तरापेक्षया झटिति प्रकृतार्थव्यञ्जकत्वेन प्राधान्यम् । अत्र केचित्, अत्र स्तनतटं निःशेषच्युतचन्दनं न तु स्तनमध्यादि, तत्र तथाविधनायककरपरामर्शायोग्यत्वात् । एवमधरोऽधरोष्ठः तत्र रागो निःशेषं, मृष्टो न तु पूर्वोष्ठे, तत्र चुम्बननिषेधात् । एवं नेत्रमध्ये चुम्बननिषेधात् दूरत एव निरञ्जने । तथा चैतत्सर्वं रत एव संभवति, न तु स्नाने । स्नाने चेत् सर्वाविच्छेदेनैव चन्दनच्यवनादि स्यादिति तथाविधचन्दनच्यवनादीनां रतैकसाध्यानां स्नानकार्यत्वबोधेन स्नातुं गतासीत्यत्र निषेधो न गतासीत्यत्र विधिश्च लक्ष्यते । रन्तुमिति व्यज्यते । न च [४२] विधौ कथं लक्षणेति वाच्यम् । अन्यथा [४३] उभयत्र गमनबोधे असङ्गत्यापत्तेः । [४४] न च तथा सति "भम धम्मिअ" इत्यत्रापि भ्रमणनिवृत्तौ लक्षणा स्यादिति वाच्यम् । तत्र श्वमारणादौ मुख्यार्थे बाधानवतारात् । इह तु तटादिपदप्रतिसन्धानेन स्नाने बाधावताराल्लक्षणा आवश्यकीत्याहुः ।

वस्तुतस्तु, तथाविधचन्दनच्यवनादीनामपि स्नानकार्यत्वं संभवत्येव । तथाहि । वापीं स्नातुं गतासि न तु गृहम् । एतच्च विशिष्य वापीपदोपादानाल्लभ्यते । अतः स्तनतट एव निःशेषचन्दनच्युतिर्न तु स्तनमध्यादिषु । वापीनीरस्य जनाकीर्णतया तथाविधमार्जनस्यासंभवाद् गृह एव तत्संभवाच्च । तथा पूर्वोष्ठस्य न्युब्जतया [४५] बहुलजलसंबन्धाभावात् न तत्र निःशेषरागव्यक्तिः, किन्त्वधर एवोत्तानत्वेन-

बहलजलसंबन्धात्। तथा स्नानकाले नेत्रमुद्रणात् नेत्रमध्ये नाञ्जनराहित्यम्। किन्तु दूरत एवेत्यादि-रूपेण स्नानकार्यत्वसंभवेन बाधानवतारात् कथंरतौ लक्षणा, किन्तु वक्तृबोद्धव्यवैशिष्ट्याद् व्यञ्जनैव। तदाह तदन्तिकमेवेति। अन्यत्र एवंविधकार्यस्यासंभावितत्वात्। न च तदन्तिकगमनतात्पर्यानुपपत्त्या विधौ लक्षणैवेति वाच्यम्। विदग्धनायिकायाः स्नानकार्यप्रकाशमुखेनैव तत्र तात्पर्यात्। न गतासीत्यत्र नञि काकुः। तथा च न गतासि अपि तु गतास्येवेत्यर्थः। तदन्तिकमेवेत्यत्र एवकारो गतासीत्यनन्तरं योज्यः। अत्र काक्वाक्षिप्तत्वेऽपि झटित्यनाक्षिप्तत्वान्न गुणीभूतव्यङ्ग्यत्वम्, अपि तु ध्वनित्वम्। यथा, तथाभूतेत्यादौ। अत्र त्वय्यकृतज्ञायां यद् बान्धवबुद्ध्या विश्वसिमि यच्च तत्र दुर्विदग्धे दृढमनुरक्तास्मि तद् व्यक्तमेव। मय्येवंविधवञ्चनपात्रत्वमितीर्ष्याहेतुकविप्रलम्भविशेषसञ्चारिनिर्वेदध्वनिः। तदनुगुणश्च दूतीसंभोगः। चन्दनच्यवनादीनाञ्च वाच्यानां परिरम्भचुम्बनाद्यनुभावानां संभोगोत्कर्षद्वारा ईर्ष्याया उत्तेजकानां निर्वेदोत्कर्षकत्वमवधेयम्।

**अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्।**

अतादृशि वाच्यादनतिशायिनि। यथा

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥ ३॥

अत्र वञ्जुललतागृहे दत्तसङ्केता न गतेति व्यङ्ग्यं गुणीभूतं तदपेक्षया वाच्यस्यैव चमत्कारित्वात्।

**बालचित्तानुरञ्जनी**—उत्तमं काव्यं सोदाहरणं लक्षयित्वा मध्यमकाव्यस्य लक्षणमाह **अतादृशीति**। अतादृशीत्यस्यार्थमाह **वाच्यादिति**। व्यङ्ग्ये वाच्याच्च अतादृशि अनतिशायिनि सति काव्यं मध्यमम्। तदेव गुणीभूतव्यङ्ग्यं इति कथितमित्यनुषज्यते।

तस्योदाहरणमाह **ग्रामतरुणमिति**। कश्चित् कश्चित् प्रत्याह। ग्रामशब्देन तत्रैव एकोऽतिशयेन कामुक इति द्योत्यते। नववञ्जुलमञ्जर्या संयुक्तकरं मुहुर्मुहुः पश्यन्त्यास्तरुण्या नितरां मुखकान्तिर्मलिना भवति। अत्र भवतीति वर्तमानव्यपदेशेन वैवर्ण्यस्याविरामः सूच्यते। स्वयं सङ्केतकरणात् स्वस्य तत्रागमनात् पुरुषस्य तत्र गमनाच्च मुखवैवर्ण्यमित्यर्थः। अत्र गुणीभूतं व्यङ्ग्यं किमित्याकाङ्क्षायामाह **अत्रेति**। व्यङ्ग्यं नववञ्जुलमञ्जरीत्यादिपदेनेत्यर्थः। तदपेक्षया व्यङ्ग्यापेक्षया। कामुकदर्शनेन कामिन्याः मुखविकासस्य संभाव्यस्य विरोधस्यैव चमत्कारित्वात्।

**सारबोधिनी**—**अतादृशीति**। अत्र चित्रान्यत्वे सतीति विशेषणं देयम्। तेन चित्रे नातिव्याप्तिः। **वाच्यादनतिशयिनीति**। वाच्यादनतिशयश्च तस्य समत्वेऽप्राधान्ये वा बोध्यः।

**ग्रामेति**। वञ्जुलोऽशोकः। सनाथो युक्तः। पश्यन्त्या इति वर्तमानतोपदेशात् दर्शनसमय एव मालिन्योदयात् कार्यकारणपौर्वापर्यविपर्ययात्मा अतिशयोक्तिर्बोद्धव्या। सङ्केतभङ्गोऽत्र व्यङ्ग्यः। तेन वाच्यवदनकान्तिमालिन्यमुखेनैव विप्रलम्भाभासस्य पोषणमिति तन्मुखप्रेक्षित्वादस्य गुणीभूतव्यङ्ग्यत्वम्।

अस्यान्तरालिकव्यङ्ग्यापेक्षयैव गुणीभूतव्यङ्ग्यत्वम्, रसापेक्षया तु रसध्वनिरित्यवधेयम्। अत एव सर्वेषां काव्यानां ध्वनित्वमिति महिमभट्टाः।

नन्वेवं वस्त्वलङ्कृत्योर्ध्वनित्वं न स्यात् आस्वादापेक्षया तयोरपि गुणीभावादिति चेदेवमेव वाच्यतः प्राधान्यमात्रेण तयोर्ध्वनित्वम्, आस्वादापेक्षया तु गुणीभूतत्वमिति।

**शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम् ॥६॥**

चित्रमिति गुणालङ्कारयुक्तम्। अव्यङ्ग्यमिति स्फुटप्रतीयमानार्थरहितम्। अवरं अधमम्।

**बालचित्तानुरञ्जनी**—अधमकाव्यं लक्षयति **शब्दचित्रमिति**। चित्रशब्दार्थमाह **चित्रमितीति**। गुणमाधुर्यादयस्ते रसधर्मा उपचारात् शब्दगुणा अर्थगुणा इत्युच्यन्ते। तथा च वक्ष्यति "गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता" इति। शब्दालङ्काराः अनुप्रासादयः, अर्थालङ्काराः उपमादयः, तैर्युक्तम्। अव्यङ्ग्यमित्यस्यार्थमाह **अव्यङ्ग्यमिति**। अर्थो व्यङ्ग्यरूपः। अवरं अधमम्। अव्यङ्ग्यमधममित्येतावल्लक्षणमितरद्विभागपरम्।

**सारबोधिनी**—**शब्देति**। अव्यङ्ग्यं चित्रमिति सामान्यलक्षणम्। शब्दचित्रमर्थचित्रमिति विभागे चित्रपदोपादानात्। चित्रपदार्थमाह **गुणालङ्कारेति**। यत्र तयोरेव प्राधान्येन चमत्कारित्वमित्यर्थः।

यथा

स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटा—
मूर्च्छन्मोहमहर्षिहर्षविहितस्नानाह्निकाह्नाय वः।
भिद्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुम—
द्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥४॥

**बालचित्तानुरञ्जनी**-**स्वच्छन्देति**। मन्दाकिनी वः मन्दतां जडतां अह्नाय क्षिप्रं भिद्यात् अपनयतु। कीदृशी गङ्गा। स्वच्छन्देन स्वेच्छया उच्छलन्त्यः। अच्छा निर्मलाः कच्छदेशेषु जलप्रायदेशनिम्नस्थलेषु। छातेतराः स्थूलाः। अम्बुच्छटाः जलकल्लोलास्ताभिर्मूर्च्छन् नश्यन् मोहो येषां तैः महर्षिभिर्हर्षेण विहितं स्नानमाह्निकं च यस्यां सा। पुनः कीदृशी? उद्यन्तः उदाराः बहवः दर्दुराः मण्डूका यासु ताश्च ता दर्यश्च ताभिः दीर्घेषु अदरिद्रेषु समृद्धेषु द्रुमेषु द्रोहोद्रेको येषां ते, ते च महोर्मयश्च तैर्मेदुरः अधिको मदो यस्याः। अत्र वृत्त्यनुप्रासेन वैचित्र्यम्। यद्यपि मन्दाकिनीविषयो रत्याद्यो भावो व्यङ्ग्योऽस्ति तथापि अनुप्रासे कवेस्तात्पर्यात् तिरोधीयते। अत्र ओजोलक्षणे व्यङ्ग्ये प्रतीयमाने सत्यपि काव्यस्य गुणाव्यभिचारात् तद्व्यतिरिक्तस्यैव व्यङ्ग्यस्य प्रतीयमानत्वं विवक्षितम्। अन्यथा काव्यस्यैव हानिः।

**सारबोधिनी—स्वच्छन्देति** । मन्दाकिनी वो युष्माकं भद्राय झटिति मन्दतां भिद्यात् । स्वच्छन्दं स्वाधीनं न तु वातादिपरतन्त्रम् । उच्छलदित्यम्बुविशेषणम् । कच्छे जलसमीपे तरङ्गैः खननात् यत् कुहरं बिलं छातं अल्पम् । "अमांसो दुर्बलश्छात" इत्यमरः । तदितरत् छटा परम्परा छाया वा तया मूर्च्छं-प्रादुर्भवन्मोहो वैचित्र्यं विस्मयो येषाम् । दर्दुरः पर्वतभेदः । तस्य दीर्घा दैर्घ्यं यस्यास्तां भित्त्वापि झटिति जलनिर्गमनेन दैर्घ्यं न तु तया जलस्थगनं तेन वेगातिशयः । मन्दाकिनी नदीविशेषः । केचित्त मन्दाकिनी गङ्गा । दर्दुरो भेको न तु पर्वतविशेषः । तस्य दक्षिणदिग्गिरित्वेन गङ्गासंबन्धाभावात् इत्याहुः । अदरिद्राः परिणाहोच्छ्रायादिमन्तः । द्रोहः पातनम् । उद्रेक आधिक्यम् । तन्मयास्तद्युक्ता ये तरङ्गास्त एव निबिडः स्निग्धोऽहङ्कारो यस्याः ।

विनिर्गतं मानदमात्ममन्दिराद्
भवत्युपश्रुत्य यदृच्छयापि यम् ।
ससंभ्रमेन्द्रद्रुतपातितार्गला
निमीलिताक्षीव भियामरावती ॥५॥

इति काव्यप्रकाशे काव्यस्य प्रयोजनकारणस्वरूपविशेषनिर्णयो नाम प्रथम उल्लासः

**बालचित्तानुरञ्जनी**—वाच्यचित्रमुदाहरति **विनिर्गतमिति** । यदृच्छयाप्यात्ममन्दिरात् विनिर्गतं यं उपसृत्य अमरावती ससंभ्रमेण इन्द्रेण द्रुतं पातिता अर्गला यस्याम् । एवंविधा सती भयेन निमीलिताक्षीव भाति । कीदृशं आश्रितानां बहुमानं ददाति रिपूणां चाभिमानं ददातीति वा मानदम् । अत्रोत्प्रेक्षारूपे अर्थालङ्कारे कवेस्तात्पर्यात् सन्तो धीरादयो व्यङ्ग्यास्तिरोधीयन्ते ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां प्रथम उल्लासः ।

**सारबोधिनी**—अर्थचित्रमुदाहरति **विनिर्गतमति । मानदमिति** । शत्रूणां मानस्य खण्डकम् । मित्राणां मानस्य दातारम् । यद्यपि स्वच्छन्देत्यत्र द्रुमपातनादिना नद्यन्तराद्व्यतिरेकः । महर्षीणां सेवनेन च तीर्थान्तराद्व्यतिरेकः । तथा मन्दाकिनीविषयो भावश्च प्रतीयते । तत्र मन्दाकिनी तद्गुणाश्चालम्बनोद्दीपनविभावौ । स्तवोऽनुभावः । सञ्चारिणश्च स्मृत्यौत्सुक्यादयः । तथाप्यनुप्रासाहितचमत्कारेण तेषां व्यवधानमिति स्फुटप्रतीयमानव्यङ्ग्यरहितत्वमिति चित्रत्वेन व्यवहारो न ध्वनित्वादिना, प्राधान्येन व्यपदेशात् । एवं यद्यपि विनिर्गतमित्यत्रापि हयग्रीवस्य वीरो रसः प्रतीयते । तत्र स एवालम्बनं प्रतिपक्षेन्द्रगतं भयमुद्दीपनम् । मानदानमनुभावः । यदृच्छासञ्चारणगम्या धृतिः सञ्चारी । तथाप्युत्प्रेक्षाहितचमत्कारेण तस्य व्यवधानमिति चित्रत्वम् । अत्र केचित्—चित्रं न काव्यभेदः । व्यङ्ग्यस्य प्राधान्ये ध्वनित्वम् । तदन्यथा गुणीभूतत्वम् प्रकारान्तराभावात् । तदुक्तम्—

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते ।
उभे काव्ये तदन्यद्यत्तच्चित्रमभिधीयते ॥" ध्वन्यालोकः ३.४४

इति तन्न । वाचकवाच्यवैचित्र्यप्रतीतिव्यवहितप्रतीतिकरसत्त्वस्यास्फुटव्यङ्ग्यत्वस्य तृतीयप्रकारस्य संभवादिति ।

इति सारबोधिन्यां प्रथम उल्लासः ।

---

FOOT NOTES

१. श्री गणेशाय नमः A. B. २. A. B R D omit श्री जगज्जनन्यै नमः . ३. प्रथमां कारिकाम् V. ४. पश्चाङ्कं वाक्यं ग्रन्थः V. ५. इति V. ६. F. reads इति after सिद्धत्वात् ७ B. omits स्वस्मिन् . ८. जयहेतुत्वे B. ९. लभ्यते B. १०. D omits आदधती . ११. उत्कर्षाश्रया भवति F. १२. K adds इति वाच्यम् . १३. F omits तद्रहितां . १४. B omits नास्त्येव . १५. B omits सांख्यवचनात् . १६. F omits असाधारणस्येति . १७. F omits पश्चात् . १८. जयत्यर्थेति K . १९. इति F . २०. सचाक्रमध्वन्यन्तर्गतः F . २१. A reads इत्यर्थः after सूचितम् . २२. Some printed textes read इतिहासादिभ्यश्च . २३. प्रकाशत इति B . २४. B omits देहान्तरोत्पादनया . २५. तत्संभवात् D. २६. कवित्वस्य बीजं प्रतिभा (resembles the वामनसूत्र "कवित्वबीजं प्रतिभानम्" १-३-१६) २७. प्रतिभा–Pratibha alone is the main source of poetry. This idea was originated by the present commentator which was later staunchly supported by Jagannatha, by saying "तस्य च कारणं कविगता केवला प्रतिभा . २८. B omits अस्य २९. D omits शेषः ३०. See Jhalki-kara's commentary. ३१. F omits अन्ये ३२. इत्यादि B . ३३. Panditaraj also refuted this view. ३४. V omits कांश्चित् . ३५. विशेषदर्शनं भ्रमवत् दर्शने भ्रमवत् A ३६. The Commentator refutes the view of विद्याचक्रवति another commentator. ३७. भाद्रक्षपाः V. ३८. B omits धृतिकारणादीनां . ३९. संभोग A . ४०. चमत्कारित्वम् A. ४१. B specifically points out it as नैयायिकमतमिति . ४२. नच निषेधे B. ४३. With reference to अन्यथा उभयत्र A has the following marginal notes. तदन्तिकं न गतासीत्यत्र विधौ लक्षणां विना । स्नातुं गतासीत्यत्र निषेधे लक्षणायाम् . ४४. निषेधबोधे असंगतिः स्यात् A ४५: बहलसंबन्धात् A .

---

क्रमेण शब्दार्थयोः स्वरूपमाह—

**स्याद्वाचको लाक्षणिकः शब्दोऽत्र व्यञ्जकस्त्रिधा ।**

अत्रेति काव्ये । एषां स्वरूपं वक्ष्यते ।

**बालचित्तानुरञ्जनी**—प्रथमोल्लासे शब्दार्थौ काव्यमित्युक्तम् । तत्र कतिविधः शब्दः कतिविधो वार्थ इत्याकाङ्क्षायां तद्विभागप्रतिपादनपरत्वेन उत्तरश्लोकमवतारयति **क्रमेणेति** । उद्देशक्रमेण स्वरूपं विशेषरूपं विभागमित्यर्थः । नन्वर्थशास्त्रादौ व्यञ्जकशब्दव्यवहाराभावात् कथं त्रैविध्यमित्याशङ्क्य श्लोकगतात्रशब्दार्थमाह **अत्रेतीति** । व्यङ्ग्यस्यैव रसस्य प्रतिपादके काव्ये व्यञ्जकशब्दोऽवश्यम्भावीति त्रैविध्यमुचितमिति भावः । वैयाकरणैः स्फोटं प्रति शब्दस्य व्यञ्जकत्वश्रवणात्काव्यग्रहणमुपलक्षणम् ।

ननु विभागानन्तरं वाचकादीनां लक्षणं वाच्यम्, तत्परित्यज्य वाच्यादय इत्यादिना अर्थविभागः कथं क्रियत इत्याशङ्क्य शब्दविभागानन्तरं तत्सहचरितार्थविभागं जिज्ञासमानस्यावश्यवक्तव्यत्वेन तदनन्तरं साक्षात्सङ्केतितमित्यादिना कथयिष्यतीत्याह-**एषामिति** । तदर्थाः तेषां वाचकादीनामर्थाः । क्रमेण वाच्यलक्ष्यव्यङ्ग्या इत्यर्थः ।

**सारबोधिनी**—शब्दार्थौ काव्यमित्युक्तम् । तत्र किंस्वरूपौ शब्दार्थौ इत्यपेक्षायामाह **क्रमेणेत्यादि** । क्रमश्च काव्यलक्षणवाच्योपादानलभ्यः[१] । अर्थान्तरव्यञ्जना न संभवतीति **प्रायशः** उक्तम् ।

**वाच्यादयस्तदर्थाः स्युः**

वाच्यलक्ष्यव्यङ्ग्या ।

**तात्पर्यार्थोऽपि केषुचित् ॥६॥**

आकाङ्क्षा-योग्यता-सन्निधिवशाद् वक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये तात्पर्यार्थो विशेषवपुरपदार्थोऽपि वाक्यार्थः समुल्लसतीत्यभिहितान्वयवादिनां मतम् । वाच्य एव वाक्यार्थ इत्यन्विताभिधानवादिनः ॥६॥

**बालचित्तानुरञ्जनी**—**तात्पर्यार्थोऽपीति** । केषुचिन्मतेषु । एतदेव स्पष्टयति **आकाङ्क्षेत्यादिना** । आकाङ्क्षा प्रतिपत्तुर्जिज्ञासा । साकाङ्क्षाणां योग्यानामेकबुद्ध्युपारूढत्वं सन्निधिः । योग्यता बाधकप्रमाणविरहः । एतादृशां जात्यादिर्जातिरेववेत्यादिवक्ष्यमाणस्वरूपाणां पदार्थानां समन्वये सङ्केतग्रहणमात्रप्रतीयमानात्पदार्थादाकाङ्क्षादिकारणत्रयेण प्रतीयमानो विशेषवपुर्भिन्नस्वरूपः पदार्थव्यतिरिक्तो वाक्यार्थोऽपि स्फुरति । शब्दार्थव्यतिरिक्तो वाक्यार्थोऽपि न पदार्थः । पदार्थवाक्यार्थयोर्भिन्नत्वेन प्रतीयमानत्वादिति प्रमाणमुक्तम् । "गामानय शुक्लं दण्डेन" इत्यादौ पदानि स्वार्थमभिधाय अन्वितानि भवन्तीति ये वदन्ति तेऽभिहितान्वयवादिनः । बहुवचनेनायमेव पक्षः प्रामाणिक इति सूचितम् । अभिहितान्वयवादिन इत्यनेन

सूचितं पक्षान्तरमाह **वाच्य इति**। पदानि अन्वितानि भूत्वा पश्चाद्विशिष्टमर्थं कथयन्तीति यो वदति सः अन्विताभिधानवादी तस्य मतमित्यनुषज्यते। अतएव वाक्यार्थो वाच्यः। एकवचनेनास्याप्रामाणिकत्वम्।

**सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते।**

तत्र वाच्यस्य यथा—

माए घरोवअरणं अज्ज हु ण त्थि त्ति साहिअं तुमए।
ता भण किं करणिज्जं एमेअ ण वासरो ठाइ ॥६॥

अत्र स्वैरविहारार्थिनीति व्यज्यते।

**बालचित्तानुरञ्जनी**—व्यञ्जकस्यैव काव्योपयोगित्वादितरयोरुपादानं किमर्थमित्याशङ्क्याह **सर्वेषामिति**। वाच्यलक्ष्यव्यङ्ग्यानाम् व्यञ्जकत्वमिष्यते। **प्रायश इति**। सर्वदा, अपिशब्दात् वाच्यत्वादिकम्। वाच्यलक्ष्ययोरर्थयोर्व्यञ्जकत्वेन तत्प्रतिपादकयोः शब्दयोरपि परम्परया काव्योपयोगादुपादानं युक्तमिति भावः। वाच्यादीनां व्यञ्जकत्वं क्रमेणोदाहरति।

**तत्रेति**। काचिद्दत्तसङ्केता तत्र जिगमिषुः व्याजोक्त्या श्वश्रूं प्रति कथयति **मातरिति**। अनेन सुखानुज्ञानार्था प्रियोक्तिः। घरोवअरणं गृहोपकरणं तण्डुलादि। अनेनावश्यकर्त्तव्यत्वं सूच्यते। हु खलु। णत्थित्ति नास्तीति। साहिअं कथितम्। तुमए त्वया। अनेन व्याजो नोत्पादित इति सूच्यते। ता तस्मात् भण। अनेन प्रेरणार्थः सूच्यते। किं करणिज्जं किं करणीयम्। एमेअ एवमेव। वासरो वासरः। ठाइ तिष्ठति। अनेन सायंकाले मम पतिव्रताया गमनेऽचित्त इत्यात्मनः शुद्धत्वं द्योत्यते। त्वरया प्रेरयति वा। अत्र किं व्यङ्ग्यमित्याकाङ्क्षायामाह **अत्रेति**। प्रमाणान्तरावगतव्यभिचारिणीरूपवक्तृवैशिष्ट्यात् वाच्यार्थो व्यञ्जक इत्यभिप्रायः।

**सारबोधिनी—माए इति**। मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तद्भण किं करणीयमेवमेव न वासरस्तिष्ठति॥

मातरित्याज्ञाग्रहणोपयोगिरूपमुपकरणं कार्यम्। नास्ति गृहोपकरणमित्यनेनावश्यकत्वम्। अद्येत्यादिनातिप्रसङ्गवारणम्। त्वया कथितं न तु[१] मयेत्यनेनान्यथा निवृत्तिः। तच्छब्देन हेत्वर्थेनावश्यवक्तव्यत्वम्। एवमेव त्वयासङ्गं विना वासरो न तिष्ठति। अतीते वासरे तवाज्ञयापि न किञ्चित्करिष्यामीति व्यज्यते इति पदार्थानां व्यञ्जकता।

वाक्यार्थव्यञ्जकतामाह-**अत्रेति**। वक्तृवैशिष्ट्यादिति शेषः। यत्तु पदार्थव्यञ्जकत्वविभागे वाक्यार्थव्यञ्जकत्वमनुपयुक्तमिति, तन्न। गुरुमते अन्वयस्यापि वाच्यत्वात्। तस्य तात्पर्याख्यवृत्तिविषयत्वादार्थत्वाच्च। व्यङ्ग्यमाह-**स्वैरेति**। स्वैरः स्वेच्छाधीनः स्वैरविहारेच्छायां वाक्यार्थोत्तरकालं प्रतीयमानायां शब्दस्य न व्यापारः, विरतत्वात्। अर्थस्य व्यापारान्तरं न संभवतीत्यर्थानां व्यञ्जकत्वसिद्धिः।

लक्ष्यस्य यथा--

साहेन्तो सहि सुहअं खणे खणे दुम्मिआसि मज्झकए ।
सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए ।।७।।

अत्र मत्प्रियं रमयन्त्या त्वया शत्रुत्वमाचरितमिति लक्ष्यम् । तेन च कामुकविषयं सापराधत्वप्रकाशनं व्यङ्ग्यम् ।

**बालचित्तानुरञ्जनी**--काचिन्नायिका स्वप्रियोपभुक्तां दूतीं प्रत्याह । सहि सखि । **मज्झकए मम** कृते । सुहअं सुभगम् । साहेन्ती साधयन्ती प्रार्थमानेत्यर्थः । "णिच एदादे" इति सूत्रेण णिच् स्थाने अदादेश-पक्षे साहन्तीत्यपि पाठान्तरम् । खणे खणे क्षणे क्षणे । दुम्मिआ दूना । असि । सब्भावणेहकरणिज्ज-सरिसअं सद्भावस्नेहकरणीयसदृशम् । दाव तावत् । विरइअं विरचितम् । तुमए त्वया । अत्र लक्ष्यं किं व्यङ्ग्यं च किमित्याकाङ्क्षायामाह-**अत्रे**ति । वाक्यस्य विपरीतलक्षणया शत्रुत्वं लक्ष्योऽर्थः ।

**सारबोधिनी**--**साहेन्तीति** । [३] साधयन्ती सखि सुभगं क्षणे क्षणे दूनासि मत्कृते ।
सद्भावस्नेहकरणीयसदृशं [४] तावद्विरचितं त्वया ।।

**त्वयेति** प्रतिपाद्य दूतीवैशिष्ट्यमुक्तम् । ज्ञातापकारिणीं प्रत्येवंविधोक्तिरसंभवितेति बाधा-नन्तरं सद्भावेत्यादिना तदभावव्याप्यत्वेन विरोधि लभ्यते तदाह-**शत्रुत्वमिति** ।

केचित्तु सद्भावस्नेहाभ्यां तदभावो लक्ष्यते । तेन तदतिशयशत्रुत्वं व्यज्यते । लक्ष्यं लक्षणामूलं व्यङ्ग्यम् । पार्यन्तिकन्तु कामुकविषयसापराधत्वप्रकाशनमित्याहुः ।

अत्र वाक्यार्थस्य व्यञ्जकत्वेऽपि लक्ष्यस्य व्यञ्जकत्वं भट्टमते, तस्यापि लक्ष्यत्वात् । अथवा, अन्वयस्य व्यञ्जकत्वेऽन्वयिनोऽपि व्यञ्जकत्वमिति लक्ष्यस्य व्यञ्जकत्वमिति ।

व्यङ्ग्यस्य यथा--

उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ बलाआ ।
णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ।।८।।

अत्र निष्पन्दत्वेन आश्वस्तत्वम् । तेन च जनरहितत्वम् । अतः सङ्केतस्थानमेत-दिति कयाचित् कञ्चित् प्रत्युच्यते । अथवा मिथ्या वदसि न त्वमत्रागतोऽभूरिति व्यज्यते ।।

**बालचित्तानुरञ्जनी**--काचित् कामुकं प्रति सङ्केतस्थलमेतदित्यभिप्रायेणाह-उअ पश्य । णिच्चलणिप्पंदा निश्चलनिष्पन्दा । बलाआ बलाका । भिसिणीपत्तम्मि बिसिनीपत्रे । रेहइ राजते । केव ? णिम्मलमरगअभाअणपरित्थिआ निर्मलमरकतभाजनप्रतिष्ठिता, संखसुत्ति व्व शङ्खशुक्तिरिव । चलनं शारीरो व्यापारः, स्पन्दोऽवयवव्यापार इति न पौनरुक्त्यम् । मरकतेत्यादिना न केवलं वर्णसाम्यं किन्तु अचेतनत्वेन निष्क्रियत्वञ्च । अत्र व्यङ्ग्यस्य व्यञ्जकत्वं दर्शयति- **अत्रे**ति । निष्पन्दत्वेन वाच्येन विश्वास-

युक्तत्वं व्यङ्ग्यम् । तेन जनरहितत्वं व्यज्यते । फलितमाह -**अतइति** । प्रकारान्तरेण आश्वस्तत्वस्य व्यञ्जकत्वमाह-**अथवेति** । यदि त्वमत्रागतोभूस्तर्हि बलाकाया विश्वस्तत्वं नोपपद्यत इति भावः ।

**सारबोधिनी—उग्र इति** । पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका ।
निर्मलमरकतभाजनपरिस्थिता[४] शङ्खशुक्तिरिव ॥

निश्चलोऽचलस्तद्वृत्तिस्पन्द इत्यर्थः । निश्चल (लं ?) निरुध्य (द्धं ?) मिति सम्बोधनमिति ? केचित् । द्विप्रलम्भस्याधिकमधुरत्वे परपक्षे तमाह **अथवेति** ।

वाचकादीनां क्रमेण स्वरूपमाह—

**साक्षात् सङ्केतितं योऽर्थमभिधत्ते स वाचकः ॥७॥**

इहागृहीतसङ्केतस्य शब्दस्यार्थप्रतीतेरभावात् सङ्केतसहाय एव शब्दोऽर्थविशेषं प्रतिपादयतीति यस्य यत्राव्यवधानेन सङ्केतो गृह्यते स तस्य वाचकः ॥७॥

**बालचित्तानुरञ्जनी**—अर्थस्वरूपानन्तरं प्रागुद्दिष्टवाचकादीनां उपलक्षणावसर इति उत्तरं श्लोकमवतारयति **वाचकादीनामिति** । यः अर्थमभिधत्त इत्युक्ते लाक्षणिकादावतिव्याप्तिः । तदर्थं **सङ्केतितं इति** । एवमप्यन्विताभिधानवादे गङ्गायां घोष इत्यादौ मुख्यार्थव्यवहिते तटादावपि सङ्केतसद्भावात् तत्रैवातिव्याप्तिरित्यत आह-**साक्षादिति** । तावत्युच्यमाने एद्दहमित्यादौ चेष्टायामतिव्याप्तिः । तत्परिहाराय शब्दप्रस्तावात् यः शब्द इति द्रष्टव्यम् । यस्मिन् पक्षे लक्ष्ये सङ्केताभावः तत्र सङ्केतितमर्थं योऽभिधत्ते इत्येकं लक्षणम् । यः साक्षादभिधत्ते इति द्वितीयम् । अभिधत्त इति प्रतिपादयतीत्यर्थः । न त्वभिधया बोधयतीति अभिधया प्रतिपादको वा वाचकव्यापारोऽभिधेत्यन्योन्याश्रयप्रसङ्गात् । सङ्केतविप्रतिपत्तिं निराकुर्वन् श्लोकं व्याकरोति **इहेत्यादिना** । इह लोकव्यवहारे । अगृहीतसङ्केतस्याप्यर्थमात्रप्रतीतिरस्तीति तन्निवृत्तये विशेषग्रहणम् । सङ्केतो नाम शब्दार्थयोः सम्बन्धावधारणम् । शब्दस्य सङ्केतितार्थाभिधायकत्वं सकलसङ्केतितार्थज्ञानमन्तरेण न संभवतीति सङ्केतितमर्थं विभजते **सङ्केतित इत्यादिना** । सङ्केतविषयः कृतः सङ्केतितः । आदिशब्देन गुणक्रियायदृच्छाशब्दा गृह्यन्ते ।

**सारबोधिनी**—अभिधत्ते अभिधाग्रहाहितसंस्कारसहकृतः सन् स्मारयति, तेन नानार्थव्यञ्जके नातिव्याप्तिः । तत्र तथाविधसंस्कारस्याहेतुत्वात् । साक्षात् सङ्केतितं अव्यवधानेन गृहीतसङ्केतम् अस्माच्छब्दादयमर्थो बोद्धव्य इत्युद्देशनं सङ्केतः ।

ननु यन्नाम्ना यत्र चैत्यादिस्तन्नामा विषयोऽपि स इतिवत् सान्तरतया यस्मिन् विषये देशे तन्नामकः प्रधानवृक्षः स देशोऽपि तन्नामक इत्युद्देशनम् । यथा वटो ग्राम इत्यत्र तरुसङ्केतेन, ग्रामसङ्केतस्य व्यवधानात् न **साक्षात्सङ्केत इति** । तत्र तत्पदस्य लक्षणैव । न चापभ्रंशेऽतिव्याप्तिरिति वाच्यम् । तस्यापि वाचकत्वमिति **मिश्रादिभिरङ्गीकरणात्तस्य** लक्ष्यत्वात् । अन्यथा तन्मयप्रबन्धस्य काव्यत्वं न स्यात् ।

वस्तुतस्तु लक्षणाद्वयम् । यत्र यस्य साक्षात्सङ्केतः स तस्य वाचक इति । एवं यत्र यस्याभिधेत्य-परम् । अभिधा तु शक्तिः । सा चेश्वरेच्छाविषयः, पदार्थान्तरं वा । न च नानार्थव्यञ्जकेऽतिव्याप्तिरिति[६] वाच्यम्, तस्य लक्ष्यत्वात् । किन्तु व्यञ्जकत्वदशायां नियन्त्रितयाऽभिधयाऽर्थान्तरस्याप्रतिपादकत्वमित्य-स्यैवाङ्गीकृतत्वादिति ।

**मिश्रास्तु** अभिधत्ते स्मारयति सङ्केतितं सङ्केतज्ञानद्वारा विवक्षणीयम् । तेन लाक्षणिके नानार्थ-व्यञ्जके च नातिव्याप्तिरित्याहुः ।

**नव्यास्तु** सङ्केतितमर्थं यः साक्षादभिधत्ते अर्थान्तरप्रतीत्यव्यवधानेनोपस्थापयति । तेन लाक्ष-णिके नानार्थव्यञ्जके चाभिधेयार्थप्रतीत्या व्यवधानमिति न तयोरतिव्याप्तिः । कार्यकारणभाव-सम्बन्धेन शब्देनाकाशोपस्थितौ तत्रातिव्याप्तिवारणाय सङ्केतितमित्याहुः, तन्न । वृत्तिविरोधात् । यत्र यस्याव्यवधानेन सङ्केतो गृह्यते इत्यादिना साक्षात्त्वस्य सङ्केतग्रहेणैव सम्बन्धस्य दर्शितत्वात् ।[७]

**सङ्केतितश्चतुर्भेदो जात्यादिर्जातिरेव वा ।**

यद्यप्यर्थक्रियाकारितया प्रवृत्तिनिवृत्तियोग्या व्यक्तिरेव तथाप्यानन्त्याद् व्यभिचाराच्च तत्र सङ्केतः कर्तुं न युज्यत इति गौः शुक्लश्चलो डित्थ इत्यादीनां विषयविभागो न प्राप्नो-तीति च तदुपाधावेव सङ्केतः ।

**बालचित्तानुरञ्जनी**--ननु व्यक्तिरेव सङ्केतितार्थो युक्तः अर्थक्रियाकारित्वेन पुरुषप्रवृत्तिनिवृत्ति-योग्यत्वादित्याशङ्क्याह-**यद्यपीति** ।

ननु सर्वासु व्यक्तिषु सङ्केतः कतिपयासु वा । तत्राद्यं निराकरोति **आनन्त्यादिति** । द्वितीयं निरा-करोति **व्यभिचारादिति** । व्यभिचारः सङ्केतितार्थव्यतिरिक्तेऽपि गवि गोव्यवहारः । इति शब्दः तद्युक्ते व्य-क्तिरित्येव न व्यवह्रियेतेत्यर्थः । चकारः उक्तदोषसमुच्चयार्थः । उक्तमर्थमुपसंहरति **तदुपाधाविति** । तस्या व्यक्तेरुपाधिर्विशेषणं जात्यादौ शब्दः प्रवृत्तिनिमित्तमित्यर्थः । जात्यादीनां भेदं वक्तुमुपाधिं विभजते **उपाधिश्चेति** । वस्तुधर्मो वस्तुनो नैसर्गिको धर्मो वक्त्रा स्वेच्छया आरोपितो धर्मः । वस्तुधर्ममपि विभ-जते **वस्तुधर्म इति** ।

**सारबोधिनी**--नन्वानयनादिव्यवहारः शक्तिग्राहकः । **स च व्यक्तावेवेति** । तत्रैव शक्तिर्युक्ता, न तु जात्यादावित्यत आह **यद्यपीति** । अर्थः प्रयोजनं जलाहरणादिक्रियानिर्वाहः । **आनन्त्यादिति** सर्वासां व्यक्तीनामनुपस्थितेः सामान्यलक्षणानङ्गीकृतेरिति भावः । **व्यभिचारादिति** । असङ्केतितव्यक्तावपि प्रतीतिदर्शनाद्व्यभिचार इत्यर्थः । कर्तुं ज्ञापयितुम् ।

ननु नैयायिकानां सामान्यलक्षणया सर्वासां व्यक्तीनामुपस्थितिर्भविष्यतीति मीमांसकानान्तु शक्तिग्रहान्वयबोधयोः समानप्रकारकत्वस्य तन्त्रत्वादगृहीतसङ्केतानामन्वयबोधो भविष्यतीत्यतो दोषान्तरमाह **गौः शुक्ल इति** । विषयः प्रवृत्तिनिमित्तम् । तद्भेदे पर्यायवद्युगपत्प्रयोगापत्तिः । **तदुपाधाविति** । उपाधौ विशेषणे एवकारेण विशेष्यांशव्यवच्छेदः । विशेष्यस्य नानात्वेन गौरवादिति भावः ।

उपाधिश्च द्विविधः—वस्तुधर्मो वक्तृयदृच्छासंनिवेशितश्च । वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः--पदार्थस्य प्राणप्रदो विशेषाधानहेतुश्च । तत्राद्यो

जातिः । उक्तं हि वाक्यपदीये—"न हि गौः स्वरूपेण गौर्नाप्यगौः गोत्वाभिसंबन्धात्तु गौः" इति ।

**बालचित्तानुरञ्जनी**—सिद्धमपि विभजते **सिद्धोऽपीति** । आद्यः पदार्थस्य प्राणप्रद इति । प्राणप्रदां जातिं विना वस्तुनः स्वरूपमेव न सिद्ध्येदित्यर्थः । जातेः प्राणप्रदत्वे संमतिमाह **उक्तं-हीति** । स्वरूपेण पिण्डमात्रेण गौगौंरिति व्यवहर्तुं न शक्यते अतिप्रसङ्गात् । नाप्यगौरिति व्यवहर्तुं अगोव्यावृत्तत्वात् । अतो गोत्वजातियोगादेव । पदार्थस्य प्राणप्रद इव । प्राणप्रदां जातिं विना वस्तुनः स्वरूपमेव न सिद्ध्येदित्यर्थः ।

**सारबोधिनी**—वस्तुधर्मो वस्तुनि समवेत इत्यर्थः । यदृच्छासंनिवेशितः, या इच्छा यदृच्छा । यदृच्छेति निपातः । तया संनिवेशितः । स्वेच्छानियुक्तः । पदार्थस्य पदोद्देश्यस्य प्राणनं प्राणो व्यवहारयोग्यता, तत्पदस्तन्निर्वाहकः । विशेषः सजातीयेभ्यो व्यावर्तनात् "शिषः असर्वोपयोग" धा० (१६१६) इति धात्वनुसारात् । आधानं प्रत्ययः । गौर्गोपदोद्देश्यो धर्मी स्वरूपेण उपाधिरहितव्यक्तिमात्रेण न गौर्गोव्यवहारप्रयोजकः । तदा घटोऽपि गौः स्यात् स्वरूपाविशेषात् । नाप्यगौः न गोभेदव्यवहारप्रयोजकः । तदा गौरप्यगौः स्यात् । व्यवहारप्रयोजकमाह-**गोत्वेति** । लब्धसत्ताकं प्राप्तव्यवहारयोग्यताकं विशिष्यते सजातीयेभ्यो व्यावर्त्यते ।

द्वितीयो गुणः । शुक्लादिना हि लब्धसत्ताकं वस्तु विशिष्यते । साध्यः पूर्वापरीभूतावयवः क्रियारूपः ।

डित्थादिशब्दानामन्त्यबुद्धिनिर्ग्राह्यं संहृतक्रमं स्वरूपं वक्त्रा यदृच्छया डित्थादिष्वर्थेषूपाधित्वेन संनिवेश्यत इति सोऽयं संज्ञारूपो यदृच्छात्मक इति ।

**बालचित्तानुरञ्जनी**—शुक्लादेर्गुणस्य विशेषाधानहेतुत्वं कथयति **शुक्लादिना हीति** । अनेन उत्पन्नस्य द्रव्यस्य पश्चाद्गुणेन विशेषणमिति दर्शितम् । अत एव जातिगुणयोर्महान् भेदः । साध्यस्य लक्षणमाह-**साध्य इत्यादिना** । पूर्वापरीभूताः अधिश्रयणादयोऽवयवाः अस्याः पचनादिक्रियायाः तद्रूपः । वक्तृयदृच्छेत्यादिना उक्तं चतुर्थमुपाधिं विशदयति **डित्थादीति** । स्वरूपं स्फोटस्वरूपम् । अन्त्यवर्णबुध्या नितरां ग्राह्यम् । पूर्वपूर्वबुध्या तु ईषद्ग्राह्यम् । अन्त्यबुध्या स्फुटतरावभासनात् संहृतक्रमम् । स्फोटस्यैकत्वाद्वा संहृतक्रमम् । इतिशब्दो हेतौ । द्वितीयस्तु जात्यादिविभागपरिसमाप्तिद्योतकः ।

**सारबोधिनी**—नन्वेतज्जातिप्रसक्तं गोत्वादीनामपि स्वाश्रयेष्वनुगतबुद्धेरिव तदितरेभ्यो व्यावृत्तिबुद्धेर्जनकत्वादिति चेन्न । विशेषाधानहेतुत्वं गुणलक्षणयोगित्वमित्यस्यैव विवक्षणात् । एवं प्राणप्रदत्वमपि जातिलक्षणयोगित्वमित्युक्तरूपस्यानतिप्रसक्तत्वात् । साध्यः साध्यत्वेन विवक्षितः तदाख्यातप्रवृत्यर्थ इति यावत् । तेषां मते पाकादिक्रियाया अपि नित्यत्वात् । तदुक्तम् (वाक्यपदीये ३. का १)

यावत्सिद्धमसिद्धं वा साध्यत्वेन प्रतीयते ।
आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते ॥ इति

**पूर्वापरीभूतेति** । अधिश्रयणादिव्यापारप्रचयः क्रिया तस्या अवयवा अधिश्रयणादयः । अत्र समूहस्यानतिरिक्ततया व्यापाराणां प्रत्येकं पाकत्वेन क्रमेण पाक इति भ्रम एवेति । अक्रमस्य क्रमप्राप्तिरित्यर्थः

अत एवोक्तम्--"आश्रितक्रमरूपत्वादि" ति। असंव्यवच्छेद्यस्वलक्षणं बुद्धिद्वारा निर्ग्राह्यं यस्य, उपाधिप्रत्यायनानन्तरमुपाधिविशिष्टप्रत्यायनमित्यस्ति क्रमः। सोऽत्राकूतः। झटित्येव धर्मिप्रत्यायनात्। न च पदान्निर्विकल्पकापत्तिरिति वाच्यम्। आकाशपदवदिष्टत्वात्। न तु डित्थादिशब्दानामुपाधित्वम्। अयमेव द्रव्यशब्दः तदुक्तम्-

शब्दैरेभिः प्रतीयन्ते जातिद्रव्यगुणक्रियाः।
चातुर्विध्यादमीषान्तु शब्द उक्तश्चतुर्विध॥ इति[१]

न चोपाधित्वेन संनिवेश्यत इति ग्रन्थासङ्गतिः। उपाधित्वेनेत्यस्य व्यवहारहेतुत्वेनेत्यर्थकरणादित्येकं मतम्।

"गौः शुक्लश्चलो डित्थ इत्यादौ चतुष्टयी शब्दानां प्रवृत्तिः" इति महाभाष्यकारः। परमाण्वादीनां तु गुणमध्यपाठात् पारिभाषिकं गुणत्वम्। गुणक्रियायदृच्छानां वस्तुत एकरूपाणामप्याश्रयभेदाद् भेद इव लक्ष्यते। यथैकस्य मुखस्य खड्गमुकुरतैलाद्यालम्बनभेदात्।

**सारबोधिनी**--उक्तेऽर्थे सम्मतिमाह **गौः शुक्ल इति**। प्राणप्रदत्वं नाम जातिलक्षणम्। काणादैर्गुणत्वेन पठितेष्वणुत्वादिषु अतिव्यापकमित्याशङ्क्यते। तेषां सङ्केतमात्रं तत्।

वस्तुतस्तु, परमाणुव्यवहारः परमाणुत्वजातियोगादेव अतो नातिव्यापकमित्याह **परमाणुत्वादीनामिति**। अथवा विशेषाधानहेतुर्गुण इत्यव्यापकं लक्षणम्। अणुमहद्दीर्घ ह्रस्व चेति कणादेन गुणत्वेनाभिमतानामणत्वादीनां नित्यत्वेन विशेषाधायकत्वाभावादित्याशङ्क्य तेषां वस्तुतो गुणत्वाभावान्नाव्यापकत्वमित्याह **परमाणुत्वादीनामिति**। परमाण्वादीनामिति पाठे भावप्रधानो निर्देशः। नन्वेकत्वाज्जातेरुपाधित्वमस्तु गुणादीनामुपाधित्वे प्रतिवस्तु भिन्नत्वादानन्त्यादिदोषास्तदवस्था इत्याशङ्क्याह **गुणेति**। आश्रयभेदाद्भिन्न इव प्रतीयते। परमार्थतस्तु एक एव शुक्लादिर्गुणः सर्वत्रेत्यर्थः। तदुक्तम्--'कर्मैकं जातिरप्येका जगत्येकः सितो गुणः' इति। एकस्योपाधिवशादनेकविधत्वप्रतीतौ दृष्टान्तमाह **यथेति**। मुकुरो दर्पणः। भेद इव लक्ष्यत इत्यनुषज्यते। अपरन्तु, डित्थादिशब्दः उपाधिः। डित्थादिशब्दवत्त्वेन प्रतीतेः। द्रव्यशब्दता तु शब्दस्य द्रव्यत्ववादिनो भट्टस्य दिशा। न च डित्थाद्यर्थवृत्ते डित्थादिशब्दस्य डित्थाद्यावृत्तेः। न च स्वज्ञाने स्वज्ञानस्य कारणत्वे आत्माश्रय इति वाच्यम्, विशिष्टज्ञाने विशेषकारणवत् कारणतावच्छेदकभेदमादाय समाधीयमानत्वात् विशिष्टज्ञानस्यापि विशेषणज्ञानत्वेन स्वज्ञातत्वात्।

**मिश्रास्तु**--युगपदनुपस्थितेषु स्ववर्णेषु कथं सम्बन्धपरिच्छेद इत्याहुः। **संज्ञेति**। अत्र हेतुरन्त्येति। अन्त्यवर्णबुद्धौ प्रातिस्विकसंस्कारोपनीतेषु वर्णेषु शक्यः सम्बन्धपरिच्छेद इत्याहुः। अत्र मते उपाधिगतं यदृच्छाशब्दमादायैवाभासः समाधानञ्च। न तु वाचकस्वशब्दविषयमिति ध्येयम्।

अपरे तु, स्वरूपं वर्णात्मकसंज्ञाशब्दादिप्रत्यक्षानन्तरस्वविशिष्टान् धर्मिणः प्रत्याययन्ति। तेन स्वप्रत्यक्षजन्याया स्वविशिष्टधियः परत्वादन्त्यत्वं तद्ग्राह्यं तया विषयीकृतं, नैवं गवादिपदानि, तेषां जात्यादिवैशिष्ट्यबोधनात्। वैधर्म्यान्तरमाह **संहृतेति**। पूर्वपूर्वप्रयोगदर्शनात्परप्रयोग इति जात्यादिशब्देषु क्रमः सोऽत्र नास्ति। तत्र हेतुमाह यदृच्छेत्यादीत्याहुः **परमाण्वादीनामिति**। परमाणुत्वादीनामित्यर्थः गुणमध्ये पाठः। अणुमहद्दीर्घं ह्रस्वं चेतिरूपः। **पारिभाषिकमिति** परिभाषा च वैशेषिकमतसिद्धा। विशेषाधानहेतुरिति स्वमतसिद्धा वा। **गुणत्वमिति**।

तथा च तन्निमित्तीकृत्य प्रवृत्तानां परमाण्वादिशब्दानां गुणशब्दत्वमिति शेषः। ननु गुणादीनां प्रति धर्मिवैधर्म्यदर्शनेन नानात्वेन तत्र शक्तौ व्यक्तिवदानन्त्यव्यभिचारापात इत्यत आह **गुणक्रियेति**।

**वस्तुत इति**। प्रत्यभिज्ञाया धर्मिभेदस्य बाधितत्वादाश्रयभेदनिबन्धन एव तद्भेद इत्यर्थः।

हिमपयःशङ्खाद्याश्रयेषु परमार्थतो भिन्नेषु शुक्लादिषु यद्वशेन शुक्लः शुक्ल इत्याद्यभिन्नाधानप्रत्ययोत्पत्तिस्तत् शुक्लत्वादि सामान्यम्। गुडतण्डुलपाकादिष्वेवमेव पाकत्वादि। बालवृद्धशुकाद्युदीरितेषु डित्थादिशब्देषु च प्रतिक्षणं भिद्यमानेषु डित्थाद्यर्थेषु वा डित्थत्वाद्यस्तीति सर्वेषां शब्दानां जातिरेव प्रवृत्तिनिमित्तमित्यन्ये तद्वान् अपोहो वा शब्दार्थः कैश्चिदुक्त इति ग्रन्थगौरवभयात् प्रकृतानुपयोगाच्च न दर्शितम् ॥७॥

**बालचित्तानुरञ्जनी**—जात्यादिरित्येतदुपपाद्येदानीं जातिरेववेति पक्षमुपपादयति **हिमपयः इत्यादिना**। बाल्यशुकाद्युच्चारणभेदेन भिन्नेष डित्थशब्देषु डित्थशब्दत्वं सामान्यमस्ति तदेव पिण्डे आरोप्यते तत् डित्थशब्दाभिधेयमित्यर्थः। अर्थेऽपि जातिमाह **प्रतिक्षणमिति**। प्रतिक्षणभिन्नेषु पिण्डेषु स्वाभाविकं डित्थत्वं सामान्यमभिधेयमित्यर्थः। एतत् वैनाशिकमतानुसारेण प्रत्यहं कारणसंभेदात् शरीरान्तरमिति वैशेपिकमतानुसारेण वा। जातिरेव वेति पक्षमुपसंहरति **इतीति**। ननु मतान्तराणामपि सत्वात् तानि कुतो नोपन्यस्तानीत्यत आह **तद्वानिति**। जातिमान् जातिमत्तया धृतं वस्तु पदार्थ इति नैयायिकाः। अपोह इतरव्यावृत्तिः। सङ्केत इति बौद्धैरुक्त इत्यर्थः। प्रयोजनसद्भावे गौरवमप्यङ्गीकार्यमित्यत आह **प्रकृतेति**। मतद्वयोपन्यासेनैव सङ्केतितसाकल्यप्रतीतेर्मतान्तरोपन्यासो व्यर्थ इत्यर्थः।

**सारबोधिनी**—जातिरेवेति[१८] व्याचष्टे **हिमेत्यादि**। परमार्थतो भिन्नेषु अबाधिततारतम्यप्रतीतेरिति शेषः। **गुडतण्डुलादीति**। वैधर्म्यप्रदर्शनाय गुडपाके रूपपरावृत्तिः। स्वरवैजात्यात् भेदप्रदर्शनाय **प्रतिक्षणमिति**। कालोपलक्षणमेतत्। डित्थादिशब्देषु चेत्यादि। चकारः पूर्वोक्तसमुच्चयार्थः। वाकारस्तु शब्दार्थगतजात्यादिभेदेन विकल्पार्थः।

केचित्तु इवार्थो वाशब्दः। शब्देष्विति शब्दानन्तरं योज्यः। शब्देष्विवार्थेष्वपि जातिसिद्धिरित्याहुः। तद्वान् जातिमान्। अयं पक्षो जातिविशिष्टशक्तिवादरूपः। अपोहः अतद्व्यावृत्तिः। तर्हि जात्यादयोऽपि न वक्तव्या इत्यत आह **प्रकृतेति**। उपाधिशक्तिवादे उपाधेयस्य व्यङ्ग्यत्वं स्यादिति तन्मतानुवादः प्रकृतोपयोगी। उपहितशक्तिस्तु प्रतिकूलप्रायेति न तदनुवादः।

**स मुख्योऽर्थस्तत्र मुख्यो व्यापारोऽस्याभिधोच्यते ॥८॥**

स इति साक्षात् सङ्केतितः। अस्येति शब्दस्य।

**बालचित्तानुरञ्जनी**। नाभिधा समयाभावात् इत्यादौ अभिधाव्यवहारदर्शनात् मुख्यार्थनिरूपणप्रस्तावे तां लक्षयति **तत्र मुख्य इति**। श्लोकस्थस्य सः इत्यस्य चार्थमाह **स इति अस्येतीति च**। अत्र साक्षात्

सङ्केतितेऽर्थे शब्दस्य व्यापारोऽभिधेत्येतावल्लक्षणम् । मुख्य इति वक्ष्यमाणारोपितलक्षणापेक्षयोक्तम् । अन्यथा साक्षात् सङ्केतितेऽर्थे शब्दस्य व्यापारान्तराभावान्मुख्यग्रहणमनर्थकं स्यात् ।

**सारबोधिनी** । स'' इति । नानार्थव्यञ्जनवारणाय **मुख्य इति** । मुखे आदौ साधुः मुख्यः । प्रथम प्रत्यायकः । स च न तथा, अभिधेयार्थप्रतीत्याऽव्यवधानात् । अत्र पदज्ञानात् संबन्धस्मरणं ततः संबन्धिनोऽर्थस्योपस्थितिरिति व्यापारीभूतज्ञानविषयतया संबन्धस्य व्यापारता । कारणज्ञानविषयत्वेन पदादिकरणतावत् ।

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया ॥९॥**

"कर्मणि कुशलः" इत्यादौ दर्भग्रहणाद्ययोगात् "गङ्गायां घोषः" इत्यादौ च गङ्गादीनां च घोषाद्याधारत्वासंभवात् मुख्यार्थस्य बाधे विवेचकत्वादौ सामीप्ये च संबन्धे रूढितः प्रसिद्धेः तथा गङ्गातटे घोष इत्यादेः प्रयोगात् येषां न तथा प्रतिपत्तिः तेषां पावनत्वादीनां धर्माणां तथा प्रतिपादनात्मनः प्रयोजनाच्च मुख्येन अमुख्योऽर्थो लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठो लक्षणा ॥९॥

**बालचित्तानुरञ्जनी**—लक्षणाया लक्षणमाह **मुख्यार्थेति** । मुख्यार्थबाधयोगाभ्यां अन्योर्थो लक्ष्यते प्रतिपाद्यत इति यत्सा लक्षणेत्येतावल्लक्षणम् ।

नन्वेवं सति यच्छब्देन लक्ष्यत्वपरामर्शः स्यात् । नह्येषा लक्षणा । लक्ष्यत्वं लक्ष्यधर्मः लक्षणा तु लक्षक धर्म इति चेन्न । यच्छब्देन लक्ष्यत इत्याख्यातार्थगुणीभूतं प्रतिपादनमात्रमेव परामृश्यते । प्रतिपादनन्तु प्रतिपादकधर्म एव । अतो नोक्तदोषः । अथवा यत् यतो व्यापारात् अन्योर्थो लक्ष्यते सा लक्षणा । सेति प्रतिनिर्दिश्यमानलिङ्गोपादानम् । **रूढितोऽथ प्रयोजनादिति** लक्षणाविभागपरम् । रूढिलक्षणा प्रयोजनलक्षणा चेति विभागः, न तु लक्षणान्तर्भूतत्वं तथात्वे एकैकस्यान्तर्भावेऽव्याप्तिः, उभयान्तर्भावित्वसंभवः । लक्षणवाक्यमुदाहरणनिष्ठत्वेन व्याकरोति **कर्मणीत्यादि** । कुशान् लाति आदत्ते इति कुशल इति मुख्योऽर्थो निपुणे न संभवतीत्याह **दर्भग्रहणेति** । प्रयोजनलक्षणायामपि मुख्यार्थबाधं दर्शयति **गङ्गायां घोष इति** । व्याकरोति **विवेचकत्वादाविति** । रूढिलक्षणायां सामीप्यादि । रूढित इत्यस्यार्थः प्रसिद्धेः । प्रसिद्धेः प्रयोजनमाह **तथेति** । येषां पावनत्वदीनां तथा अतिशयेन न प्रतीतिः । तथातिशयेन प्रतिपादनरूपात् । आरोपिता क्रियेत्येतद्व्याचष्टे **स इति** । यद्यपि गङ्गायां घोष इत्यत्र गङ्गाशब्देन प्रत्यायितं स्रोतस्तीरं लक्षयतीत्यर्थव्यापारो लक्षणा, न शब्दव्यापारस्तथापि वाच्यधर्मः वाचके शब्दे आरोप्यते । अतः शब्दो लाक्षणिक इत्यर्थः । आरोपिते हेतुमाह **सान्तरार्थनिष्ठ इति** । अन्तरं व्यवधानम् । तेन सह वर्तते व्यवहितस्तीरादिः, स हि मुख्येन व्यवधीयते । अतस्तीरादिविषयो व्यापारो मुख्यार्थगत एव । न तु निवृत्तव्यापारगङ्गादिशब्दगतः, अतः शब्दे न संभवतीति तत्रारोप्यत इत्यर्थः ।

लाक्षणिके निरूपयितव्ये तदुपाधिं लक्षणां निरूपयति **मुख्यार्थबाध इति** । क्रिया शब्दव्यापारः । शाब्दीव्यञ्जनावारणाय **मुख्यार्थबाध इति** । तात्पर्यविषयान्वये मुख्यार्थतावच्छेदकप्रकारेण मुख्यार्थप्रतियोगिताविरहः । न तु मुख्यार्थान्वियानुपपत्तिमात्रम् । अजहत्स्वार्थायामव्याप्तेः । विवक्षिते तु छत्रिणो यान्तीत्यादावेकसार्थवाहित्वेनैवमुख्यार्थस्यान्वयो न तु छत्रित्वेनेति नाव्याप्तिः । असम्बन्धे लक्षणायामतिप्रसङ्ग इति **तद्योग इति** ।

वस्तुतस्तु योगपदं प्रमाणान्तरानुत्थापकयोगपरम् । तेन धूमपदाद् व्याप्यव्यापकभावसम्बन्धेन वह्निज्ञानेन प्रसङ्गस्तस्यानुमानोत्थापकत्वात् । हेतुं विना लक्षणायामतिप्रसङ्ग इत्यत आह **रूढित इत्यादि** । अथेति विकल्पे । रूढिः प्रसिद्धिः प्रयोगप्रवाहः । **प्रयोजनादिति** प्रयोजनमुद्दिश्य ल्यब्लोपे पञ्चमी । नचैवं हेतुद्वैविध्येऽननुगम इति चेत्—अत्र **मिश्राः**—अन्यतरत्वेनानुगममाहुः ।

वस्तुतस्तु रूढ्यभावसहकृतप्रयोजनाभावाभावस्य लक्षणेऽनुप्रवेशेनाननुगम इति केचित् । रूढिप्रयोजनभेदकेन स्वरूपनिर्वाहके प्रत्येकं प्रवेशेऽननुगमात् । समुदायेनासंभवादित्याहुः ।

लक्षणापदयोगं दर्शयति **अन्योऽर्थ इति** । लक्ष्यते इति णिजन्तादाख्यातम् । यदि क्रियाविशेषणम् । यद्वा, यदित्यव्ययं यथेत्यर्थः । णिजर्थो हेतुर्व्यापारः । हेतुश्च **शब्द इति** । अन्यार्थप्रतीतिहेतुः शब्दव्यापारो लक्षणेत्यर्थः । अत्र शक्यसम्बन्धस्मरणमेव व्यापारो न तु शक्यसम्बन्धः । तस्य शब्दव्यापारत्वासंभवात् । तत्र च शब्दव्यापारत्वादिव्यवहारो व्यापारीभूतज्ञानविषयत्वादित्युक्तमेव । ननु गङ्गाशब्दः प्रवाहबाधादिमन्तरेणैव तीराद्यर्थं बोधयतु । तत्कथमभिधातो भेद इत्यत आह **आरोपितेति** । सान्तरार्थनिष्ठो मुख्यार्थप्रतीतिव्यवहितप्रतीतिकार्यनिष्ठ इत्यर्थः अभिधेयार्थबोधप्रतीकत्वाल्लक्षणाया इति । यतः इदं तु लक्षणास्वरूपकथनम् ।

यद्वा इयं वृत्तिरर्थनिष्ठा बाधितेन तेन स्वसम्बन्धिबोधनात् शब्देत्वारोप्यते । तद्बोधितमुख्यार्थस्य लक्षकत्वात् । अत एव शब्दे औपचारिको लाक्षणिकव्यवहार इति । कुशं लातीति यौगिकोऽर्थो मुख्यः । दक्षान्वये तात्पर्यमिति मुख्यार्थबाधः[१२] । **गङ्गादीनामिति** । निर्विशेषं न सामान्यमिति यावद्विशेषाणां सामान्यनिर्वाहकतया अधिकरणत्वासंभवे मुख्यार्थबाधयोग इति हेतुहेतुमद्भावः । कुशग्राहिणः सतो ग्रहणमसतः परित्याग इति विवेचनम् ।

केचित्तु, कुशलपदे न लक्षणा, दक्षत्वस्य प्रवृत्तिनिमित्तकत्वात् । व्याकरणव्युत्पत्तेः साधुत्वार्थकत्वात्-पङ्कजमण्डपतैलपदेष्वतिव्याप्त्यसंभावदव्याप्तिसंभवेन योगस्याप्रयोजकत्वात् । अन्यथा गौः शेत इत्यत्र गोपदे लक्षणा स्यात् । गमेर्डो प्रत्ययेन गमनकर्तरि व्युत्पादनात् । शयनकाले तद्बाधात् । तेन कलिङ्गः साहसिक इत्युदाहार्यमित्याहुः । तन्न । प्रतिलक्ष्यं लक्षणविधानेन कृत्सु व्युत्पत्तेः शक्तिग्राहकत्वात् । न पुनरुणादौ उणादयो बहुलमित्येकेनैव सूत्रेण मुनिना तत्सूत्रणात् । मण्डपं योजय, कुशलं याजयेति प्रयोगान्नासंभवः मण्डपतैलपदयोस्तु गृहविशेषे सार्षपादिद्रव्यविशेषे च कुशलपदवल्लक्षणैव । पङ्कजपदस्य पद्मत्वशक्त्या कुमुदादौ धीप्रयोगवारणमिति कुशलपदे यौगिकोऽर्थो मुख्य इति साधूक्तम् यच्च यद्वा कलिङ्गः साहसिक इत्याद्युदाहार्यमित्युक्तं तदपि तुच्छम्, तत्र कलिङ्गदेशस्थानां सर्वेषामेव साहसिकत्वरूपप्रयोजनलाभाय लक्षणाङ्गीकरणात् । **तथेति** । गङ्गायामिवेत्यर्थः । **तथा प्रतिपादनात्मन इति** । अन्यत्रान्यशब्द प्रयोगस्तद्धर्मप्राप्त्यर्थ इति न्यायादिति शेषः ।

**स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम् ।**

**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा ।।१०।।**

'कुन्ताः प्रविशन्ति, यष्टयः प्रविशन्ति' इत्यादौ कुन्तादिभिरात्मनः प्रवेशसिध्यर्थं स्वसंयोगिनः पुरुषा आक्षिप्यन्ते । तत उपादानेनेयं लक्षणा ।

**बालचित्तानुरञ्जनी**—विभागाभावाद्रूढिलक्षणामुपेक्ष्य प्रयोजनलक्षणां विभजते **स्वसिद्धय इति** । प्रयोजनलक्षणा द्विविधा शुद्धा गौणी च । शुद्धा उपादानलक्षणा लक्षणलक्षणा चेति द्विविधोक्ता । स्वसिद्धये पराक्षेप इत्युपादानम् । परार्थे स्वसमर्पणमिति लक्षणम् । उपादानलक्षणामुदाहरणमुखेन ब्याकरोति **कुन्ता इति** । ततः कारणात्कुन्तानामात्मोपादानेनैव प्रवृत्तत्वादुपादानलक्षणा अजहत्स्वार्थेत्यर्थः । अत्र प्रयोजनं बाहुल्यप्रतीतिः । कुन्तिनः प्रविशन्तीत्युक्ते कुन्तानां बाहुल्यप्रतीतिर्न स्यात् ।

**सारबोधिनी**—प्रयोजनवतीं विभजते **स्वसिद्धय इति** । स्वार्थान्वयसिध्यर्थमित्यर्थः पराक्षेपः परार्थाभिधानं परार्थमिति परस्याशक्यस्यान्वयबोधाय स्वसमर्पणं स्वार्थदानं स्वार्थत्याग इति यावत् । यद्वा, स्वसमर्पणं स्वाधीनकरणं प्रवाहं स्वार्थं परित्यज्य गङ्गात्वादिना तीरादिबोधनादिति परमार्थः । एवञ्च स्वार्थपरित्यागेन परोपस्थितिरुपादानं, स्वार्थपरित्यागेन परोपस्थितिर्लक्षणम् । एत एव जहत्स्वार्था-जहत्स्वार्थे । अत्र जहत्स्वार्था या वृत्ति सा जहत्स्वार्था द्वितीयान्तान्यपदार्थबहुव्रीहिः । तदन्या अजहत्स्वार्था इति समास इति[13] बोध्यम् ।

"गौरनुबन्ध्यः" इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिरा-क्षिप्यते न तु शब्देन उच्यते "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इति न्याया-दित्युपादानलक्षणा तु नोदाहर्तव्या । नह्यत्र प्रयोजनमस्ति, न वा रूढिरियम् । व्यक्त्यविना-भावित्वात्तु जात्या व्यक्तिराक्षिप्यते । यथा क्रियतामित्यत्र कर्ता । कुर्वित्यत्र कर्म, प्रविश पिण्डीमित्यादौ गृहं भक्षयेत्यादि च ।

**बालचित्तानुरञ्जनी**—केचित्तु गौरनुबन्ध्य इत्यादिकं उपादानलक्षणाया उदाहरणमाहुः । तन्मतं दूषयितुमनुवदति **गौरिति** । श्रुतेः प्रभुसंमिततया बन्धनस्यावश्यकर्तव्यतां दर्शयति **श्रुतीति** । स्वबन्धन सिध्यर्थं जात्या व्यक्तिराक्षिप्येत । अभिधाव्यक्तिरूपं विशेष्यं धर्मिणं न गच्छेत् । कुतः विशेषणे जातिरूपे धर्मे क्षीणशक्तिः विरतव्यापारा इति परमतमनूद्य तदसङ्गतमिति प्रतिजानीते **इतीति** । तत्र हेतुमाह **नह्यत्रेति** । कुन्ताः प्रविशन्तीत्यत्र बाहुल्यप्रतीतिवत् अत्र न किञ्चत्प्रयोजनमस्तीत्यर्थः । तर्हि रूढिः स्यात्तत्राह **नचेति** । निर्वचनाभावरूपबाधाभावादित्यर्थः । यद्येवं बाढं तर्हि व्यक्तिप्रतीतिरत आह **व्यक्तीति** लक्षणां विना (अविना) भावेनैवाक्षेप इत्यत्र उदाहरणान्याह **यथेति** । प्रविश गृहं, पिण्डीं भक्षयेत्यर्थः । पीनो देवदत्त इत्यत्रापि लक्षणां विना अविनाभावेनैवाक्षेप इत्याह **पीन इति** । यद्यपि भोजनाभावसहितं पीनत्वमनुपपन्नं रात्रिभोजनस्य पीनत्वस्य च कार्यकारणसम्बन्धः, दिवाभोजनरहितोऽप्ययं पीन इति पुरुषवैशिष्ट्-

यादि प्रयोजनञ्च विद्यते तथापि श्रुतार्थापत्तेर्विषयत्वेन मुख्यार्थबाधासंभवान्नेयं लक्षणेत्यभिप्रायः। दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यत इति तदुपपादकार्थकल्पनमर्थापत्तिः।

**सारबोधिनी–श्रुतीति**। श्रूयत इति श्रुतिः शब्दः। कथं मे स्यादित्युत्प्रेक्षणम्। व्यक्तिराक्षिप्यते लक्ष्यत इत्यर्थः। **क्षीणशक्तिरिति**। "नागृहीतविशेषणाबुद्धिर्विशेष्ये चोपजायत" इति न्यायात् विशेषणं प्रत्याय्य विरमात्। शब्दबुद्धिकर्मणां विरस्य व्यापाराभावादित्यर्थः। **न वा रूढिरिति**। देवदत्तादिष्वाधुनिकसंज्ञापदेषु रूढ्यभावेन लक्षणाया अप्रवृत्तेर्व्यक्तिमात्रे न लक्षणेति भावः। ननु तथापि गोपदादिषु रूढिरस्त्येव तथा च यथाकथञ्चित्प्रयोजनमपि संभवतीत्यतो दूषणान्तरमाह **व्यक्त्यविनाभावादिति**। आक्षिप्यते अनुमीयते। जातिर्व्यक्त्याश्रिता जातित्वात् इत्यनुमानसंभवे न लक्षणेत्यर्थः। नचानुमितिव्यवधानेन शब्दप्रमाण-व्याकोपस्तस्यापि शब्दपरिकरत्वात्। तत्सहकारशब्देन जातिविशिष्टधीरिति नाशाब्दत्वम्। आक्षेपे दृष्टान्तमाह **यथेति**। कृतिः साश्रया गुणत्वात् तथाकृतिः सविषया कृतित्वादित्याक्षेपेण कर्तृकर्मलाभ इति गुरुमतेनार्थाक्षेपः। कर्मकर्त्रोस्तु एतद्विहितप्रत्ययाभ्यामेव लब्धत्वान्न तयोराक्षेपः।

भट्टमते शब्दाक्षेपमाह **प्रविशेत्यादि**। **गृहं भक्षयेत्यत्रेति** शब्देन कर्मवाचक क्रियावाचक शब्द-स्वरूपाभिधानमिति वादिभेदेन दृष्टान्तभेदः। अन्यलभ्ये न लक्षणेत्यत्र दृष्टान्तमाह **पीन इति**।

पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र च रात्रिभोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्था-पत्तेर्वा तस्य विषयत्वात्।

गङ्गायां घोषः इत्यत्र तटस्य घोषाधिकरणत्वसिद्धये गङ्गाशब्दः स्वार्थमर्पयति इत्येवमादौ लक्षणेनैषा लक्षणा। उभयरूपा चेयं शुद्धा। उपचारेणामिश्रितत्वात्।

**बालचित्तानुरञ्जनी**—उपादानलक्षणां निरूप्य लक्षणलक्षणामुदाहरति **गङ्गायामिति**। सूत्रस्थं परार्थमित्येतद्व्याकरोति **तटस्येति**। स्वसमर्पणमित्येतद्व्याकरोति **गङ्गाशब्द** इति। स्वसमर्पणं नाम जह-त्स्वार्थत्वम्। लक्षणेन स्वार्थसमर्पणेन उपलक्षणाल्लक्षणेत्यर्थः। शुद्धैवेत्येतद्व्याकरोति **उभयरूपेति**। शुद्धत्वे हेतुमाह **उपचारेणेति**। भिन्नत्वेन प्रतीयमानयोरैक्यारोपणमुपचारः। यथा गौर्वाहीक इत्यत्र[१४]।

**सारबोधिनी**—दिवा भोजनाभाववतः पीनत्वं रात्रिभोजनं विना अनुपपन्नमित्यनुपपत्त्या रात्रि-भोजनं कल्प्यत इत्यत्र भट्टमते रात्रौ भुङ्क्त इति शब्दः कल्प्यते। गुरुमते तदर्थमात्रमित्याह **श्रुतेति**। श्रुतार्थापत्तिः शब्दकल्पनम्। अर्थापत्तिरर्थकल्पनम्। तस्य रात्रिभोजनस्य।

लक्षणलक्षणामुदाहरति, **गङ्गायामिति**। स्वार्थमर्पयति ददाति त्यजतीत्यर्थः। यद्वा स्वार्थमिति भावपरम्, तेन स्वार्थत्वम्। तत्र [तटे] करोति गङ्गात्वेन तीरबोधनादित्यर्थः। शुद्धैवेति व्याचष्टे **उभय-रूपा चेति**। वक्ष्यमाणा आरोपसाध्यवसाना शुद्धा गौणी च। इयमुभयरूपा शुद्धैव न गौणीत्यर्थः। अत्र हेतुमाह **उपचारेणेति**। सादृश्येन सम्बन्धेन प्रवृत्तिरुपचारः भिन्नत्वेन प्रतीयमानयोरेकारोपणमिति वा। अथ लक्ष्यलक्षकयोरभेदग्रहाभाव एव आरोपासाध्यवसानाभ्यामनयोर्भेदकस्तदेव ताटस्थ्यम्। अथवा भेदा-भेदौदासीन्यं ताटस्थ्यमिति मतं निराकरोति।

अनयोर्भेदयोर्लक्ष्यस्य लक्षकस्य च न भेदरूपं ताटस्थ्यम् । तटादीनां गङ्गादिशब्दैः प्रतिपादने तत्त्वप्रतिपत्तौ हि प्रतिपिपादयिषितप्रयोजनसंप्रत्ययः । गङ्गासंबन्धमात्रप्रतीतौ तु गङ्गातटे घोष इति मुख्यशब्दाभिधानात् लक्षणायाः को भेदः ॥१०॥

**बालचित्तानुरञ्जनी**—प्रतिपादयति **अनयोरिति** । उपादानलक्षणस्वरूपयोर्भेदयोः लक्ष्यस्य तीरादेः लक्षकस्य गङ्गादेर्भेदरूपं पूर्वोक्तोपचारलक्षणं ताटस्थ्यमिह नास्तीत्यर्थः । ताटस्थ्याभावेनैव प्रयोजनसिद्धिसिसाधयिषुः अन्वयं तां च दर्शयति **तटादीनामिति** । प्रतिपादने कृते तत्त्वप्रतिपत्तिरभेदज्ञानं भवतीति शेषः । तेन भिन्नत्वेन प्रतीयमानत्वं निरस्तम् । तस्यां च सत्यां अत्यन्तपावनत्वादि प्रयोजनसिद्धिः व्यतिरेकं दर्शयति । गङ्गासम्बन्धमात्रप्रतीतौ **मुख्यशब्दात्** लक्षणाया विशेषाभावान्न प्रयोजनसिद्धिरित्येवमुपचारेणामिश्रितत्वमित्यनयोरित्यादिग्रन्थं व्याकुर्वन्ति तदसङ्गतम् । भिन्नत्वेन प्रतीयमानयोरैक्यारोपणरूपोपचारामिश्रितत्वस्य गौरयमिति साध्यवसानभेदे विद्यमानत्वेन तस्यापि शुद्धत्वप्रसङ्गात् । ननु तत्र गुणयोग एवोपचारः, अत्र पूर्वोक्त एवोपचारस्तदमिश्रत्वं शुद्धत्वमिति चेत् शुद्धत्वे अनुगतनिमित्तभावप्रसङ्गात् । नन्वैक्यारोपणमुपचारस्तदमिश्रत्वं शुद्धत्वमिति चेत् **आयुर्घृतं** आयुरेवेदमिति वक्ष्यमाणयोः शुद्धयोः सारोपसाध्यवसानभेदयोरारोपिततादात्म्ययोः शुद्धत्वाभावप्रसङ्गः । तस्मादेवं व्याख्यानं कर्तव्यम् । उपचारो नाम गुणयोगस्तदमिश्रत्वं शुद्धत्वम् । अत एव वक्ष्यमाणौ गौर्वाहीको गौरयमिति सारोपसाध्यवसानभेदौ । जाड्यमान्द्यादिना गुणेन मिश्रितत्वात् । अनयोर्लक्षणलक्षणोपादानव्यतिरेकेण भेदकान्तरमस्तीति कश्चित्, तन्मतं दूषयति **अनयोरित्यादिना** । गङ्गायां घोष इत्यत्र लक्षकं तटस्थं ताटस्थ्यं नाम लक्षकस्य स्रोतसः गङ्गाशब्दबोध्यकोटि निवेशाभावः । परन्तु ताटस्थ्यं अनयोर्भेदयोर्भेदरूपं भेदकं न भवतीत्यर्थः ।

तत्र हेतुमाह **तटादीनामिति** । प्रतिपादने कर्तव्ये प्रयोजनसिद्ध्यर्थं तादात्म्यप्रतीतिरङ्गीकर्तव्या । तथा च ताटस्थ्यं नास्तीत्यर्थः । तादात्म्यप्रतिपत्तौ प्रयोजनसिद्धिरित्यन्वयमाह **तत्त्वप्रतिपत्तौ हीति** । व्यतिरेकमाह **गङ्गेति** । सम्बध्यत इति सम्बन्धं तीरं कर्म्मणि यत्र तन्मात्रप्रतीतावित्यर्थः । नन्वस्मिन्पक्षे जहत्स्वार्थरूपस्य लक्षणस्य तुल्यत्वात् लक्षणलक्षणासाध्यवसानलक्षणयोः को भेदः । अयं भेदः । गौणे साध्यवसानेऽसादृश्यनिबन्धनत्वं लक्षणभेदे तु तदभावः । शुद्धेऽपि साध्यवसाने आयुरेवेदमित्यादौ आरोप्यमाणगतस्य पावनत्वादेः फलरूपत्वमित्यर्थः ।

**सारबोधिनी—अनयोरिति** । ताटस्थ्यं न भेदरूपम् । न भेदकं वक्ष्यमाणसारोपसाध्यवसानाभ्यामिति शेषः । अभेदबुद्धिं विना प्रयोजनप्रतिपत्तेरभावात् । एतदेव विशदयति **तटादीनामिति** । **तत्त्वप्रतिपत्तौ** अभेदप्रतिपत्तौ । तथाचात्र **गङ्गात्वमेव** । भेदस्तत्प्रतिपत्तौ नाभेदग्रहाभावरूपं ताटस्थ्यमिति प्रतिपिपादयिषितं शैत्यपावनत्वादिकम् । इदमत्र तत्त्वम् । अन्यत्रान्यशब्दप्रयोगस्तद्धर्मप्राप्त्यर्थमिति गङ्गागतशैत्यपावनत्वादिप्रतिपत्तये तटे गङ्गादिशब्दप्रयोगः ।[१५] तत्प्रतीतिस्तु गङ्गाभेदरूपेण गङ्गात्वेन तटस्य प्रतीतावेव ।

ननु गङ्गासम्बन्धमात्रप्रतीतौ तथा सति गङ्गातटे घोष इत्यत्रापि तथा प्रतीतिः स्यादेव । तदेव वक्ष्यति **गङ्गासम्बन्धेति** । **को भेदः** कः फलातिशय इत्यर्थः । न चात्र गङ्गात्वेन भवतीत्यस्मद्विवक्षणात् तस्यैव तात्पर्यविषयत्वात् गुरुमते शब्दोपस्थितस्य शाब्दबोधविषयत्वानैयत्यात् । ननु गङ्गात्वेनावगते तीरे

कथं बाधाद्दोषान्वय इति चेन्न । धर्मिणस्तीरस्यायोग्यत्वात् । ननु तथापि बाधात् कथं तीरप्रतीतिरितिचेन्न । तत्कालबाधास्फूर्तेः । यद्वा अत्यन्तासत्यपि ज्ञानमर्थे गङ्गात्वेन शब्दः करोति हीत्याश्रयणात् अयोग्यताज्ञानस्य प्रतिबन्धकतानङ्गीकारात् । अतएव सारोपादावपि गौर्वाहीकः मुखं चन्द्र इत्यादौ गोत्वचन्द्रत्वादिना वाहीकमुखादि प्रतीतिः । ननु तर्हि शुद्धसारोपासाध्यवसानाभ्यामनयोः को भेद इति चेन्मैवम्, तयोराहार्यारोपरूपत्वात् ।

केचित्तु, तटत्वेनैव तटबोधस्ततो व्यञ्जनया शक्यलक्ष्ययोरभेदप्रतिपत्तौ शैत्यपावनत्वादि प्रत्ययः, व्यञ्जने बाधस्याप्रतिबन्धात् । बाधितबोधकत्वेनैव तस्य धर्मिग्राहकमानसिद्धत्वादित्यभेदग्रहाभावरूपं ताटस्थ्यं न भेदकं अभेदग्रहसत्त्वादित्याहुः ।

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा ।**

आरोप्यमाणः आरोपविषयश्च यत्रानपह्नुतभेदौ सामानाधिकरण्येन निर्दिश्येते सा लक्षणा सारोपा ॥

**बालचित्तानुरञ्जनी**--प्राभाकरास्तु लक्षणावृत्तेर्गौण्याश्च भेदं कुर्वन्ति तन्मतं निराकुर्वन् उपचारमिश्रां चतुर्भेदत्वेन निरूपयितुमाह **सारोपेति** । तथाशब्दः समुच्चये । सारोपेति लक्ष्यनिर्देशः अन्येति शुद्धलक्षणातो भेदः । तमेव भेदं तु शब्दद्योत्यं दर्शयति **अनपह्नुतभेदाविति** अनपह्नुत भेदावित्यनेन साध्यवसानाया भेदं दर्शयति । सारोपत्वनिर्वाहाय तथाशब्दद्योत्यमर्थमाह **सामान्याधिकरण्येनेति** ।

**सारबोधिनी--सारोपेति** । **तुशब्देन** पूर्वद्वयव्यवच्छेदः । पूर्वद्वयी शुद्धैवेत्युक्तम् । **अन्या** शुद्धा गौणीचेत्यर्थः । तथा इत्यस्य विवरणमनपह्नुतभेदाविति तथा तेनैव रूपेण यत्र समभिव्याहारे उक्तौ भवत इत्यस्य विवरणम् **सामान्याधिकरणत्वेन निर्दिश्येते इति** । यद्वा, उच्यत इत्युक्तिर्वाक्यं यत्र वाक्य इत्यर्थः । अनपह्नुतभेदौगृहीतवैधर्म्यौ । नञ्भावपाठे अगृहीतविद्यमानान्योन्याभावौ ।

**विषय्यन्तः कृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका ॥११॥**

विषयिणारोप्यमाणेनान्तःकृते निगीर्णे अन्यस्मिन्नारोपविषये सति साध्यवसाना स्यात् ॥११॥

**बालचित्तानुरञ्जनी**--मिश्रलक्षणाया एव भेदान्तरमाह **विषय्यन्तरिति** । व्याकरोति **विषयिणेति** । **निगीर्ण इति** आत्मपरिशेषीकृततादात्म्य इति यावत् । निगरणेन विषयविषयिणोरभेदप्रतिपत्तिरध्यवसानं तेन सह वर्तत इति साध्यवसानिका । अनयोरेव प्रत्येकं द्वैविध्यं दर्शयति ।

**सारबोधिनी--विषयीति** । **विषयिणा आरोप्यमाणेन अन्तः कृते निगीर्णे** विषयनिष्ठासाधारण धर्मग्रहं विना विषयिणा स्वतादात्म्येन प्रत्यायितो इदमत्र बोध्यम् । यत्र विषयनिष्ठासाधारणधर्मप्रतिपत्तिसहकृतान्यस्यान्यतादात्म्यप्रतीतिः सा सारोपा । यत्र विषयनिष्ठासाधारणधर्मप्रतिपत्त्यसहकृतान्यस्यान्यतादात्म्यप्रतीतिः सा साध्यवसानिका । इमे[१६] यथाक्रमं रूपकप्रथमातिशयोक्ती ।

**भेदाविमौ च सादृश्यात् सम्बन्धान्तरतस्तथा ।**

**गौणौ शुद्धौ च विज्ञेयौ**

इमावारोपाध्यवसानरूपौ सादृश्यहेतू भेदौ "गौर्वाहीकः" इत्यत्र "गौरयम्" इत्यत्र च ।

**बालचित्तानुरञ्जनी**--ननु गौणी नामान्या वृत्तिरस्ति। तथा च कथं शब्दार्थयोस्त्रैविध्यमिति हृदि कृत्वा गौणीं लक्षणायामन्तर्भावयन् भेदान्तरमाह। **भेदाविमाविति**। सादृश्याद्गौणौ सम्बन्धान्तरतः शुद्धौ। व्याकरोति **इमाविति**। गौर्वाहीकः इति सारोपा गौणी। वाहीको नाम देशविशेषः। तत्रत्यः पुरुषोऽपि वाहीकः। गौरयमिति साध्यवसाना गौणी।

**सारबोधिनी**--**भेदाविमौ चेति**। तथा च मुख्यार्थबाधादिहेतुत्रयसत्त्वात् गौण्याः लक्षणायामन्तर्भाव इति भावः। मुख्यार्थसम्बन्धस्तु सजातीयगुणवत्वम्। तत्तु स्वसमवेतसमवेतसमवायिसमवायित्वरूपं परम्परया न तु साक्षादित्यप्रयोजकमेतत्।

अत्र हि स्वार्थसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यमाणा अपि गोशब्दस्य परार्थाभिधाने प्रवृत्तिनिवृत्तत्वमुपयान्ति इति केचित्।

स्वार्थसहचारिगुणाभेदेन परार्थगता गुणा एव लक्ष्यन्ते न परार्थोऽभिधीयत इत्यन्ये साधारणगुणाश्रयत्वेन परार्थ एव लक्ष्यत इत्यपरे।

**बालचित्तानुरञ्जनी**--अत्र वाहीकादौ गवादिशब्दप्रवृत्तिनिमित्तावादिनां [वि] प्रतिपत्तिं दर्शयति **अत्रहीति**। स्वस्य गोशब्दस्यार्थो गोत्वं पिण्डाकृतिर्वा तत्सहचारिणा गोशब्देन लक्ष्यमाणः परार्थो वाहीकादिः। गोशब्दः वाहीकशब्देन सह अनुपपद्यमानः सामानाधिकरण्येन बाधितमुख्यार्थः सन् स्वाभिधानपुरःसरं स्वार्थसहचारिजाड्यादिगुणान् लक्षयित्वा तानेव निमित्तीकृत्य तत्सदृशवाहीकगुणद्वारेण वाहीके उपचरितस्तमभिधत्त इत्यर्थः।

**सारबोधिनी**—परार्थाभिधाने अभिधया वाहीकार्थप्रत्यायने। **केचिदित्यस्वरसोद्भावनम्**। तद्बीजन्तु गोपदस्य वाहीके सङ्केतविरहेण शक्यतारूपम्। **स्वार्थेति**। **अभेदेन** साजात्येन **गुणा एव न** तु गुणिनस्तेषां वाहीकादिशब्दादेव प्राप्तेः। तेनान्यलभ्यत्वेन नाभिधा। तदाह **नत्विति**। **अन्य इति** अयमपि पक्षो न साधु। लक्ष्यमाणगुणानां वाहीकेन सहान्वयानुपपत्तेः।

उक्तञ्चान्यत्र—(भट्टवार्तिके)

अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥इति।

अविनाभावोऽत्र संबन्धमात्रं न तु नान्तरीयकत्वम्। तत्त्वे हि 'मञ्चाः क्रोशन्ति' इत्यादौ न लक्षणा स्यात्। अविनाभावे चाक्षेपेणैव सिद्धेर्लक्षणायाः नोपयोग इत्युक्तम्।

**बालचित्तानुरञ्जनी**--अस्मिन् पक्षे प्रवृत्तिनिमित्तस्य लक्ष्यमाणत्वम्। व्यधिकरणत्वम्। गोशब्दस्यासङ्केतितवाहीकार्थाभिधायकत्वं चेति त्रितयमयुक्तं इत्यरुच्या पक्षान्तरमाह **स्वार्थसहचारीति**।

गोशब्दाभिहितार्थो गवादिः स्वसमवेतजाड्यादिगुणाभेदेन वाहीकगतान् गुणान् लक्षयति । न तु गोशब्दो वाहीकमभिधत्त इत्यर्थः । अस्मिन्पक्षे लक्षकस्य गोशब्दार्थस्य लक्ष्यस्य वाहीकगतजाड्यादेश्च सम्बन्धो न संभवति । गुणैक्यं सम्बन्ध इति चेत् न । विकल्पासहत्वात् । तत्किं तुल्यगुणत्वं तुल्यगुणवत्वं वा । नाद्यः, लक्षकस्य गवादेर्द्रव्यत्वेन गुणत्वाभावात् । नापि द्वितीयः, लक्ष्यस्य जाड्यादेर्गुणत्वेन गुणवत्वाभावात् । किञ्च जाड्यादिगुणमात्रप्रतीतौ गौर्जाड्यमिति प्रयोगप्रसङ्ग इत्यरुच्या स्वाभिमतमदुष्टं पक्षमाह **साधारणेति** । गोवाहीकयोः साधारणा गुणा जाड्यादयस्तदाश्रयणरूपेण संबन्धेन गोशब्दो वाहीकं लक्षयतीत्यर्थः । गवादिशब्दप्रवृत्तौ साधारणाश्रयत्वं निमित्तम् । अतो नोक्तदोषावकाशः । उक्तेऽर्थे संमतिमाह **उक्तञ्चेति** । अभिधेयेन स्रोतसा सम्बद्धस्तटादिस्तत्प्रतीतिस्तत्प्रत्यायकत्वं स्रोतसो धर्मः । उपचारामिश्रत्वेन शुद्धा लक्षणेत्यर्थः । उपचारमिश्रां गौणीमाह **लक्ष्येति** । पद्यार्थं प्रथमे पक्षेऽपि गवादावेव लक्ष्यमाणैर्द्वितीये तु वाहीकादौ वृत्तिर्गौणी लक्षणेति स्वमतसंमतित्वेन व्याकर्तव्यम् । तु शब्दो विशेष-द्योतकः । अविनाभावपदं व्याकरोति **अविनाभाव इति** । येन विना यन्न भवति तन्नान्तरीयकम् । अन्तरं विना तन्न भवन्नान्तरीयकम् । गेहादित्वार्थः स्वार्थे कः । एवं सम्बन्धमात्राङ्गीकारे दोषान्तरमाह **तत्त्वेहीति** । अविनाभावेऽङ्गीकृते सतीत्यर्थः । मञ्चानामचेतनत्वेन मुख्यार्थक्रोशनस्यासंभवेन सिध्यर्थं पुरुषलक्षणे कृते सा न स्यात् । मञ्चपुरुषयोरविनाभावादित्यर्थः । अविनाभावाङ्गीकारे दोषान्तरमाह **अविनाभावे चेति** । गौरनुबन्ध्य इत्यादिप्रस्तावे उक्तमित्यर्थः ।

**सारबोधिनी**—तथाहि अभेदस्यायोग्यत्वात् भेदोपस्थापकविभक्ति विना नामार्थयोर्भेदान्वये स्वरूपायोग्यत्वात् । स्वमतमाह **साधारणेति** । साधारणः सजातीयः **परार्थ एव** वाहीक एव न तु वाहीकत्वं तस्य, वाहीकपदादेव प्राप्तेः । **अपर इति** । न परेऽपरे अस्मतसगोत्रा इत्यर्थः । अत्र गोसादृश्यं लक्ष्यता-वच्छेदकमिति ये वदन्ति तेह्यतस्मादुपमाया को भेद इति त एव जानन्ति ।

वस्तुतस्तु, यद्यस्मिन्मत एवाग्रहस्तदा भेदांशाकरम्बितमेव सादृश्यं लक्ष्यतावच्छेदकमिति द्रष्टव्यम् । अत एव "उपमैव तिरोभूत भेदा रूपकमिष्यते" इत्युक्तम् ।

अन्ये तु, गोत्वेनैव गोशब्देन वाहीको बोध्यते तथा मुखादावपि । चन्द्रत्वेनैव मुखादिप्रतीति-रित्याहुः । न चायोग्यताज्ञानात्कथमेतादृशीधीरिति वाच्यम् । "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हीति" न्यायात् । आहार्यारोपाद्वा अविनाभूतप्रतीतिरिति करणोक्तिः । सम्प्रदायमते लक्ष्यार्थोपस्थितिर्वा लक्षणा । ननु क्रोशेन कालेऽव्याप्तिरस्त्येवेत्यत आह **अविनाभावेत्यादि** । भेदेऽपीति । भेदवैधर्म्ये भासमानेऽ-पीति शेषः । ताद्रूप्यं गोगतजाड्यादि । **सर्वथैवाभेदावगम इति** । वाहीकत्वाद्यसाधारणधर्मानुपस्थितेरिति भावः । सम्बन्धान्तरं प्रपञ्चयति **क्वचिदित्यादि** । अत्रोपादानलक्षणाभ्यामर्थान्तरसङ्क्रमितवाच्यात्यन्त-तिरस्कृतवाच्यौ गौणीभ्यां रूपकप्रथमातिशयोक्ती । शुद्धाभ्यां सारोपासाध्यवसानाभ्यां हेत्वलङ्कारश्च निरूपयिष्यते । इति षड्विधनिरूपणफलमिति दिक्[१७] ।

अत्र केचित् । षड्विधत्वमनुपपन्नम् । गौण्यामप्युपादानादिसंभवात् । गोवाहीकसाधारण्येन गाव एते समानीयन्त गावः इत्युदाहरणद्वयसंभवात् षड्भिरुपाधिभिः कल्पिता अस्यामिति षड्विधेति तदर्थ इत्यामनन्ति तन्न शुद्धैवेत्यत्र एव शब्दस्य सारोपान्या तु इत्यत्र तु शब्दस्यानालोचनात्तथोक्तेः । यतः स्वसादृश्यस्य स्वावृत्तित्वेन तत्रोपादानाद्यसंभवात् । सम्बन्धान्तरेण गौणत्वायोगात् । लक्षणानिरूपणस्य व्यङ्ग्योपस्थापनफलकतया तन्मुखेन तद्भेदमाह ।

आयुर्घृतम् 'आयुरेवेदम्' इत्यादौ च सादृश्यादन्यत् कार्यकारणभावादि सम्बन्धान्तरम्। एवमादौ च कार्यकारणभावादिलक्षणपूर्वे आरोपाध्यवसाने।

अत्र गौणभेदयोर्भेदेऽपि ताद्रूप्यप्रतीतिः सर्वथैवाभेदावगमश्च प्रयोजनम्। शुद्धभेदयोस्त्वन्यवैलक्षण्येनाव्यभिचारेण च कार्यकारित्वादि।

**बालचित्तानुरञ्जनी**—**आयुर्घृतमिति** शुद्धसारोपाया उदाहरणम्। **आयुरेवेदमिति** शुद्धसाध्यवसानाया उदाहरणमिति दर्शयन् पद्यस्थं सम्बन्धान्तर इत्येतद्व्याकरोति **आयुर्घृतमिति**। प्रथमादिशब्दात् इन्द्रार्था स्थूणा इत्यादि। द्वितीयात् तादर्थ्यादि। गुणाभावेन शुद्धत्वात्कथं मिश्रितत्वं तत्राह **एवमादाविति**। गुणाभावेन शुद्धत्वेपि आयुषः करणे घृते कार्यकारणभावसम्बन्धपूर्वकत्वेन कार्यभूतायुष्युपचारेण प्रवृत्ते आरोपाध्यवसाने इत्युपचारमिश्रत्वमित्यर्थः। शुद्धभेदाभ्यां सकाशाद् गौणभेदयोर्विशेषं दर्शयति **अत्रेति**। गौर्वाहीको, गौरयमित्यनयोरुदाहरणयोर्गोवाहीकयोर्भेदेऽपि प्रथमे गोभूयस्त्वप्रतीतिर्द्वितीये सर्वथाऽभेदावगमः प्रयोजनम्। गौणभेदाभ्यां शुद्धभेदयोर्वैलक्षण्यं दर्शयति **शुद्धेति**। तत्र आयुर्घृतमित्यत्र वैलक्षण्येन क्षीरादिवैसादृश्येन, **आयुरेवेदमित्यत्र** घृतं क्षीरादिवत्-आयुष्यं न व्यभिचरतीति अव्यभिचारेण कार्यकारित्वमिति विवेकः **कार्यकारण भावादिलक्षणेत्यत्र** आदिशब्दसङ्ग्राह्यान्सम्बन्धानाह।

क्वचित् तादर्थ्यादुपचारः। यथा-इन्द्रार्था स्थूणा इन्द्रः। क्वचित् स्वस्वामिभावात्। यथा राजकीयः पुरुषो राजा। क्वचित् अवयवावयविभावात्। यथा-अग्रहस्त इत्यत्राग्रमात्रे अवयवे हस्तः। क्वचित् तात्कर्म्यात् यथा अतक्षा तक्षा।

**बालचित्तानुरञ्जनी**--**क्वचिदित्यादि**। उपचारो व्यवहारः तदुदाहरति **यथेति**। अत्रेष्टार्थप्रदायकत्वं व्यङ्ग्यम्। **राजकीयः पुरुषो** राजेत्यत्रानुल्लङ्घ्यशासनत्वादिकं व्यङ्ग्यम्। हस्तावयवेन हस्तव्यापारं विदधति। सामर्थ्यादिव्यङ्ग्यम्। तक्षेत्यत्र तत्कर्मनिपुणत्वादि व्यङ्ग्यम्

**लक्षणा तेन षड्विधा ॥१२॥**

आद्यभेदाभ्यां सह ॥१२॥

सा च

**व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने।**

प्रयोजनं हि व्यञ्जनव्यापारगम्यमेव।

**बालचित्तानुरञ्जनी**—सुखावबोधार्थमुक्तभेदान् परिगणयति **लक्षणेति**। लक्षणाप्रयोजनलक्षणेत्यर्थः। तेन उक्तप्रकारेण। अनन्तरोक्तं भेदचतुष्टयमेव प्रतीयते कथं षड्विधेत्याशङ्क्य व्यवहितं भेदद्वयं स्मारयति **आद्येति**। तेन षड्भेदा उपादानलक्षणा (लक्षणलक्षणा), गौणी सारोपा, गौणी साध्यवसाना, शुद्धा सारोपा, शुद्धा साध्यवसाना चेति। व्यङ्ग्यरहिता रूढिलक्षणा एका। उक्तषड्विधा प्रयोजनलक्षणा गूढागूढव्यङ्ग्यत्वेन द्वादशविधा। एवं लक्षणायास्त्रयोदशविधत्वं दर्शयति **सा चेत्यादिना**। प्रयोजनलक्षणायाः नियमेन व्यङ्ग्यसहितत्वं प्रतिपादयति **प्रयोजनं हीति**। लक्षणायाः प्रकृतत्वात्। तच्चेत्यसङ्गतमित्या-

शङ्क्याह **तच्चेति**। अन्विष्यमाणं यद्विद्वद्भिरेव प्रतीयते तद्गूढम्।

**सारबोधिनी—व्यङ्ग्येन रहितेति**। ननु प्रयोजनवत्यां कुतः सव्यङ्ग्यत्वमित्यपेक्षायामाह **प्रयोजनं-हीति**। अत्रापि व्यङ्ग्यभेदेन द्वैविध्यमाह **तथेति**। गूढत्वं सहृदयैकवेद्यत्वम् सहृदयत्वं काव्यवासनापरिपक्वबुद्धित्वम्। सहृदयासहृदयवेद्यत्वमगूढत्वम्।

**तच्च गूढमगूढं वा**

तच्चेति व्यङ्ग्यम्। गूढं यथा

मुखं विकसितस्मितं वशितवक्रिमप्रेक्षितम्
समुच्छलितविभ्रम गतिरपास्तसंस्था मतिः।
उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं
बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥६॥

**बालचित्तानुरञ्जनी—**प्रयोजनलक्षणायाः गूढव्यङ्ग्यमुदाहरति **गूढं यथेत्यादिना**। **मुखमिति** विकासेन पुष्पधर्मेण तत्रासंभवता असंकुचितत्वसम्बन्धातिशयत्वं लक्ष्यते, सौरभादि व्यङ्ग्यम्। स्वाधीनकृतं चक्रत्वं येन तत्प्रेक्षणं, वशीकरणेन चेतनधर्मेण स्वाभिमतविषये प्रवृत्तिरूपेण सम्बन्धेन स्वाधीनत्वं लक्ष्यते, उचितपुरुषाभिलाषित्वं व्यङ्ग्यम्। बहुविलासागतिर्गमनं, अत्र समुच्छलितत्वेन उद्गमरूपेण मूर्तिधर्मेण कार्यकारणभावसम्बन्धाद्बाहुल्यं कारणं लक्ष्यते, समस्ततरुणहरिणवागुरत्वं व्यङ्ग्यम्। संस्था मर्यादाबुद्धिः। मर्यादात्यागेन चेतनधर्मेण कार्यकारणभावसंबन्धादस्थैर्यं लक्ष्यते। आलिङ्गनयोग्यत्वं व्यङ्ग्यम्। असम्बन्धेन मांसलत्वेन उद्धुरं उत्कटम्, अत्र उद्धुरत्वेन उत्क्रान्तधुरत्वेन वृषभादिधर्मेण पीनत्वसादृश्यसम्बन्धादुत्कटत्वं लक्ष्यते। मनोहरत्वकामायमानत्वादि व्यङ्ग्यम्। इन्दुर्वदनं यस्या इत्युपचारो यदा तदा इन्दुशब्दः बाधितमुख्यार्थः स च सुवृत्तत्वादिगुणयोगाद्वदनं लक्षयति। विरहितापोपशान्तिर्व्यङ्ग्यम्। उद्गमः उदयः अङ्कुरादिधर्मः तरुणिमनि अनुपपन्नः अत उद्गमशब्दो बाधितस्वार्थः सन् नवोद्भेदसाम्यात् तारुण्यं लक्षयति, सर्वजनाह्लादकत्वं व्यङ्ग्यम्। मोदनेन कार्यकारणसम्बन्धादनियन्त्रितत्वं कारणं लक्ष्यते, स्पृहणीयत्वं व्यङ्ग्यम्। निमित्तान्तरादपि भवता समुच्छलितादिबाहुल्यादिना धूमादेरिव व्याप्त्याभावाल्लक्षणैवाङ्गीकार्या।

**सारबोधिनी—मुखमिति** विकासः पुष्पधर्मः। स्मितेऽसंभवन् **प्रकाशं लक्षयति**। अतिमनोहारित्वं व्यङ्ग्यम्। असङ्कुचितत्वं सम्बन्धः। एवं वशितसमुच्छलितापास्तसंस्थमुकुलितोद्धुरमोदनशब्दैः स्वाधीनत्वबाहुल्यविषयशतसंसारित्वयोग्यत्वाजृम्भणानि लक्ष्यन्ते। तदतिशयो व्यङ्ग्यः। अभिमतविषयप्रवृत्तिकारित्वं कार्यकारणभावः। अपरत्रापि स एव। निबिडावयवत्वं पुनरत्रापि कार्यकारणभावः। यथोत्तर सम्बन्धो बोध्यः। संस्था मर्यादा। प्रकृत्यैवेयमिन्दुवदना तत्र यौवनोद्गम इति अहो विदग्धानां यूनां पतितोऽनर्थ इति। अत एव **बतेति** खेदे।

अगूढं यथा—

श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।
उपदिशति कामिनीनां यौवनमद एव ललितानि ॥१०॥

अत्रोपदिशतीति ।

**बालचित्तानुरञ्जनी**—अगूढं व्यङ्ग्यमुदाहरति **अगूढं यथेति**। लक्ष्म्या अतिशयसम्बन्धात् मूर्खा अपि चतुरचरित्राणां ज्ञातारः चतुर व्यापारान् विदन्ति। कर्मणि षष्ठी। उक्तमर्थमर्थान्तरन्यासेन साधयति उपदिशतीति। कामिनीनां तारुण्यमद एव विलासान् शिक्षयति। एवं श्रीपरिचयोऽपि चातुर्यं शिक्षयतीत्यर्थः अत्रोपदिशतीत्यगूढव्यङ्ग्यमिति शेषः। उपदेशेन च अज्ञातज्ञानस्य विशेषेण सामान्यविशेषभावसम्बन्धाद-ज्ञातज्ञापनं सामान्यं लक्ष्यते। अनायासेन शिक्षणं व्यङ्ग्यम्। उपदेशशब्देनैव शिक्षादानप्रकटनात् शिक्षा-रूपव्यङ्ग्यस्य वाच्यायमानत्वेनाचमत्कारकारित्वात् अगूढव्यङ्ग्यत्वमित्यर्थः स्थूलमार्गेणोक्तम्। वैचित्र्य-मुपसंहरति।

**सारबोधिनी—श्रीपरिचयादिति**। ललितहावः "स्त्रीणां विलासा विब्वोकविभ्रमा ललितादयः। हेलालीलेत्यमी हावाः क्रियाः शृङ्गारभावजा" इत्यमरः। **अत्रे`ति** वाचा कर्मणा प्रवर्तनादुपदेशः। स च मदेऽसंभवन् प्रकाशं लक्षयति। अन्यनिरपेक्षत्वमनायासकारित्वं वा फलम्।

**तदेषा कथिता त्रिधा ॥१३॥**

अव्यङ्ग्या गूढव्यङ्ग्या अगूढव्यङ्ग्या च ॥१३॥

**तद्भूर्लाक्षणिकस्तत्र व्यापारो व्यञ्जनात्मकः।**

शब्द इति संबध्यते तद्भूस्तदाश्रयः ॥

**बालचित्तानुरञ्जनी—तदेषेति**। तत्तस्मात् कथिता उक्ता। एषा लक्षणा। रूढौ व्यङ्ग्यरहितत्वेन प्रयोजने गूढागूढव्यङ्ग्यत्वेन च त्रिविधेत्यर्थः। तद्व्याकरोति **अव्यङ्ग्यति**। प्रसङ्गतः सावान्तरभेदां लक्षणां निरूप्य तद्द्वारा पूर्वोद्दिष्टं लाक्षणिकशब्दं लक्षयति **तद्भूरिति**। स्याद्वाचकेति सूत्रस्थं दूरव्यवहितं **शब्दं** शब्दविशेष्यत्वेनानुस्मारयति। **शब्द इति**। तद्भूरिति व्याचष्टे **तदिति**। तस्या लक्षणायाः आश्रयः। प्रवाहस्य लक्षणाश्रयत्वेन उपचारात्तद्वादकोऽयमपि लक्षणाव्यापाराश्रय इत्यर्थः। वाचकलाक्षणिकौ शब्दौ लक्षयित्वा व्यञ्जनमुखेन व्यञ्जकं लक्षयितुं व्यञ्जनास्वरूपमाह **तत्रे`ति**। तत्र पावनत्वादौ प्रयोजने विषय इत्यर्थः।

**सारबोधनी—तद्भूरिति**। ततो भवतीति भ्रमनिरासाय **तदाश्रय इति**। व्यञ्जकं लक्षयितुं तदुपाधौ व्यञ्जनायां वादिविप्रतिपत्तिनिरासायाह **तत्रे`त्यादि**। यद्यप्यभिधामूला व्यञ्जना प्रथमं निरूपयितुमुचिता प्रथमोपस्थितत्वात् तथापि संनिहितत्वात्प्रथमं लक्षणामूलव्यञ्जनानिरूपणमिति भावः। तत्र प्रयोजनज्ञाने परिशेषानुमानमाह।

कुत इत्यत आह ।

**यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते ॥१४॥**

**फले शब्दैकगम्येऽत्र व्यञ्जनान्नापरा क्रिया ।**

प्रयोजनप्रतिपिपादयिषया यत्र लक्षणया शब्दप्रयोगस्तत्र नान्यतस्तत्प्रतीतिरपि तु तस्मादेव शब्दात् । न चात्र व्यञ्जनादृतेऽन्यो व्यापारः ।

**बालचित्तानुरञ्जनी**—उत्तरसूत्रं हेतुत्वेनावतारयति कुत इति । यस्य प्रयोजनस्य ज्ञानार्थं लक्षणाश्रीयते **अत्रे**ति । तस्मिन् प्रयोजने शब्दादेवैकस्मात् ज्ञेये । अन्यथा लक्षणाया मूलहानिरेव स्यात् । एतेन शब्दैकगम्यत्वे लक्षणोपस्थितिरेव हेतुत्वेनोक्ता भवति । पद्यं व्याकरोति **प्रयोजने**ति । अपरो व्यापारोऽभिधा लक्षणा वा न संभवतीत्यमुमेवार्थं प्रतिपादयति । तथाहि ।

**सारबोधिनी**--**यस्ये**ति । **शब्दैके**ति । एकपदेनानुमानादिव्युदासः । क्रियापदार्थमाह **व्यापार इति** ।

तथाहि ।

**नाभिधा समयाभावात्**

गङ्गायां घोष इत्यादौ ये पावनत्वादयो धर्मास्तटादौ प्रतीयन्ते न तत्र गङ्गादिशब्दाः सङ्केतिताः ॥

**हेत्वभावान्न लक्षणा ॥१५॥**

मुख्यार्थबाधादित्रयं हेतुः ॥१५॥

**लक्ष्यं न मुख्यं नाप्यत्र बाधो योगः फलेन नो ।**

**न प्रयोजनमेतस्मिन् न च शब्दः स्खलद्गतिः ॥१६॥**

**बालचित्तानुरञ्जनी**--**नाभिधे**त्यादि । समयः सङ्केतः । सूत्रं व्याचष्टे **गङ्गायामि**ति । तत्पावनत्वादौ । हेत्वभावादिति सूत्रपदं व्याचष्टे ।

**मुख्यार्थे**ति । मुख्यार्थबाधः सम्बन्धः प्रयोजनसद्भावश्चेति हेतुत्रयम् । तदभावं प्रतिपादयति । **तथाचे**ति । लक्ष्यं तटादि । गङ्गाशब्दस्य मुख्यार्थो न । अत्र मुख्यार्थे । तटादौ घोषाधिकरणत्वासंभवरूपो बाधोऽपि नास्ति । अनेन द्वितीयहेतुर्निरस्तः । प्रयोजनेन पावनत्वादिना तटादेर्मुख्यार्थस्य बाधोऽपि नास्ति । अनेन द्वितीयहेतुर्निरस्तः । प्रयोजनस्य लक्ष्यत्वाभावे हेत्वन्तरमाह **न चे**ति । स्खलन्ती बाधादित्रयसव्यपेक्षा गतिरवबोधनशक्तिर्यस्य शब्दस्य । मुख्यार्थबाधादित्रयसव्यपेक्षत्वेन बोधकत्वं स्खलद्गतित्वमित्यभिप्रायः ।

**सारबोधिनी**--**समयाभावादि**ति । समयः सङ्केतः । **मुख्ये**ति । [मुख्यार्थबाधः मुख्यार्थयोगः]

रूढिप्रयोजनान्यतरच्चानेकत्वम्, अन्यथा त्रित्वासंभवात्। लक्षणया प्रयोजनधीर्लक्ष्यप्रतीत्यनन्तरं स्यात्तथा च तद्बाधपुरःसरा भवन्ती मुख्यार्थबाधमपेक्ष्य जायमाना सा तदा स्याद्यदि तटं मुख्योऽर्थः स्यात्तच्च नेत्याह।

यथा गङ्गाशब्दः स्रोतसि सबाध इति तटं लक्षयति तद्वत् यदि तटेऽपि सबाधः स्यात् तत् प्रयोजनं लक्षयेत्। न च तटं मुख्योऽर्थः। नाप्यत्र बाधः। न च गङ्गाशब्दार्थस्य तटस्य पावनत्वाद्यैर्लक्षणीयैः संबन्धः। नापि प्रयोजने लक्ष्ये किञ्चित् प्रयोजनम्। नापि गङ्गाशब्दस्तटमिव प्रयोजनं प्रतिपादयितुमसमर्थः ।१६।।

**बालचित्तानुरञ्जनी--यथेत्यादि। पावनत्वाद्यैरिति** प्रतिपिपादयिषितैरन्तत्यपावनत्वाद्यैरित्यर्थः। पावनत्वादीनां सम्बन्धस्तटस्यास्त्येव। न च शब्दः स्खलद्गतिरिति व्याचष्टे **नापि गङ्गाशब्द इति**। यथायं शब्दस्तटं प्रतिपादयितुमसमर्थः बाधादित्रयसापेक्षः तथा प्रयोजनं प्रतिपादयितुमसमर्थो न भवतीति व्यतिरेके दृष्टान्तः। असामर्थ्यं सामान्यापेक्षत्वम्। अन्यापेक्षे असमर्थ इति प्रयोगदर्शनात्। पूर्वं प्रयोजनस्य लक्ष्यत्वमेव नास्तीत्युक्तम्। इदानीं लक्ष्यत्वेऽपि दूषणमाह।

**सारबोधिनी—नापि गङ्गाशब्द इति**। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। गङ्गानिष्ठशैत्यपावनत्वादीनां तीरे बाधितत्वाल्लक्षणया तीरे गङ्गाशब्दस्य शैत्यपावनत्वादि बोधयितुमसामर्थ्यात्। तदेतदुक्तं **स्खलद्गतिरिति**। ननु कथं तथापि व्यञ्जनयापि बोध्यतामिति चेन्न। तस्याबाधितबोधकत्वेन धर्मिग्राहकमानसिद्धत्वात्।

"असमर्थ" इति पाठे ननूक्तं दूषणैः शक्तिलक्षणयोरभावेन शब्दो न प्रयोजनं बोधयत्येवेत्याह **न च शब्द इति**। **स्खलग्दतिरिति** अप्रतिपादकः असमर्थः गङ्गाशब्दात्पावनत्वादि न प्रतीयते। एवं न, तथाचोक्तम् वृत्तिभ्यामनिर्वाहे वृत्त्यन्तरमादायैव पर्यवस्यतीति भावः। एतदेव व्याचष्टे **नापि गङ्गाशब्द इति**।

अन्ये तु-ननु पावनत्वाद्यन्वये तात्पर्यमिति तदनुपपत्त्या लक्षणाया दुर्वारत्वमित्यत आह **न च शब्द इति**। स्खलन्ती मुख्यार्थबाधाद्यनुसन्धानेन विलम्बिता भवन्तीत्यर्थः। गतिः प्रसरणं बोधकता यस्य न चैवं प्रयोजने लाक्षणिकतटप्रत्ययानुपदमेव झटित्येव व्यञ्जना तत्प्रतीतेः। तेन विवक्षितानवयानुपपत्त्यभावान्न लक्षणाप्रसङ्ग इत्याह। **तटमिवेति**। असामर्थ्यं बोधकत्वमान्यर्थम्। समर्थ इति पाठे पूर्वोक्तैव व्याख्या। **प्रयोजनञ्चेति** प्रयोजनपरम्परायां लक्षणापरम्परायां विषयान्तरसञ्चारेण, यतोऽनिवृत्तिस्तस्या अग्रिमलक्षणायाः निःप्रयोजनत्वेनमूलभूतसप्रयोजनलक्षणायामपि।

**एवमप्यनवस्था स्याद् या मूलक्षयकारिणी।**

एवमपि प्रयोजनं चेल्लक्ष्यते तत् प्रयोजनान्तरेणेति तदपि प्रयोजनान्तरेणेति प्रकृताप्रतीतिकृत् अनवस्था भवेत्।।

ननु पावनत्वादिधर्मयुक्तमेव तटं लक्ष्यते। गङ्गायास्तटे घोष इत्यतोऽधिकस्यार्थस्य प्रतीतिश्च प्रयोजनमिति विशिष्टे लक्षणा तत् किं व्यञ्जनयेत्याह—

**प्रयोजनेन सहितं लक्षणीयं न युज्यते ॥१७॥**

**बालचित्तानुरञ्जनी**—सूत्रं व्याचष्टे **एवमपीति** । सप्रयोजनं प्रयोजनान्तरेण सहितं लक्ष्यम् । तदपि प्रयोजनान्तरसहितं तटादीत्यतो नोक्तदोषप्रसङ्ग इत्येतच्छङ्कानिराकरणपरत्वेनानन्तरसूत्रमवतारयति **नन्विति** । प्रयोजनविशिष्टस्य लक्ष्यत्वे प्रयोजनान्तरं वाच्यमित्याशङ्क्याह **गङ्गायास्तट इति** । अधिकस्यार्थस्य पावनत्वादेः । चकारो भिन्नक्रमः । पावनत्वादि लक्ष्यं प्रयोजनञ्चेत्यर्थः ।

कुत इत्याह—

**ज्ञानस्यविषयो ह्यन्यः फलमन्यदुदाहृतम् ।**

प्रत्यक्षादेर्नीलादिर्विषयः फलं तु प्रकटता संवित्तिर्वा ॥

**विशिष्टे लक्षणा नैवम्**

व्याख्यातम् ।

**विशेषाः स्युस्तु लक्षिते ॥१८॥**

तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः । तच्च व्यञ्जन-ध्वनन-द्योतनादि शब्दवाच्यमवश्यमेषितव्यम् ॥१८॥

**बालचित्तानुरञ्जनी**—प्रतिज्ञातेऽर्थे उत्तरं सूत्रं हेतुत्वेनावतारयति **कुत इति** । सूत्रं व्याकरोति **प्रत्यक्षादेरिति** । ज्ञायतेऽनेनेति ज्ञानं प्रमाणं इत्यभिप्रेत्योक्तम् । **प्रत्यक्षादेरिति** । भाट्टमतानुसारेण ज्ञेयधर्मः फलमित्युक्तम् । वैशेषिकमतानुसारेण संवित्तिर्ज्ञातृधर्मः फलमित्युक्तम् ।

उक्तं विशिष्टस्य लक्ष्यत्वाभावमुपसंहरति **विशिष्ट इति** । विशिष्टे लक्षणा नैवमित्येतद्व्याकर्तव्यमित्याशङ्क्याह **व्याख्यातमिति** । व्याख्यातप्रायमित्यर्थः । लक्ष्यत्वप्रयोजनत्वयोर्भिन्नविषयत्वेन तदुभयमेकस्य न संभवतीति भावः ।

ननु पावनत्वादयो यदि न लक्ष्यास्तर्हि कथं ज्ञायन्त इत्यत आह **विशेषा इति** । पावनत्वादयो विशेषाः लक्षिते तटादौ व्यञ्जनव्यापारेण गम्याः स्युरित्यर्थः । सूत्रं व्याकरोति **तटादिति** । विलक्षणशब्दव्यवहारादपि लक्षणाया व्यञ्जनस्य भेदं दर्शयति **तच्चेति** । अर्थगता व्यञ्जना प्रतिपादितेति उक्तानुवादपूर्वकं शब्दगतव्यञ्जनाप्रतिपादनपरत्वेनोत्तरं सूत्रमवतारयति **एवमिति** । अनेकार्थस्य अनेके अर्था वाच्यत्वेन यस्य तस्य शब्दस्य संयोगाद्यैर्वाचकत्वे वाचिकायां शक्तौ नियमिते सति अवाच्यस्य व्यङ्ग्यस्यार्थस्य ज्ञानकृद्यो व्यापारः सा शब्दगता व्यञ्जना ।

**सारबोधिनी**--प्रयोजनवैमुख्यं स्यात्तदाह **प्रकृतेत्यादि** । मूलक्षयकारिणीत्यस्य व्याख्या **प्रकृताप्रतीतिकृदिति** । **ज्ञानस्येति** । यथा कारणत्वेन ज्ञानाद्विषयोऽभिधीयते तथा कार्यत्वेन फलमपीत्यर्थः । अन्यथा तीरत्वज्ञानपावनत्वज्ञानयोरभेदे जन्यजनकतानुपपत्तिरिति भावः **फलमिति** । ननु केनोच्यते तत्फलमिति । किन्तु विशिष्टलक्षणातो विशिष्टप्रतीतिरित्युक्तमिति चेन्न । अनवबोधात् । तथाहि-शक्यसम्बन्धो लक्षणा ।

न चात्र शक्येन गङ्गाप्रवाहरूपेण तीरस्य पावनत्वादिविशिष्टस्य एकः सम्बन्धोऽस्तीति कथं विशिष्टे लक्षणा न च तीरत्व इव पावनत्वेपि तीरलक्षणातो लक्षणान्तरं स्वीकार्यं तथा च ताभ्यां तीरत्वविशिष्टस्येव पावनत्वादिविशिष्टस्य प्रतीतिरिति वाच्यम् । तथा च पावनत्वादिबोधिका वृत्तिरेव व्यञ्जना लक्षणातो बोधितबोधकत्वादिरूपवैधर्म्यसत्त्वात् । न च लक्षणाया एव तथात्वं कल्प्यतां धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादिति वाच्यम् । लक्षणायाः क्वाप्येवमकल्पनात् । अपि च न हि मया षट्पदार्थभिन्ना नाम काचिद्वृत्तिरङ्गीक्रियते येन धर्म्यन्तरकल्पनागौरवं स्यात्, किन्तु तथाविधवैधर्म्यशालिन्याः कस्याश्चिद्वृत्तेः व्यञ्जनेति नाम ख्याप्यते । तथा च नाम्नि परं विवादो न धर्मिणीति धर्म्यन्तरकल्पना । न च तीरत्वेन लक्षणा किन्तु तीरत्वेन शक्यसम्बन्धग्रहात्तीरत्वोपस्थितिरिति वाच्यं तर्हि घटत्वेऽपि तथा संभवात् । घटपदस्यापि न घटत्वे शक्तिः स्यादिति प्रतिवन्दि संभवात् । इति लक्षणातो वैधर्म्यवती काचिद् व्यञ्जनावृत्तिरङ्गीकार्यैव ।

वस्तुतस्तु-अनेनेदं नोक्तमपि तु व्यञ्जितमिति प्रतीत्योर्वैलक्षण्यादभिधातो व्यञ्जना पृथक् । यथा अनुमिनोमि न साक्षात्करोमीत्यनुभवबलात् प्रत्यक्षादनुमानं पृथगिति ।

नवीनास्तु । तद्धीजनकत्वमेव व्यञ्जना । सैव सर्वत्र वृत्तिर्नाभिधा । न लक्षणा । शक्तिशरीरघटकत्वेन नैयायिकैरपि तदभ्युपगमात् । तथा चास्माच्छब्दादयमर्थो बोद्धव्य इत्यंशस्यैव वृत्तित्वं व्यञ्जनात्वमिति तत्त्वम् । अन्यत्तु **काव्यपरीक्षायां** द्रष्टव्यम् ।

प्रकटता ज्ञानता संवित्तिर्हानोपादानापेक्षा बुद्धिः । उपसंहरति **विशिष्टेति** । एवमुक्तयुक्त्या कथं प्रतीतिरित्यत आह **विशेषा इति** । लक्षिते इत्यस्य विवरणं **तटादाविति** । **विशेषा** इत्यस्य पावनत्वादय इति स्युरित्यस्य व्यापारान्तरेण गम्या इत्यनेनान्वयः ।

लाक्षणिकमात्रस्य व्यञ्जकत्वमिति शङ्कां निरस्यति **एवमिति** । लक्षणामूलं तदन्वयव्यतिरेकानुविधायि । एवमभिधामूलमित्यपि । **वाचकत्वे नियन्त्रित इति** ।

एवं लक्षणामूलं व्यञ्जकत्वमुक्तम्, अभिधामूलंत्वाह—

**अनेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते ।**
**संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनम् ॥१९॥**

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥

इत्युक्तदिशा ।

**बालचित्तानुरञ्जनी**—संयोगादीनां वाचकत्वे **सङ्गतिमाह संयोग इत्यादि** । **अर्थविशेषस्यानवधारणेऽवधारण हेतव इत्यर्थः** । सूत्रत्वभ्रमं निराकरोति **इत्युक्तदिशेति** ।

**सारबोधिनी**—नियन्त्रणमपरार्थस्मृतिप्रतिबन्धः । **अवाच्य इति** । तदानीमभिधया बोधयितुमशक्य इत्यर्थः । एकस्य वर्णसमूहात्मनः पदस्यानेकत्रानेकैव शक्तिः शक्यतावच्छेदकभेदेन तद्भेदात् । ततश्च

यस्मिन्नर्थे तात्पर्यग्राहकं प्रकरणादिकमवतरति उद्बुध्या तद्गोचरशक्त्या तदर्थोपस्थापनमन्यस्याश्च तिरोधानं तथा निरुध्याभिधया बोधयितुमशक्यस्यार्थस्य बोधने प्रभवन्ती वृत्तिर्व्यञ्जना नाम।

नन्वभिधाविरोधे कथं तद्विषयार्थप्रतीतिरिति चेदनुभवं पृच्छ नास्मान्। व्यञ्जनावृत्तिसाधनग्रहिलानां भवतामनुभवे नास्माकमास्थेति चेत् सुगन्धिमांसभोजनप्रकरणे सुरभिमांसं भवान् भुङ्क्ते इत्थमभिधाने विदग्धस्य भोक्तुर्गोमांसज्ञाने जुगुप्सा न स्यात्।

ननु निरुद्धाया एवाभिधायाः फलबलेन पुनः प्रसरणं कल्प्यताम्। न पुनर्व्यञ्जना, धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादितिचेन्न। प्रकरणादेः प्रतिबन्धकस्य तथैवानुवृत्तौ तस्याः प्रसरणानुपपत्तेः स्वविषयज्ञानोत्पादनया प्रकरणादेरुपक्षीणत्वमित्यपि न, कारणीभूताभावप्रतियोगित्वस्य प्रतिबन्धकस्य तस्मिन् सत्त्वात्। यत्र तु न प्रकरणादिकं तत्राभिधानियन्त्रणाभावादेकसम्बन्धज्ञानस्यापरसम्बन्धिस्मारकत्वादुद्बुद्धस्वसंस्कारेण द्वयोरप्युपस्थितिर्यथा-येनध्वस्तमनोभवेनेत्यादौ। अत्रोपश्लोक्यमानस्य प्रकृतत्वेनाप्रकृतयोरुमाधव माधवयोर्द्वयोरुपस्थितिः विशेषस्मृतावेव। तात्पर्यग्राहकापेक्षणादेवंविधस्थले च तदनपेक्षणात्। तद्वक्ष्यति-**विशेषस्मृतिहेतव इति**। अथ तर्हि जलदभुजगजं विषमित्यत्र कथं गरलस्य व्यङ्ग्यता भुजगपदसांनिध्येन गरलशक्त्या विकारसंभवादिति नाशङ्कनीयम्। तद्व्यङ्ग्यत्वोपायस्य गुणीभूतव्यङ्ग्योल्लासे वक्ष्यमाणत्वात्।

ननु तथापि "भद्रात्मन" इत्यादौ कथं व्यञ्जनापदाद् नानार्थत्वप्रतिसन्धानस्य तात्पर्यार्थग्राहकस्य संभवेनाभिधायाः अनियन्त्रणात्? मैवम्। पदस्य नानार्थत्वज्ञानस्यार्थज्ञानाधीनत्वेनान्योन्याश्रयापत्तेः।

अथ प्रथमार्थं प्रत्याय्य पदानां विरमात् कथं द्वितीयार्थधीः, नचावृत्या अगृहीततात्पर्यार्थे तदसंभवात्। तदुक्तं तात्पर्यग्रहसत्त्वेत्वावृत्तिरिति। मैवम्। प्रथमार्थप्रतीतेरेव व्यापारत्वात्। अत एव वक्ष्यति "यत्सोऽर्थान्तरयुक् तथा। अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मत" इति। केवलं शब्दान्वयव्यतिरेक दर्शनाद्व्यञ्जनायाः शाब्दीत्वम्।

केचित्तु-अन्वयबोधे संस्कारोपनीतं पदमपि भासते। तदुक्तम्। "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं शब्दः शब्देन भासयेत्" इति। न च शक्त्या तदेव बोधकमस्तु प्रकरणादिना तन्नियन्त्रणात्। तेन प्रथमान्वयबोधनात्तेभ्यः पदेभ्यः एव द्वितीयार्थधीरित्याहुः।

**संयोग इत्यादि**। सम्यक् योगः संयोगः प्रसिद्धसम्बन्धः। **विप्रयोगः** प्रसिद्धसम्बन्धविरहो विभागरूपो गुणो वा। **साहचर्यमेकस्मिन्** कार्ये परस्परसापेक्षत्वम्। **विरोधिता** वध्यघातकत्वं सहानवस्थानञ्च। **अर्थः** फलम्। अनल्पसाध्यम्। **प्रकरणं** वक्तुः प्रतिपाद्यस्य बुद्धिस्थत्वम्। लिङ्गमसाधारणो धर्मः। शब्दस्याव्यभिचरितस्य संनिधिः। सामानाधिकरण्यं सामर्थ्यम् तत्कारणनियमः। **औचिती** योग्यता। **देशकालौ** तद्विशेषौ। **व्यक्तिः** स्त्रीपुंस्त्वादिः। **स्वरा** उदात्तादयः। **अनवच्छेदे** कतमोऽर्थोऽत्र विवक्षित इति सन्देहे, न तु पदार्थोपस्थितिं विना कथं संयोगादिज्ञानं संस्कारादिना ज्ञाने वा प्रकृतपदार्थोपस्थित्वे कथं सन्देह इति चेदुच्यते। यावत्स्वर्थेषु शब्दानां प्राक् सम्बन्धोऽवधारितः तावच्चान्यनिरोधः संस्मृतः सन् कुरुते।

सशङ्खचक्रो हरिः। अशङ्खचक्रो हरिरित्युच्यते। रामलक्ष्मणाविति दाशरथी।

रामार्जुनगतिस्तयोरिति भार्गवकार्तवीर्ययोः। स्थाणुं भज भवच्छिदे इति हरे। सर्वं जानाति देव इति युष्मदर्थे। कुपितो मकरध्वज इति कामे। देवस्य पुरारातेरिति शम्भौ। मधुना मत्तः कोकिल इति वसन्ते। पातु वो दयितामुखमिति सांमुख्ये। भात्यत्र परमेश्वर इति राजधानीरूपात् देशाद्राजनि। चित्रभानुर्विभातीति दिने रवौ रात्रौ वह्नौ। मित्रं भातीति सुहृदि मित्रो भातीति रवौ। इन्द्रशत्रुरित्यादौ वेदे एव न काव्ये स्वरो विशेष-प्रतीतिकृत्।

**बालचित्तानुरञ्जनी**—उक्तमार्गेण संयोगस्य निश्चायकत्वमुदाहरति **सशङ्खेति**। अत्र शङ्खादि-संयोगेन विष्णुर्निर्धार्यते। विप्रयोगस्योदाहरणं **अशङ्खचक्रो हरिरिति**। प्रसक्तिपूर्वकत्वात्प्रतिषेधस्य विष्णो-रन्यत्र प्रसक्त्यभावाद्विष्णुरेवोच्यत इत्यर्थः। साहचर्यस्योदाहरणं **रामेति**। तयोः रामार्जुनयोरिव गति-र्लक्षणया विरोधः। अत्र विरोधात्परशुरामकार्त्तवीर्ययोरुभयोरपि निश्चयः। प्रयोजनस्य **स्थाणुमिति**। संसारविनाशनमीश्वरादन्यत्र न संभवतीतीश्वर एवेत्यर्थः। प्रस्तावस्य **सर्वमिति**। लिङ्गस्य चिह्नस्य **कुपित इति**। कुपितत्वं लिङ्गं समुद्रस्य कोपाभावात्। अन्यशब्दसान्निध्यस्य **देवस्येति**। पुरारातेरिति सान्निध्या-द्देवः शिव एवेत्यर्थः। सामर्थ्यस्य **मधुनेति**। कोकिलमदने सामर्थ्यं वसन्तस्यैव न मद्यादेरित्यर्थः। औचित्याः **पात्विति**। इष्टप्राप्तानिष्टनिवृत्त्याद्यनेकार्थत्वेपि इष्टप्राप्तेरेवौचित्यात्सांमुख्यम्। देशस्य **भातीति**। अत्र राजधान्याम्। कालस्य **चित्रेति**। चित्रभानुशब्दस्यानेकार्थत्वेपि दिने रवौ प्रयोगात्सूर्यवह्न्यो-र्निश्चयः। व्यक्तेः पुंनपुसकादेः। **मित्रमिति**। मित्रशब्दस्यानेकार्थत्वेपि सुहृद्वाचकत्वे नपुंसकलिङ्गः सूर्य-वाचकत्वे पुंलिङ्गः। स्वरस्य उदात्तादेः **इन्द्रेति**। इन्द्रशत्रुः शातयिता यस्येति बहुव्रीहौ प्रकृत्या पूर्वपद-मिति प्रकृतिस्वरे शेषनिपाते आद्युदात्तत्वं ततो बहुव्रीहिनिश्चयः। इन्द्रस्य शत्रुर्यः स इति तत्पुरुषे समास स्यान्त्योदात्तत्वं शेषनिपातस्तत्र तत्पुरुषनिश्चयः। उदात्ताद्यपेक्षया वेद एव न काव्य इत्युक्तम्।

**सारबोधिनी**—मथ्नामि कौरवशतमित्यादौ काकुस्वरेणाप्यर्थविगतेरिष्टत्वात्।

अन्यनिरोधं अन्यमर्थमगृहीतसम्बन्धं निरुध्यावेदयेदिति दिशा युगपदुपस्थितेष्वर्थेषु तात्पर्य-सन्देहानन्तरं प्रकरणादिसहकृतात्पुनरनुसहितात्तस्मादेव पदात्प्रकृतार्थोपस्थितावनुपपत्त्यभावात् विशेषः प्रकृतः। **सशङ्खचक्र इति**। हरिपदमुच्यते नियम्यत इति शेषः। एवमन्यत्र लक्षणासाहचर्येण रामपदस्य दशरथपरत्वं वध्यघातकविरोधितायां रामो भार्गवः, अर्जुनः कार्तवीर्यः इति तयोः कयोश्चित्प्रकृतयोः। सहानवस्थानलक्षणाविरोधे तु च्छायातपावित्युदाहार्यम्। स्थाणुमिति भवच्छेदरूपार्थस्य वृक्षखण्डासाध्य-त्वात्स्थाणुपदं हरपरं, छिद इति क्विबन्ताच्चतुर्थी। राजानं संबोध्य दूतकथाप्रवृत्तौ देवपदं संबोध्य-राजपरम्। तदाह **युष्मदर्थ इति**। राजत्वस्वर्गित्वयोः शक्यतावच्छेदकत्वेन नानार्थत्वम्। तदुक्तम्-"राजा भट्टारको देव" इति। मकराकारो ध्वजो, मकर एव वा ध्वजः। अत्र मकरध्वजपदं कामपरं समुद्रस्य कोपा-भावात् पुरस्यासुरभेदस्य नगरस्य चेति सम्बन्धितावच्छेदकभेदेन समुदायस्य नानार्थत्वादेव पदसांनिध्ये-नेतरव्युदासः, देवपदं नियम्यत इति केचित्। कोकिलमादने मध्वोरेव सामर्थ्यम्। न मधुनः मादकत्वं मधुन्य-पीति न लिङ्गम्। मुखं सांमुख्यं न तु वदनम्। कामत्राणायोग्यत्वात्। यद्यपि चुम्बनादिना वदनमपि कामत्रायकं तथापि सांमुख्यमेव योग्यम्। असति तस्मिन् वैरस्यायैवेति तथैवौचित्यम्। अत्र राज-

धान्यां विष्णुत्वेन नृपतित्वेन च समुदायशक्त्या नानार्थता । विष्णोर्भानिं सर्वत्र राज्ञस्तु राजधान्यामेवेति राजधानीरूपदेशेन नियमनम् । चित्रभानुत्वं रवित्वं वह्नित्वञ्च दिनरात्र्योः भिन्नसूर्ययोःदीप्त्योगात् तत्तद्विशेषपरत्वम् । **इन्द्रेति** । इन्द्रः शत्रुः शातयिता यस्य इन्द्रस्य शातयिता वा । षष्ठीसमासे अन्तोदात्तत्वे इन्द्रस्य शातयिता इति प्रतीयते । बहुव्रीहौ च पूर्वपदोदात्तत्वे इन्द्रः शातयिता यस्येति प्रतीयते काव्येष्वमीषां नार्थविशेषनियामकता तथाहि । अनुरूपस्वरेणार्थविशेषावगतौ श्लेषभङ्गप्रसङ्गादित्याह **वेद एवेति** । अत एव श्लेषप्रस्तावे वक्ष्यति । "काव्यमार्गे स्वरो न गण्यत" इति । ध्वनिस्तु पाठगुणोपदेशेन रसविशेष नियामकः स्यादेव । तदुक्तम्-"वीरबीभत्सरौद्रेषु स्वरितोदात्तनुच्चरेत्" इति ।

आदि ग्रहणात्

एद्दहमेत्तत्थणिआ एद्दहमेत्तेहि अच्छिवत्तेहिं ।

एद्दहमेत्तावत्था एद्दहमेत्तेहि दिअएहि ॥११॥ इत्यादावभिनयादयः ।

**बालचित्तानुरञ्जनी**—आदिशब्देन संगृहीतमर्थमाह । **एद्दहमेत्थणिआ** एतावन्मात्रस्तनी "एद्दहमेत्तेहिं अच्छिवत्तेहिं एतावन्मात्राभ्यामक्षिपात्राभ्यामुपलक्षितेत्यर्थः । **एद्दहमेत्तावत्था** एतावन्मात्रावस्था । एद्दहमेत्तेहिं दिअएहिं एतावन्मात्रैर्दवसैः । अणुमहदाद्यनेकार्थाभिधायकत्वेपि एतावन्मात्रशब्दस्य अत्र प्रसारिततर्जनीकशिरश्चालनेनाभिनयेन दुर्बलावस्थत्वं गम्यते । बद्धमुष्टिभुजद्वयवलयीकरणेन स्थौल्यं गम्यते । अतोऽभिनयोऽप्यनेकार्थस्य निग्राहक इत्यर्थः । उक्तानुवादपूर्वकं अनेकेत्यादि सूत्रं व्याकरोति **इत्थमिति** । तस्या अभिधार्थनियमना संयोगादिभिरित्यर्थः ।

**सारबोधिनी**--काकोरपि व्यञ्जकत्वमस्तीत्यादिषु वक्ष्यति । **एद्दहीति** ।

एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपात्राभ्याम् ।

एतावन्मात्रावस्थाः एतावन्मात्रैर्दिवसैः ॥

अत्र चेष्टाविशेषेण **इयन्मात्रशब्दाः** परिमाणविशेषादौ नियम्यन्ते । तेन स्तनादीनां पद्मकोशाकारत्वं प्रतीयते । सर्वनाम्नो बुद्धिस्थप्रकारेण शक्तौ नानार्थता । आदिशब्दात् "इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्" । इत्यत्रात्मनिर्देशो हृदयनिहितहस्तेन प्रतीयते । नायमभिनयोऽनुकरणाभावात् । एवमञ्जलिना सूर्यमुपतिष्ठते, पयः पिबति, लाजान् जुहोतीत्यादौ अञ्जलेः पुटीभावेनोर्ध्वशिखत्वं, अङ्गुलिनिबिडसंयोगेनोर्ध्वाग्राधोमूलत्वं ऊर्ध्वमूलाधोऽग्रत्वमिति सन्निवेशविशेषः प्रतीयते । तथाच त्रयोऽग्नयः त्रयो वेदाः इत्यत्र संख्याविशेषात्तेषां त्रयीपरत्वम् कारिकां सङ्गमयति **इत्थमिति** । नियन्त्रणमाह **निवारित इति** । तात्पर्यविषयोपस्थितार्थान्वयबोधे वृत्तो अप्रकृतार्थोपस्थितिप्रतिबन्धे चेत्यभिप्रायः । **न लक्षणेति** । द्वितीयार्थे तात्पर्यग्राहकाभावात्तात्पर्यानुपपत्तेरभावादित्यर्थः ।

इत्थं संयोगादिभिरर्थान्तराभिधायकत्वे निवारितेऽप्यनेकार्थस्य शब्दस्य यत् क्वचिदर्थान्तरप्रतिपादनं तत्र नाभिधा नियमनात्तस्याः । न च लक्षणा मुख्यार्थबाधाद्यभावात् । अपित्वञ्जनं व्यञ्जनमेव व्यापारः । यथा—

भद्रात्मनो दुरधिरोहतनोर्विशालवंशोन्नतेः कृतशिलीमुखविग्रहस्य ।

यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥१२॥१९॥

**बालचित्तानुरञ्जनी**--शब्दगतव्यञ्जनामुदाहरति **भद्रेति** । राजा कश्चिद्वर्ण्यते यस्य हस्तः सततं दानोदकसेकसुन्दरोऽभूत् । कीदृशस्य । **भद्रात्मनः** कुशलात्मनः । अनाक्रमणीयमूर्तेः । विस्तीर्णे वंशे कुले उन्नतिरभ्युदयो यस्य । कृतशरसङ्गस्य अनुपप्लुता गतिर्यस्य । **वैरिवारकस्य इति** मुख्यो वाच्योऽर्थः । इदानीं व्यङ्ग्योर्थः । यस्य हस्तः मदोदकसुभगोऽभूत् परस्य उत्कृष्टस्य वारणस्य हस्तिनः । भद्रजातेः । अनाक्रमणीयस्य । विशाला वंशस्य पृष्ठवंशस्य उन्नतिर्यस्मिन् । कृतभ्रमरसङ्ग्रहस्य । अनुपद्रुतगतेः । एवं विधस्यात्र व्यञ्जनया गजप्रतीतिर्भवति । राज्ञो वाच्यत्वस्य प्रकरणेन नियमितत्वात् ।

**सारबोधनी-भद्रात्मन इति** । भद्रः शोभनो गजजातिविशेषश्च । अधिरोहोऽवकलनं आरोहणञ्च । वंशोऽन्वयो वेणुश्च । विशालवंशवदुच्छ्रितस्य शिलीमुखो बाणो भ्रमरश्च । अनुपप्लुतापरानभिभाव्या स्तब्धत्वादिदोषरहिता च । गतिर्ज्ञानं गमनञ्च । परवारणस्य शत्रुवारणस्य श्रेष्ठहस्तिनश्च । दानं वितरणं मदश्च । करः पाणिः शुण्डादण्डश्च । अत्राभिधया प्रकृतराजबोधः । गजान्वयस्तु तात्पर्यविषयोपि तद्ग्राहकप्रकरणाद्यनवताराद्व्यङ्ग्य एव । अत्र नृपतिगजयोर्मिथः सम्बन्धः उपमानोपमेयभावोऽपि व्यङ्ग्य एव । अन्यथा मिथोऽसम्बद्धार्थद्वयबोधकत्वेन वाक्यभेदापत्तेः उपमाध्वनित्वेनास्वादप्रकर्षाधायकत्वाच्च । अत्रेदमवधारणीयम् । नानार्थेषु यत्रानेकत्र तात्पर्यग्राहकं युगपत्प्रकरणादिकमवतरति वा स श्लेषः । यत्र क्रमेण तत्रावृत्तिः यत्रैकत्रैव तत्र व्यञ्जनेति सिद्धान्तरहस्यम् ।

**तद्युक्तो व्यञ्जकः शब्दः**

तद्युक्तो व्यञ्जनयुक्तः ।

**यत्सोऽर्थान्तरयुक् तथा ।**

**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः ॥२०॥**

तथेति व्यञ्जकः ।

इति काव्यप्रकाशे शब्दार्थस्वरूपनिर्णयो नाम द्वितीय उल्लासः ।

**बालचित्तानुरञ्जनी**—उक्तव्यञ्जनद्वारा व्यञ्जकशब्दं लक्षयति **तद्युक्त इति** । शब्दस्य व्यञ्जकत्वेऽर्थस्यापि कथं व्यञ्जकतेत्यत आह **यत्स इति** । यद्यस्मात्कारणात् स शब्दः अर्थान्तरयुक्तः अर्थविशेषयुक्तः तथा व्यञ्जको भवति । अतः शब्दार्थोऽपि सहकारित्वेन व्यञ्जको मतः । अन्यथा अर्थस्यासहकारित्वे यस्य कस्यचिदर्थस्य यं कञ्चिदर्थं प्रति व्यञ्जकत्वं स्यादित्यर्थः । सूत्रस्थं तथापदं व्याचष्टे **तथेतीति** ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यसरस्वतीतीर्थविरचितायां

काव्यप्रकाशटीकायां द्वितीय उल्लासः ॥

सारबोधिनी--सिद्धान्तरहस्यम् प्रकृतमनुसरति । तद्युक्त इति । ननु प्रथमार्थप्रतीतेर्द्वितीयार्थ प्रत्ययाहेतुत्वेन तदनवधानात् शब्दस्य कथं करणत्वमित्यत आह यत्स इति । स शब्द अर्थान्तरयुक् । तत्प्रत्यायनमन्तरेण प्रत्यायकः तेनास्य नौदासीन्यम् । तदाह अर्थोऽपीति । सहकारितया नोद्भूटशक्तिक तया । तत्तु शब्दस्यैवान्वयव्यतिरेकानुविधानात् । अत एव शब्दमूलको व्यवहार इति ।

इति सारबोधिन्यां द्वितीय उल्लासः ।

---

१. काव्योपादानलभ्यः B. २. B omits मया. ३. B and D omit it ४. सद्दशकम् E. ५. प्रतिष्ठिता B. ६. अव्याप्तिरिति A. ७. K adds इति बोध्यं after दर्शितत्वात् ८. सूचितम् C ९. F. omits इति. १०. जातिरेववेति B. ११. A omits स इति १२. लक्ष्यार्थः D १३. इति ज्ञेयम् B १४. D omits इत्यत्र १५. B omits from तत्प्रतीतिस्तु to प्रतीतावेव १६. A omits यथाक्रमम् १७. भावः B.

**अर्थाः प्रोक्ताः पुरा तेषाम्**

अर्था : वाच्यलक्ष्यव्यङ्ग्याः । तेषां वाचकलाक्षणिकव्यञ्जकानाम् ।

**अर्थव्यञ्जकतोच्यते ।**

तृतीय उल्लासः

**बालचित्तानुरञ्जनी**—शब्दगतां व्यञ्जनां प्रतिपाद्य उल्लाससङ्गतिप्रतिपादनपूर्वकं अर्थगतां व्यञ्जनां प्रतिपादयितुमारभते **अर्था इति** । व्याचष्टे **वाचकेति** । अर्थानां वाच्यादीनां व्यञ्जकत्वं प्रतिपाद्यत इत्यर्थः ।

**सारबोधिनी**—अथार्थव्यञ्जकतामभिधातुमुक्तमेव स्मारयति **अर्था इति** । पुरा वाच्यादयस्तदर्थाः स्युरित्यनेन । इदानीं किं निरूपणीयमित्याह **अर्थव्यञ्जकतेति** । सापि प्रागुक्तैव । "सर्वेषां प्रायशोऽर्थानाम्" इत्यनेनेत्यर्थः ।

**काव्यप्रकाशदर्पणः**—एवं शब्दस्य व्यञ्जकत्वं निर्णीय प्राप्तावसरमर्थस्य व्यञ्जकत्वं **दर्शयितुं** तदुपदेशं स्मारयति **अर्था इति** । **प्रोक्ताः पुरेति** । "वाच्यादयस्तदर्थाः स्युः" इत्यनेनार्थस्य व्यञ्जकता । अर्थात् परेषां प्राचीनादिवृत्तिबोध्यत्वेनानुमेयत्वेन वा अभिमतो व्यङ्ग्योऽर्थः उच्यते । प्रतिपत्तिनिरासद्वारेत्यर्थः । "अथ व्यञ्जकता" इति पाठे तु तेषामिति शेषः ।

कीदृशीत्याह———

**वक्तृबोद्धव्यकाकूनां वाक्यवाच्यान्यसन्निधेः ॥२१॥**

**प्रस्तावदेशकालदेर्वैशिष्ट्यात् प्रतिभाजुषाम् ।**

**योऽर्थस्यान्यार्थधीहेतुर्व्यापारो व्यक्तिरेव सा ॥२२॥**

बोद्धव्यः प्रतिपाद्यः । काकुर्ध्वनेर्विकारः । प्रस्तावः प्रकरणम् । अर्थस्य वाच्यलक्ष्यव्यङ्ग्याः ।

**बालचित्तानुरञ्जनी**—व्यञ्जकत्वमेतेषां केन प्रकारेण भवतीत्याशङ्क्य तदुत्तरत्वेन सूत्रमवतारयति **कीदृशीति** । प्रतिभाजुषां विचारकाणाम् अन्यार्थधीहेतुः यो वाच्यादेरर्थस्य व्यापारः व्यक्तिरेव सा । सा व्यञ्जनैव नाभिधादिः । व्यापारस्यान्यार्थहेतुत्वे हेतून् दर्शयति **वक्त्रित्यादिना** । क्वचित् वक्तृवैशिष्ट्यात्, क्वापि बोद्धव्यवैशिष्ट्यात्, प्रस्ताववैशिष्ट्यात्, देशवैशिष्ट्यात्, कालवैशिष्ट्यात् । आदिग्रहणात् चेष्टादिवैशिष्ट्यात् ।

१ **सारबोधिनी-कीदृशीति**—कीदृशी किंस्वरूपा ? नियन्त्रितार्थधीजनकत्वं शब्दस्य व्यञ्जकतायाः स्वरूपमिव तस्याः किमित्यर्थः । **वाक्यवाच्येति** । वाक्यवाच्यसहितोऽन्यसन्निधिरित्यर्थः । तेनेतरेतरद्वन्द्वे बहुवचनम् समाहारे नपुंसकत्वमिति निरस्तम् । अन्यो वक्तृबोद्धव्यभिन्नो जनः । प्रस्तावः प्रकरणम् । देशो विजनादिः । कालो वसन्तादिः । वैशिष्ट्यात् वैलक्षण्यात् । पञ्चम्या हेतुत्वमुक्तम् । तदभावे व्यञ्जनानुदयात् । प्रतिभा वासनाविशेषः । तेन श्रोत्रियादिषु न व्यञ्जकत्वप्रसङ्गः । **व्यक्तिरेवेति** । एवकारेण व्यापारोत्तरप्रमाणान्तरव्युदासः । सङ्केताद्यभावेन नाभिधादिरित्युक्तं प्राक् । अनुमानादिकन्त्वग्रे निरसिष्यते । एषाञ्च सङ्करे यस्योद्भटता तन्मूलको व्यवहारः बोद्धव्य इत्यस्यार्थः । **प्रतिपाद्यत इति** प्रतिपादयितव्यः पुरुषः इति यावत् । अन्तर्भावितणिजर्थः । **ध्वनेर्विकार इति** । तदुक्तम्—"भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इति ।

**काव्यप्रकाशदर्पणः**—ननु सर्वेषां प्रायशोऽर्थानामित्यादिना पूर्वमर्थस्य व्यञ्जकत्वमुक्तमेव । सम्प्रति कतमं विशेषमभिधाय पुनरुच्यत इति पृच्छति **कीदृशीति** । **वाक्येति** । वाक्यवाच्यसमाहितोऽन्यसन्निधिरिति मध्यमपदलोपी समासः । वैशिष्ट्यात् वैलक्षण्यादिति वक्त्रादिषु प्रत्येकमन्वयः । प्रतिभाजुषां नवनवोल्लेखबुद्धिशालिनां, न तु स्थूलबुद्धीनाम् । **अन्येति** । प्राचीनादिवृत्तिवाक्ये बोध्यत्वनिरासः । अनयेति [अर्थस्येति] । व्यज्यते व्यक्तिर्व्यञ्जना एव । कारणमनुमानादि । वाक्यार्थात् भेदं दर्शयति । प्रतिपाद्यते यः स प्रतिपाद्यः । शब्दप्रयोगस्य परार्थत्वात् यत्समवेता प्रतीतिरुत्पद्यते स इत्यर्थः । काकुर्ध्वनेर्विकारः । "भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते" इत्युक्तः प्रकारः । तद्भेदाश्च तत्सहकारिभेदात् स्वरूपभेदाच्चानन्ताकारेभ्यो बोद्धव्याः ।

क्रमेणोदाहरणानि ।

अइपिहुलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअं ।
समसेअसलिलणीसासणीसहा वीसमामि खणं ॥१३॥
अत्र चौर्यरतगोपनं गम्यते ।

**बालचित्तानुरञ्जनी**—काचित् कृतोपभोगा तच्छिपामपह्नवाय सखीं प्रत्याह । सहि हे सखि । अइपिहुलम् अतिपृथुलम् । जलकुम्भम् । घेत्तूण गृहीत्वा । तुरिअं त्वरितम् । समागदह्मि समागतास्मि । समसेअसलिलणीसासणीसहा अतः श्रमस्वेदसलिलनिःश्वासनिःसहा । खणं क्षणम् । वीसमामि विश्राम्यामि ।

अत्र व्यङ्ग्यं किमित्याकाङ्क्षायामाह **अत्र चौर्येति** । अत्र व्यभिचारिणी वदतीति वक्तृवैशिष्ट्यम् । अत्र चान्यत्र प्रमाणान्तरेणासतीत्वावगमे सति प्रतिभानवतस्तटस्थस्य व्यङ्ग्यप्रतीतिर्भवतीति द्रष्टव्यम् ।

**सारबोधिनी—अइति** ।

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम् ।
श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥

अकस्मादस्याः कुत एवंविधः श्रम इति तर्कयन्तीं सखीं प्रतीयमुक्तिः। जलपूर्णः कुम्भो जलकुम्भः। त्वरितं न शनैः। निःसहा निरुद्यमा।

अत्र पृथुल[3]जलकुम्भवहनपूर्वकत्वरितगमनजन्योऽयं श्रमो नान्यथा शङ्किष्ठा इति चौर्यरत-गोपनं व्यङ्ग्यमेव प्रकारान्तराभावात्।

**काव्यप्रकाशदर्पणः–अइपिहुलं इति।**

अतिपृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्।
श्रमस्वेदसलिलनिश्वासनिःसहा विश्राम्यामि क्षणम्॥

श्रमाज्जाताभ्यां स्वेदसलिलनिःश्वासाभ्यां निःसहा निरुद्धा इत्यर्थः। इयं हि काञ्चित् नद्या आगतां एकाकिनीं वीक्ष्य कुतोऽयं श्रम इति तर्कयन्तीं प्रतिवेशिनीं प्रत्युक्तिः। अत्र ममायं श्रमो जलकुम्भवहनादेव। न तु चौर्यरतिकृतां मां शङ्किष्ठा इति वक्तुरभिप्रायरूपोऽर्थः प्रकाश्यते। इदमुदाहरणं त्विह वक्तृ-वैशिष्ट्ये, न खल्वेवमर्थान्तराप्रतिपत्तितः वक्त्र्यां वार्द्धकादिगुणविशिष्टायाम्।

ओण्णिद्दं दोब्बल्लं चिंता अलसत्तणं सणीससिअं।

मह मंदभाइणीए केरं सहि तुह वि अहह परिहवइ॥१४॥

अत्र दूत्यास्तत्कामुपोपभोगो व्यज्यते।

**बालचित्तानुरञ्जनी**—बोद्धव्यवैशिष्ट्याद्व्यञ्जकत्वमुदाहरति **ओण्णिद्दमित्यादि**। काचिन्नायिका स्वां दूतीं निजप्रियोपभुक्तां लक्षयित्वा कथयति। सहि सखि। मह मम। मंदभाइणीए मन्दभाग्यायाः। केरं कृते। ओण्णिद्दं औन्निद्र्यम्। दोब्बलं दौर्बल्यम्। चिन्ता अलसत्तणं अलसत्त्वम्। सणीससिअं सनिश्वसितम्। तुहवि त्वामपि। अहह परिहवइ परिभवति।

व्यङ्ग्यमाह **अत्रेति**। इहापराधित्वलक्षणं बोद्धव्याया दूत्या वैशिष्ट्यम्।

**सारबोधिनी–ऊस्मीति**। [ओण्णिद्दमिति]

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह परिभवति॥

तुहेति कर्मणि षष्ठी परिभवस्य हिंसार्थत्वात्। न चान्यदीयमौन्निद्र्यादिकं नान्यस्य परिभावक-मिति वाच्यम्। समदुःखसुखत्वेन सख्यास्तत्संभवात्। अत एव सहीति संबोधनम्। सजातीयत्वलक्षणायां तु तेन नायिकाया अपरिभवात् अप्यर्थस्य साहित्यस्यानुपपत्तेः।

अत्र संबोध्याया दुःशीलता वैशिष्ट्यम्।

**काव्यप्रकाशदर्पणः–**

औन्निद्र्यं दौर्बल्यं चिन्तालसत्वं सनिःश्वसितम्।
मम मन्दभागिन्याः कृते सखि त्वामपि अहह परिभवति॥

अहह परिखेदे। त्वामित्यर्थे तवेति षष्ठी । परिभवतीत्यस्य हिंसार्थत्वात्। अत्र परकीयदुःखादि कथं परिभवतीति अन्वयार्थापत्त्या लक्षणा यावत् औन्निद्र्यादि लक्ष्यते। तदतिशयश्च लक्षणाफलरूपो व्यज्यते। तेनाभिव्यक्तेन तस्या एव वाक्यवादिन्याः कामुको दूत्योपभुक्तः ।

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः ।
विराटस्य वासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥१५॥

अत्र मयि न योग्यः खेदः कुरुषु तु योग्य इति काक्वा प्रकाश्यते । न च वाच्यसिद्ध्यङ्गमत्र काकुरिति गुणीभूतव्यङ्ग्यत्वं शङ्क्यम् । प्रश्नमात्रेणापि काकोर्विश्रान्तेः ।

**बालचित्तानुरञ्जनी**—काकुवैशिष्ट्यात् व्यञ्जकत्वमुदाहरति **तथाभूतामित्यादिना** । अत्र भीमः सन्धिं कुर्वता युधिष्ठिरेण प्रेषितं सहदेवं प्रति कथयति । नृपसदसि द्रुपदस्य तनयां द्रौपदीं तथाभूतां दुःशासनेन विवसिनीक्रियमाणां विलोक्य वल्कलधारिभिरस्माभिर्वनचरैः सह बहुकालं वने स्थितम् । तदनन्तरं विराटस्य गृहे अयोग्यसूपकारादिव्यापारकरणेन प्रच्छन्नं यथा भवति तथा स्थितं एवं खिन्ने मयि गुरुर्युधिष्ठिरः खेदं कोपं भजति, कौरवेषु कोपं नाद्यापि भजति ।

अत्र व्यङ्ग्यमाह **अत्र मयीति** ।

ननु कुपितोद्धतनायकप्रयुक्तस्य वाक्यस्य केवलानुवादकत्वायोगात् विधौ पर्यवसानं वक्तव्यम् । तच्च काकुद्योत्यार्थेन विना न सिध्यतीति वाच्यसिद्ध्यङ्गं काकुः । अतो गुणीभूतव्यङ्ग्यत्वमित्याशङ्क्य परिहरति **नचेति** । अनुल्लङ्घ्यत्वेन गुरुं प्रति कोपस्यासंभवात् प्रश्नमात्रेणापि वाक्यार्थघटनात् काकोरपि प्रश्नमात्रेणैव विश्रान्तिः । तथा च मयि न युक्तः कुरुषु युक्तः कोप इत्यस्य प्रकाशनात् न काकुर्वाच्याङ्गमित्यभिप्रेत्य हेतुमाह **प्रश्नमात्रेणेत्यादिना** "मथ्नामि कौरवशतम्" इत्यत्र भीमेन मथ्नामीत्यसंभवात् काकुर्मथ्नाम्येवेति व्यङ्ग्यविश्रान्तिद्वारा काव्यार्थमुपपादयतीति न गुणीभूतव्यङ्ग्यत्वम् । तस्मात् शब्दशक्तिरेव स्वार्थाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सती व्यङ्ग्यार्थप्रतीतिहेतुरित्यर्थः ।

**सारबोधिनी—तथाभूतेति (तथाभूतामिति) दृष्ट्वेति** । प्रतिकर्मणि संबध्यते । तथाभूतां स्त्रीधर्मिणीं दुःशासनाकृष्टकेशपाशाम् । वल्कलधरैरस्माभिरिति विशेष्यपदमध्याहार्यम् । उषितमति स्थितमिति च पाठे । आरम्भो वशः कर्म वा । खिद्यतेऽनेनेति खेदो मात्सर्यम् । खिन्ने ग्लाने[४] इत्यध्याहार्यम् । अन्यथा प्रकारान्तरेण खिन्ने खेदभजनानौचित्यानुपपत्तेः । खिन्ने खेदं भजतीत्यनौचित्यम् । तदाह **मयि न योग्यः खेदः कुरुषु तु योग्य इति** ।

ननु नृपतेः परिदृश्यमानपाञ्चालतनयादीनां तथाभूतत्वादिस्वापकर्षः तत्कारिषु मात्सर्यस्य हेतुः । तत एव दुर्मनायमाने भीमे तत्प्रतिबन्धकम् । **इह तु** वैपरीत्यमित्यपर्यवसितो वाक्यार्थो यदेवं तदनौचित्यमित्यनौचित्यं व्यङ्ग्यमादायैव **पर्यवस्यतीति वाच्यसिद्ध्यङ्ग**मेतदुदाहरणं स्यादित्याशङ्क्य निराकरोति **न**

**च वाच्यसिद्धयङ्गमिति**। वाच्यस्य गुरुनये वाक्यार्थस्य सिद्धिः। पर्यवसानं तदङ्गं तत्कारकम्। **काकुरिति**। तथा च काकोरेव व्यञ्जकता पर्यवसिता। न तु काकुवैशिष्ट्यादर्थस्य व्यङ्ग्यं विना पूर्वं तस्यासिद्धत्वादिति शङ्कार्थः। तेन गुणीभूतव्यङ्ग्यत्वेऽपि व्यञ्जकता सिद्धैवेति किमनया न चेत्यादिशङ्कयेति दूषणं निरस्तम्। तथासत्यर्थस्य काकुवैशिष्ट्येन व्यञ्जकता न सिद्धा, तस्य प्रागसिद्धत्वात् किन्तु काकोरेवेति। केचित्तु **न चेति**। तथा च प्रधानीभूतध्वन्युदाहरणं काक्वाक्षिप्तस्य न संभवतीति काक्वाक्षिप्तमित्यनेन गुणीभूतव्यङ्ग्ये तदुदाहरणस्य वक्ष्यमाणत्वादलमत्र तत्कथनेनेति च शङ्कार्थ इत्याहुः[५] **अत्रेति**। **काकोरिति** व्यङ्ग्यव्यञ्जकभावे षष्ठी। काकुव्यङ्ग्येनेत्यर्थः। मात्रपदेनानौचित्यवारणम्। अपिरेवार्थः। मात्रापिमपदाभ्यामन्ययोगव्यवच्छेदः। विश्रान्तेः, अर्थात् वाक्यार्थस्य।

अयमभिसन्धिः। नञि काकुः। तद्व्यङ्ग्यश्च प्रश्नः। सहदेव! त्वां पृच्छामि यदेव गुरुः करोति। तत् कथम् इत्येवं रूपः। ततश्च काकुव्यङ्ग्यप्रश्नसाचिव्यात् पर्यवसितेन वाक्यार्थेनानौचित्यं ध्वन्यते। स च ध्वनिरेव। वाक्योद्देश्यता च तत्रैव भीमसेनगतक्रोधप्रकर्षहेतुत्वात्। अनौचित्यकारिणि क्रोधोद्रेकस्यानुभाविकत्वात्। न च कुपितोद्धतनायकवचनस्यावश्यं विपर्ययपर्यवसायित्वेन काकुप्रकाश्यस्य वाच्यसिद्धयङ्गत्वं वाच्यम्। गुरोरलङ्घनीयेष्टत्वेन विपर्ययपर्यवसायित्वाभावात्।

तइआ मह गंडत्थलणिमिअं दिट्ठिं ण णेसि अण्णत्तो।
एण्हि सच्चेअ अहं ते अ कबोला ण सा दिट्ठी ॥१६॥

अत्र मत्सखीं कपोलप्रतिबिम्बितां पश्यतस्ते दृष्टिरन्यैवाभूत्। चलितायां तु तस्यामन्यैव जातेत्यहो प्रच्छन्नकामुकत्वं ते इति व्यज्यते।

**बालचित्तानुरञ्जनी**–वाक्यवैशिष्ट्याद् व्यञ्जकत्वमाह **तइआ महेत्यादि**। अत्र काचिन्नायिका निजसख्यामनुरक्तं स्वप्रियम् ईर्ष्यया कथयति। तइआ तदा। मह मम। गंडत्थलणिमिअं गण्डस्थलनिमग्नाम्। दिट्ठिं दृष्टिम्। अण्णत्तो अन्यतः। ण णेसि न नयसि। एण्हिं इदानीम्। सच्चेअ सैव। अहं तेअ तावेव। कबोला कपोलौ। ण न सा दिट्ठी दृष्टिः। णिमिअं निहिताम्।

व्यङ्ग्यमाह **अत्र मत्सखीमिति**। **अत्र** तदानीमन्या दृष्टिः इदानीमन्येत्येवंप्रकारस्य वाक्यवैशिष्ट्यम्।

**सारबोधिनी**। **तइआ इति**। तदा मम गण्डस्थलनिमग्नां दृष्टिं न नयस्यन्यत्र।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥

निमग्नां न तु स्थिताम्। **अत्रेति**। मद्भयाद्बिम्बमपहाय प्रतिबिम्बदर्शनम्। अन्या स्निग्धा अनिमेषता रूपा।[६] अन्या विषयस्योद्विग्नरूपा [?] जातेति दृष्टेर्जन्मान्तरम्।

**अहो इति**। इयत्कालं गोपनेन गतमित्याश्चर्यम्। अत्र वाक्यवैशिष्ट्यं व्यञ्जकम्। अत्र वाक्यपदेन 'तइ आ मह' इति विच्छिन्नवाक्यमुच्यते। अन्यथा अतिप्रसक्तेः सर्वत्रैव वाक्यवैशिष्ट्यस्य सत्त्वात्।

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायो
कुञ्जोत्कर्षाङ्कुरितरमणीविभ्रमो नर्मदायाः ।
किं चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः ॥१७॥

अत्र रतार्थं प्रविशेति व्यङ्ग्यम् ।

**बालचित्तानुरञ्जनी**–वाच्यवैशिष्ट्यात् व्यञ्जकत्वमुदाहरति **उद्देश इत्यादि** । कश्चित् कामी कामिनीं प्रति वदति । हे तन्वि ! सरसकदलीपङ्क्तीनां शोभया अतिशयेन रमणीयः कुञ्जानामाधिक्येनाङ्कुरितो वर्द्धितो रमणीनां विभ्रमो येन । एवंविधोऽयं नर्मदायाः प्रदेशः किञ्च एतस्मिन् प्रदेशे सुरताभिलाषोद्दीपकास्ते वायवो वान्ति येषाम् अग्रे पुरस्तात् कलितः अकाण्डे अनवसरे कोपो येन सः कलिताकाण्डकोपः मनोभूः सरति । मानिनां मानभङ्गाय कुपित इत्यर्थः ।

व्यङ्ग्यमाह **अत्र रतार्थमित्यादि** । अत्रोद्दीपनवातादिरूपवाच्यार्थस्य वैशिष्ट्यम् ।

**सारबोधिनी–उद्देशोऽयमिति** । ऊर्ध्वो देशो उद्देशः । स्खलनभयेन सञ्चरतामनवलोकनीय इति व्यज्यते । तथा कदल्याः श्रेणीत्वेन वेष्टनम् सरसत्वेन शुष्कदलशब्दविरहः कुञ्जस्योत्कर्षः कुसुमसमृद्ध्यादिः । अङ्कुरितत्वम् अभूतप्रादुर्भावः । यासां विभ्रमोदयः पूर्वं नाभूत् तासामपि नवनवोन्मेषी विलासो भवति । नर्म ददातीति नर्मदा । न तु नदीमात्रम् । श्रमापनयनेन पुनः पुनः प्रवर्तनया सुहृदः । तन्वीति कृशत्वेन यः श्रमः संभविष्यति । सोऽपि तैरपास्य इति । **वान्तीति** । वृत्ता अविरतवर्तमानता । मनोभूरिति मर्मज्ञता सर्वजनदुःपरिहरश्च । सोऽपि धृताहेतुककोपस्तेन तद्वारणमशक्यमित्यादि व्यज्यते ।

**अत्रेति** । तत्तद्विशेषणप्रकाशितस्योद्देशविशेषस्य वाच्यस्य वैशिष्ट्यादयं कामुकाभिप्रायः प्रकाश्यत इति ।

**काव्यप्रकाशदर्पणः–उद्देशोऽयमिति** । नर्मदाया उद्देश इत्यन्वयः । पवनानां सुरते घर्मश्रमाकुलत्वापनयनेन रागदीर्घदान्तेन च सुहृदुपचारात् । अकाण्डकोपः आकस्मिककोपः अत्र नर्मदोद्देशानां तत्सुरतानुगुणानां वाच्यानां वैशिष्ट्यप्रयोजकम् ।

णोल्लेइ अणोद्दमणा अत्ता मं घरभरम्मि सअलम्मि ।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥१८॥

अत्र संध्या सङ्केतकाल इति तटस्थं प्रति कयाचित् द्योत्यते ।

**बालचित्तानुरञ्जनी**–अन्यसन्निधिवैशिष्ट्यात् व्यञ्जकतामुदाहरति **णोल्लेइ इत्यादि** । सङ्केतकालप्रश्नाभिलाषिणं कामुकमुद्दिश्य सखीं प्रति काचित् व्यभिचारिणी कथयति । मं मां सअलम्मि सकले । घरभरम्मि गृहभरे । अणद्दमना अनार्द्रमनाः । अत्ता श्वश्रूः । णोल्लेइ प्रेरयति । जइ यदि ।

संझाइ सन्ध्यायाम्। खणमेत्तं क्षणमात्रम्। वीसामो विश्रामः। णव केवलम्। होइ भवति। ण व होइ न वा भवति।

व्यङ्ग्यमाह अत्र सन्ध्येति। अत्रान्यस्य सुरतसङ्केताभिलाषिणः सन्निधानवैशिष्ट्यादेवं व्यज्यते। सन्ध्यायामवसर एवेत्युच्यमाने तटस्थस्य स्पष्टप्रतीतिर्माभूदिति न वेत्युक्तम्।

**सारबोधिनी**—नोदयत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः॥

अणसमणा[७] "इति पाठे अनल्पमना" [८] इत्यर्थः। **सन्ध्येति**। सन्ध्यायामेव प्राप्तावसरत्वात्। तटस्थं निकटस्थम् यद्वा वाच्यार्थं प्रत्युदासीनम्। व्यङ्ग्ये तु जीवितसर्वस्वं सङ्केतार्थिनम्। जनान्तरसन्निधौ तु नैवमिति तत्सन्निधिवैशिष्ट्यम्।

**काव्यप्रकाशदर्पणः**—नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः।

क्वचित् "सं एणवर हो द्वी समो इति वा भवति विश्रामः पाठश्च केवलं तटस्थः। तस्य संनिधे प्रकरणावसेयस्यात्र वैशिष्ट्यम्।

सुव्वइ समागमिस्सदि तुज्झ पिओ अज्ज पहरमेत्तेण।
एमेअ कित्ति चिट्ठसि ता सहि सज्जेसु करणिज्जं॥१६॥

अत्रोपपतिं प्रत्यभिसर्तुं प्रस्तुता न युक्तमिति कयाचिन्निवार्यते।

**बालचित्तानुरञ्जनी**—प्रस्ताववैशिष्ट्याद्व्यञ्जनामुदाहरति सुव्वईति। अत्र काचिदुपपतिं प्रति भिसर्तुमुद्यतां सखीं कथयति। अज्ज अद्य। पहरमेत्तेण प्रहरमात्रेण। तुज्झ तव। पिओ प्रियः। समागमिस्सदि समागमिष्यति। सुव्वइ एवं श्रूयते। एमेअ एवमेव। कित्ति किमिति। चिट्ठसि तिष्ठसि। ता तस्मात्। सहि सखि। करणिज्जं करणीयम्। सज्जेसु सज्जय। सम्यक् सम्पादयेति भावः।

**सारबोधिनी**—
श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम्॥

**अत्रेति**। इयमस्याः संविदितरहस्यादेशविन्यासमये अकस्मात् गृहेश्वरागमनं प्रस्तावयति।[९] तस्मादभिसरणं वारयतीति प्रस्तावैशिष्ट्यम्।

**काव्यप्रकाशदर्पणः**— श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण।
एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम्॥

अत्र तवेति प्रियेति सखीं प्रति सोत्कम्पनवचनम्। अन्यत्र च रहस्यगोपनम्। एवमेवाङ्गमण्डलं कृत्वा सज्जय सज्जीकुरु। अत्रोक्तरूपे व्यङ्ग्ये निजपत्यागमनप्रस्तावैशिष्ट्यम्।

अन्यत्र यूयं कुसुमावचायं
कुरुध्वमत्रास्मि करोमि सख्यः ।
नाहं हि दूरं भ्रमितुं समर्था
प्रसीदतायं रचितोऽञ्जलिर्वः ॥२०॥

अत्र विविक्तोऽयं देश इति प्रच्छन्नकामुकस्त्वया अभिसार्यतामिति आश्वस्तां प्रति कयाचिन्निवेद्यते ।

**बालचित्तानुरञ्जनी**—देशवैशिष्ट्याद्व्यञ्जनामुदाहरति अन्यत्रेति । अत्र पुष्पावचयं नाटयन्ती मालती* सखीः प्रति कथयति । यूयं पुष्पावचायं अन्यत्र कुरुध्वम् । भो सख्यः । अत्र अस्मिन् प्रदेशे । अस्मीत्यहमर्थेऽव्ययम् । अहं करोमि । अत्रैवाहं करोमीत्यर्थे हेतुमाह हीति । यस्मादहं दूर गन्तुमसमर्था न शक्ता । अयमञ्जलिर्वः युष्मभ्यं रचितः । प्रसीदत प्रसन्ना भवत ।

**सारबोधिनी**—अन्यत्रेति प्रलोभयति । **अवचायमिति** । हस्तादाने चेरस्तेये[10] इति (३-३-४०) घञा कुसुमस्य हस्तप्राप्तत्वावगमात् । अस्मीत्यहमर्थे । विविक्तो विजन इति देशवैशिष्ट्यम् । प्रच्छन्नः सदा संनिधानयोग्यचेट्यादिवेषेण गुप्त इत्यर्थः ।

गुरुअणपरवस पिअ किं भणामि तुइ मंदभाइणी अहअं ।
अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जं ॥२१॥

अत्राद्य मधुसमये यदि व्रजसि तदाहं तावत् न भवामि, तव तु न जानामि गतमिति व्यज्यते ।

**बालचित्तानुरञ्जनी**—कालवैशिष्ट्याद्व्यञ्जनामुदाहरति गुरुअणेति । अत्र प्रतिष्ठासु प्रियं प्रति काचित् कथयति । गुरुअणपरवस गुरुजनपरवश । पिअ हे प्रिय । मंदभाइणी मन्दभाग्या । अहकं अहम् । तुह त्वाम् । किं भणामि ? अज्ज अद्य । पवासं प्रवासम् । वच्चसि व्रजसि । वच्च व्रज । सअं जेव्व स्वयमेव करणिज्जं करणीयम् । सुणसि जानासि । व्यङ्ग्यमाह **अत्र मध्वित्यादि** । अत्र वसन्तसमयलक्षणं कालस्य वैशिष्ट्यम् ।

**सारबोधिनी-गुर्विति** । गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिनी खल्वहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥
जनोऽविदग्धः । वसन्तसमये प्रवासप्रेरणात् । स एव परः शत्रुः ।

**काव्यप्रकाशदर्पणः**—गुरुजनपरवश प्रिय किं भणामि तव मन्दभागिन्यहम् ।
अद्य प्रवासं व्रजसि व्रज स्वयमेव जानासि करणीयम् ॥
अर्थादामरणं न जीवामि । अत्र वसन्तकालस्य वैशिष्ट्यम् ।

---

*काचिदिति पाठः श्रेयान् । मालतीमाधवे श्लोकस्यास्याऽनुपलम्भात् ।

आदिग्रहणात् चेष्टादेः । तत्र चेष्टाया यथा—

द्वारोपान्तनिरन्तरे मयि तथा सौन्दर्यसारश्रिया
प्रोल्लास्योरुयुगं परस्परसमासक्तं समासादितम् ।
आनीतं पुरतः शिरोंशुकमधः क्षिप्ते चले लोचने,
वाचस्तत्र निवारितं प्रसरणं सङ्कोचिते दोर्लते ॥२२॥

अत्र चेष्टया प्रच्छन्नकान्तविषय आकूतविशेषो ध्वन्यते । निराकाङ्क्षप्रतिपत्तये प्राप्तावसरतया च पुनः पुनरुदाह्रियते । वक्त्रादीनां मिथः संयोगे द्विकादिभेदेन । अनेन क्रमेण लक्ष्यव्यङ्ग्ययोश्च व्यञ्जकत्वमुदाहार्यम् ॥२१-२२॥

**बालचित्तानुरञ्जनी—आदीति** । चेष्टावैशिष्ट्याद् व्यञ्जकत्वमुदाहरति **द्वारोपान्तेति** । कश्चित् कामी नर्मसचिवं प्रति कथयति । द्वारसमीपे सन्निहिते मयि तथा सौन्दर्यसारलक्ष्म्या ऊरुयुगं प्रोल्लास्य प्रसार्य मिथः समाश्लिष्टं कृतम् । दूरस्थस्यैव प्रियस्य दूरात् स्वाङ्गैः स्वाङ्गान्येव मेलयित्वा स्पष्टकं नाम आलिङ्गनं क्रियते तदनेन सूचितम् ।

शिरोऽशुकं पुरतः आनीतम् । अनेन गूढमानेच्छेति व्यज्यते । तदनन्तरं वाचः प्रसरणं निवारितं मुखमुद्रणेनेत्यर्थः अनेन तूष्णीं भूते जने आगन्तव्यमिति । अनेन पारवश्यं ध्वन्यत इति केचिदाहुः । ततो भुजलते सङ्कोचिते । अनेनागमनपारितोषिकमालिङ्गनं व्यज्यते ।

व्यङ्ग्यमाह **अत्र चेष्टयेत्यादि** । अत्र चेष्टाया ऊरुयुगप्रसारणादिरूपाया वैशिष्ट्यम् ।

ननु द्वितीयोल्लासे वाच्यादीनामर्थानां व्यञ्जकत्वमुदाहृतम् । एकस्मिन्नेवोदाहरणे वक्त्रादिवैशिष्ट्यमप्युदाहर्तुं शक्यते, तत् किं पृथगुदाहरणेनेत्याशङ्क्याह **निराकाङ्क्षेति** । सामान्येन पूर्वमुदाहृतेऽपि अस्योदाहरणं किं न प्रदर्शितमित्याकाङ्क्षायां सत्यां प्रतिपत्तिर्निराकाङ्क्षा न भवतीति तदर्थं वक्त्रादिवैशिष्ट्यादर्थानां पुनर्व्यञ्जकत्वमुदाहृतमित्यर्थः । अनवसरे सङ्कोचोऽपि युज्यते । सोऽपि नास्तीत्याह **प्राप्तेति** । एवञ्च वाच्यस्य वक्त्राद्येकैकवैशिष्ट्येन व्यञ्जकत्वमुदाहार्यम् । वाच्यस्य वक्तृबोद्धव्याद्युभयादिवैशिष्ट्येनापि व्यञ्जकत्वमुदाहार्यमित्याह **वक्त्रादीनामिति** । वक्त्रादीनां मिथः संयोगे सति द्विकत्रिकादिभेदो भवति । तत्रोदाहार्यमिति संबन्धः । वक्तृबोद्धव्यादीनां मिथः द्वयोः संयोगे सति द्विकवैशिष्ट्यमिति ज्ञेयम् । तत्र द्वयोर्वैशिष्ट्याद्व्यञ्जकस्योदाहरणम् ।

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पुलोएसु ।
मा पहिअ रत्तिअंधअ सज्जाइ माणु मज्जिहिसि ॥

काचित् प्रोषितभर्तृका व्यभिचारिणीवसतिं प्रार्थयमानं सञ्जातकामं पथिकं प्रति कथयति । पहिअ हे पथिक ! अत्ता श्वश्रूः । एत्थ अत्र । णिमज्जइ निषीदति सा दूरे शेते सुप्ता च न ज्ञास्यतीत्यर्थः । एत्थ अत्र । समीप एवाहम् । दिअसअं दिवसकम् । सम्प्रति रतान्तरकारी कुत्सितो दिवसः । पुलोएसु विलोकय । दिवसमध्य एव सर्वं द्रष्टव्यमित्यर्थः रत्तिअन्धअ रात्र्यन्धक । रात्रौ शय्याविभागानभिज्ञतया । सह आवयोरित्यर्थे निपातः । सज्जाइ शय्यायाम् । माणु मज्जिहिसि मा शयिष्ठाः ।

अत्रायमभिप्रायः। अत्र वर्णनीयनायकोत्कर्षोऽपि कवितात्पर्यविषयः। स च केनापीति पाठे मयेति व्यङ्ग्येन प्रागेव प्रतीयत इति तत्राप्यगूढता स्यात्। तस्यापीति पाठे तु तज्जयान्नायकोत्कर्षप्रतीतौ गूढतेति ध्वनित्वमेव स्यादिति। न च तथा सति मयेत्यध्याहारे न्यूनपदत्वमेव स्यादिति वाच्यम्। एवं जयानुस्मृत्या सीतया सहालापेन च हर्षयुते वक्तरि तस्यादोषत्वात्। धीरोदात्तस्य रामस्य मयेत्यवक्तव्यत्वात्।

ननु कथं शब्दशक्तिमूलवस्त्वलंकृतिव्यङ्ग्यं नोदाहृतमिति चेन्मैवम्। प्रकृतवाक्यार्थप्रतीतिव्यवधानेन प्रतीयमानस्य द्वितीयार्थस्यालङ्कारस्य वा झटित्यसंवेद्यत्वेन गूढत्वात्। एवं विभावादिव्यङ्ग्येष्वलक्ष्यक्रमेषु तत्प्रसङ्गः। विभावाद्यनुसंधानस्य व्यवधायकत्वात्। अत एव पदव्यङ्ग्येष्वेवोदाहृतं वाक्यव्यङ्ग्येषु वाक्यार्थप्रतीत्या व्यवधानेन न झटित्यवभासः। एवमन्यत्र स्वयमूह्यम्।

**काव्यप्रकाशदर्पणः–अत्रेति**। अत्र श्रीरामो वक्ता। केनापीति सोच्छ्वासवचनेन मयेत्यात्मनः प्रकटनं न युक्तमिति गुणीभूतव्यङ्ग्यत्वम्। "तस्यापी"तिपाठे तस्य तथाविधस्य ममेत्यर्थः। तथास्य श्लोकस्य ध्वनित्वमित्याशयः।

अपरस्य रसादेर्वाच्यस्य वा वाक्यार्थीभूतस्य अङ्गं रसादि अनुरणनरूपं वा।

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥११६॥

अत्र शृङ्गारः करुणस्य।

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥११७॥

अत्र भावस्य रसः।

**बालचित्तानुरञ्जनी**–रसादेरङ्गिनः रसाद्यङ्गं वाक्यार्थीभूतस्य प्रधानस्य वाच्यस्य वस्त्वलङ्काररूपस्याङ्गिनः अनुरणनरूपं वस्त्वलङ्काररूपं वा अङ्गं भवतीत्यर्थः। रसस्याङ्गिनः अङ्गभूतं रसमुदाहरति **अयमिति**। भूरिश्रवसो रणभुवि पतितहस्तावलोकनानन्तरं वचनम्। रशनां मेखलां संभोगावसरे ऊर्ध्वं कर्षति, पीनौ स्तनौ मर्दयति, नाभिश्च ऊरू च जघनं च नाभ्यूरुजघनं स्पृशति, नीवीं विस्रंसयति। सोऽयं करः। "अयं स रशनोत्कर्षी नीवीविस्रंसनः करः नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दन इति युक्तः पाठः, संभोगक्रमलाभात्। तथापि शोकार्तोक्तत्वे न दोषाय। अत्र को रसः कस्याङ्गमित्याकाङ्क्षायामाह

विधत्ते । **अत्रेति** । युद्धस्थले पतितकरावलोकनेन अनुभूतप्राक्तनसंभोगवृत्तान्तः स्मर्यमाणः । सत्वत्र इदानीं तया शोकस्थायिभावः प्रतिपद्यते इति करुणस्याङ्गिनः पोषकत्वेनोपकारकत्वात् अङ्गभूतो विप्रलम्भ-शृङ्गार इत्यर्थः ।

भावस्याङ्गभूतं रसमुदाहरति **कैलासेति** । गिरिभुवः पार्वत्याः । कैलासालयजा तस्य ललाट-लोचनरुचा अरुणकान्त्या निर्वर्तिता निष्पादिता अलक्तकव्यक्तिः लाक्षाकान्तिर्यस्याः । प्रसादार्थं गौरीपादयोः शिवस्य पतनात् सा पादनखद्युतिः वः युष्मान् सदा त्रायतां रक्षतात् । नेत्रकान्तिः स्पर्धाबन्धसमृद्ध स्थितया यत्पादनखद्युत्या सुदृढं रूढा कोकनदस्यानुकारः अनुकरणं तेन सरसा नेत्रयोः कान्तिः सद्यः समुत्सार्य तिरस्क्रियते । शम्भौ प्रणमति सति गौरी आक्तलोचनारुणा भासतेत्यर्थः ।

**अत्रेति** । अत्र पार्वतीविषयस्य रत्याख्यस्य भावस्य शृङ्गारोऽङ्गं कमलाद्युपमितस्य सुखादेरिव रसाद्युपकृतस्यापि रसादेश्चारुत्वदर्शनात् उपस्कारकस्य रसादेरपि वस्तुन इवालङ्कारत्वमनु-भवसिद्धमङ्गीकतव्यम् ।

**सारबोधिनी-**अत्र प्राञ्चः । वाक्यार्थीभूतस्य प्रधानस्य रसादे रसादिवाच्यस्यानुरणनरूपमङ्ग-मिति यथाक्रममन्वय इति योजयन्ति । टीकाकृतस्तु अनुरणनरूपमित्यतो वाकारं पठित्वा वाच्यस्यानुरणनं वेति योजयन्ति । न च रसस्य वाच्याङ्गत्वासंभव इति वाच्यम् ।

तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।
निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ।।

इत्यत्रेदमरण्यमीदृशं स्थित्वा व्यसन्यपि बाहुमात्रसहायोऽपि रक्षांसि जिगायेति रामगतवीरस्य वाच्यारण्योत्कर्षकत्वेनाङ्गभावात् । अत एव महतां चोपलक्षणमिति लक्षितेन उदात्तालङ्कारेण महतां रसादीनामुपलक्षणमङ्गभाव इति वाच्यम् ।

**अयमिति** । एतच्च समरभूमिपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूरभिदध्यौ । शृङ्गारोचित-रशनाकर्षित्वादिविलासस्मरणं विगलद्हृदयत्वात् शोकावेगमधिकमुपजनयतीति शृङ्गारस्य करुणपोषकत्व-मित्याह **शृङ्गारः करुणस्येति** ।

**कैलासालयेति** । कैलासालयः शिवः । अत्र गिरिभुवः कोपवशात् नेत्रयोः शोणकान्तिरासीत् सपादप्रणते शिवे उपगतेति तत्त्वम् । तत्रेदमुत्प्रेक्ष्यते स्पर्धाबन्धेति । रूढा उपचिता । **अत्रेति** । भावस्य त्रायतामित्यवगतस्य कविनिष्ठस्य रसो महादेवनिष्ठा रतिः प्रणत्यवसेया । महादेवोऽपि यत्प्रसादाय प्रणमति तत्र भक्तिरुचितेति रसस्य भावाङ्गता । एवं सर्वत्राङ्गाङ्गिभावेन बोध्यम् ।

**काव्यप्रकाशदर्पणः**—वाक्यार्थीभूतस्य रसादे रसरूपं व्यङ्ग्यम् करुणस्य प्रकृतस्य परिपोषकत्वा-दङ्गत्वं शृङ्गारस्येति भावः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तदाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥११८॥

अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य।

**बालचित्तानुरञ्जनी**—भावस्याङ्गभूतं भावमुदाहरति **अत्युच्चा इति**। कश्चिद्राजानं स्तौति। हे पृथ्वीपते! परितः अत्युच्चाः गिरयः स्फुरन्ति। तानेतानपि बिभ्रत्यपि त्वं किमपि क्लान्ता श्रान्ता नासि। तादृश्यै तुभ्यं नमः इति। आश्चर्येण मुहुर्मुहुः स्तौति। हे राजन्! तावत् इमां बिभ्रत् तव भुजः स्मृतः। वाचो मुद्रिताः। राजप्रभावख्यापने कवेरतितरा रतिः। तस्याश्च भूविषयरतिरेव स्थायी भावोऽङ्गम्न चात्र शृङ्गारः परस्परावस्थाबन्धात्मिकाया रतेस्तावत् ततोऽत्र प्रेयस्विदलङ्कारः। "प्रेयः प्रियतराख्यानं विद्यते यन्निबन्धना" इति वचनात्।

**सारबोधिनी**-**अत्युच्चा इति**। स्फारा विस्तीर्णाः। किमपि किञ्चिदपि।

बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥११९॥

अत्र भावस्य रसाभासभावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ।

अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः।
ददृशे तव वैरिणां मदः स गतःक्वापि तवेक्षणे क्षणात् ॥१२०॥

अत्र भावस्य भावप्रशमः।

**बालचित्तानुरञ्जनी**-भावस्याङ्गभूतौ रसाभासभावाभासौ दर्शयति **बन्दीकृत्येति**। कश्चिद्राजानं स्तौति। हे नृपते! तव सैनिकाः द्विषां मृगदृशः प्रियाः बन्दीकृत्य ताः पश्यतां प्रेयसाम्। अनादरे षष्ठी। पश्यतः प्रियाननादृत्येर्थः। ताः श्लिष्यन्ति, प्रणमन्ति, परितः लान्ति परितः आददते, चुम्बन्ति। हे अचिन्त्यवारांनिधे अचिन्त्यसमुद्रत्वसुकृतिः। अस्माकं दृशोर्निपतितोऽसि। यतः तत् तस्मात् अखिला विपदो विध्वस्ताः"। इति तैः प्रत्यर्थिभिः शत्रुभिः त्वं स्तूयसे। अत्र कस्य को वा अङ्गमित्याकाङ्क्षायामाह **अत्रेति**। शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वात् रसाभासः प्रथमार्धेन द्योतितः शत्रूणाञ्च औचित्ये दैन्यादीनि भावाभासो द्वितीयार्धेन द्योतितः। तौ च वर्णनीयत्वेन अङ्कितस्य राजविषयस्य रतिभावस्याङ्गमित्यर्थः। ऊर्जस्विदलङ्कारः।

"अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।
भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते" इति वचनात् ।

भावस्याङ्गं भावशान्तिमुदाहरति **अविरलेति** । हे राजन् ! तव वैरिणां यो मदः मुहुः अविरलैः करवालस्य कम्पनैः भ्रुकुटीतर्जनगर्जनैश्च सह दृष्टः स मदः तव नेत्रेक्षणात् क्वापि गतः । अत्रापि राजविषयकरतिभावस्य मदलक्षणव्यभिचारिभावस्य भावप्रशमोऽङ्गम् । अत्र भावपरिहाररूपं समाहितमलङ्कारः । प्रशमसहितयोरेकार्थत्वात् भावस्याङ्गम् ।

**सारबोधिनी—अविरलेति** । **अत्रे**ति । भावप्रशमो भावस्याङ्गमिति संबध्यते । एवमुत्तरत्राप्यनुषञ्जनीयम् ।

ननु मदगतपदाभ्यां मदप्रशमयोर्वाच्यतया कथं प्रशमतेति चेन्न । गत इत्यनेन गमनस्य मुख्यार्थस्य बाधात् शान्त इत्यर्थो लक्ष्यते । प्रशमातिशयो व्यज्यते । एवं प्रकृतगर्वार्थकेन मदशब्देन "मदो मद्योपयोगज" इत्यनेनोक्तो मदस्तयोरभेदरूपः संबन्धोऽपि व्यज्यते । तथा च भावप्रशमोऽभिव्यक्तः । सभङ्गमिति ।

साकं कुरङ्गकदृशा मधुपानलीलां कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते ।
अन्याभिधायि तव नाम विभो गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥१२१॥

अत्र त्रासोदयः ।

असोढा तत्कालोल्लसदसहभावस्य तपसः
कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।
प्रमोदं वो दिश्यात् कपटवटुवेषापनयने
त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥१२२॥

अत्रावेगधैर्ययोः सन्धिः ।

**बालचित्तानुरञ्जनी**—भावोदयमुदाहरति **साकमिति** । हे राजन् तव वैरिणि विषमावस्थामकरोत् । अत्र राजविषयकरतिभावस्य शत्रूणां विषमावस्थयात्र सलक्षणो भावोदयो नामालङ्कारः ।

भावस्याङ्गं भावसंधिमुदाहरति **असोढेति** । शैलदुहितुः तस्मिन् काले उल्लसन् असहभावः अशक्तत्वं । पार्वतीदौर्बल्यं यत्र तत् तस्या तपसः । कर्मणि षष्ठी । असोढा तपो मुञ्च त्वमिति भगवतापेक्षितमितित्वसहत्वं तपसः । अथ च कथानां विश्रम्भेषु रसिकः । अस्या विस्रब्धं श्रृणोतीत्यभिलाषवानित्यर्थः । कपटेन यो ब्रह्मचारिवेषः तस्यापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः प्रेरितः स्मरहरः वो युष्मभ्यं प्रमोदं दिश्यात् ।

अत्र त्वराभिव्यङ्ग्य आवेगः, शैथिल्याभिव्यङ्ग्यं धैर्यम्, तयोः संधिः स्मरहरविषयस्य रत्याख्यभावस्याङ्गम्। अत्र भावसंधिरलङ्कारः।

**सारबोधिनी--साकमिति**। तत्र वैरिणि।

**असोढेति**। तपसोऽसोढा झटिति फलं दत्वा तपसः सकाशात् पार्वतीं निवर्तयितुं तयोर्विशेषयति **तत्कालेत्यादि**। तत्काले वपुःप्रादुर्भावकाले उल्लसन् प्रादुर्भवन्, असहभावः फलप्रदाने कालविलम्बाक्षमत्वम्। **अत्रेति**। त्वरागम्य आवेगः शैथिल्यगम्यं धैर्यम्। **पश्येत्यादि**। किञ्चिदभियोक्तारम्।

पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते॥१२३॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता।

एते च रसवदाद्यलङ्काराः। यद्यपि भावोदयभावसंधिभावशबलत्वानि नालङ्कारतयोक्तानि तथापि कश्चिद् ब्रूयादित्येवमुक्तम्।

**बालचित्तानुरञ्जनी**—भावस्याङ्गभूतां भावशबलतामाह **पश्येदिति**। वने काचित् कन्या रत्यर्थिनं प्रत्याह। कश्चित् पश्येत्। हे चपल चञ्चल का त्वरा? अहं कुमार्यस्मि। हस्तालम्बं वितर देहि। हहहा व्युत्क्रमः व्युत्क्रमो जायते। असोत्यव्ययं युष्मदर्थे। त्वं क्व यासि? इत्थं पृथ्वीपरिवृढ राजन्! अरण्यवृत्तेः भवद्विद्विषः कन्या फलकिसलयान्याददाना सती कञ्चिदभिधत्ते। इति राजानं कश्चित् स्तौति। अत्र केषां शबलता? तत्राह **अत्रेति**। पश्येत् कश्चिदिति शङ्का। रे चपलेत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेत्यौत्सुक्यम्। एतेषां शबलता पूर्वपूर्वोपमर्देनोपनिबद्धा। सा राजविषयक रतिभावस्याङ्गमित्यर्थः।

अत्र भावशबलतैवालङ्कारः। यत् प्रतिज्ञातं रसवदादयोऽलङ्कारा वक्ष्यन्त इति तत्प्रस्तुतमित्यनुस्मारयति। **एते चेति**। त एवार्थे प्राधान्ये सति ध्वनिना व्याप्तविषयत्वात्। रसः शृङ्गारादिः। प्रेयः प्रियतराख्यानम्। ऊर्जो बलं तानि विद्यन्ते येषु समाहितेषु [?]। एते रसवदाद्यलङ्कारा उक्ता इत्यर्थः।

ननु रसादिचतुष्टयस्य रसवदाद्यलङ्कारत्वं युक्तं न भावोदयादीनां पुरातनैरलङ्कारकारैरनुक्तत्वादिति शङ्कामनुवदति **यद्यपीति**। अप्राधान्यात् रसादिचतुष्टयस्य अलङ्कारत्ववत् भावोदयादीनामप्यप्राधान्यात् अलङ्कारत्वं दुर्वारम्। भावोदयभावसंधिभावशबलताश्च पृथगलङ्कारा इत्यलङ्कारसर्वस्व-

कारसूत्रानुरोधेन कश्चिद् ब्रूयात् तदप्यङ्गीकार्यमित्येवमुक्तमिति परिहरति **तथापीति** । **एवमिति** । अलङ्कारतयेत्यर्थः ।

ननु गुणीभूतव्यङ्ग्यस्य मध्यमकाव्यस्यापि रसभावार्थपर्यालोचनया उत्तमकाव्य एव पर्यवसानान्मध्यमोत्तमकाव्ययोः सङ्करः संसृष्टिर्वा स्यात् इत्याशङ्कामनुवदति **यद्यपीति** । स्वप्रभेदादिभिरित्यादिशब्देनालङ्कारो ग्राह्यः । स्वशब्देन मध्यमोत्तमशब्दयोः काव्ययोर्ग्रहणम् । सालङ्कारैर्ध्वनिप्रभेदैः, सालङ्कारैर्गुणीभूतव्यङ्ग्यैरित्यर्थः । यद्यपि साङ्कर्यादिकमस्ति तथापि न्यायान्निर्णय इति परिहरति **तथापीति** । प्राधान्यमत्र वर्णनीयतया द्रष्टव्यम् । अयं स रशनोत्कर्षीत्यादौ कविना वर्ण्यमानत्वात् [शृङ्गारस्य] प्राधान्यमस्तीति मध्यमकाव्यमस्तीति भावः ।

**सारबोधिनी—अत्रेति** । पश्येत्कश्चिदित्यनेन शङ्का । चलचपलेत्यनेनासूया । का त्वरेति धृतिः । अहं कुमारीत्यन्तेन मम कुमार्या नैवं स्वातन्त्र्यमित्यर्थपरेण कौमार्यस्मरणात् स्मृतिः । हस्तालम्बमित्यनेन श्रमः । हहहेति दैन्यम् । व्युत्क्रम इति विबोधः । अत्र विबोधपदेन मतिरुच्यते । क्वासि यासीत्यौत्सुक्यम् । शबलता पूर्वपूर्वोपमर्देन परपरोदयः ।

केचित्तु एषां समप्राधान्येन तिलतण्डुलवत् चर्व्यमाणता शबलता राजविषयकस्य रतिभावस्याङ्गमित्याहुः । एते च गुणीभूतव्यङ्ग्ये उदाहरिष्यन्त इति स्ववचनं सङ्गमयति **एते चेति** । रसवदादिपदानि तत्रैव व्याख्यातानि । अथ रसवदादीनां परिष्कारकत्वाभावात् तेषामिति कश्चिदिति इतरोत्कर्षकत्वस्यालङ्कारत्वव्यवहारबीजस्य सत्त्वेऽलङ्कारत्वानुपपत्तिरबोधायैव पर्यवस्यतीत्याक्षिप्ताः प्राञ्चः ।

नन्वयं स रशनेत्यत्र प्रकरणगम्यकरुणस्य प्राधान्येन संभवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्याह **यद्यपीति** । विषय आश्रयः । आदिपदेन विजातीयप्रभेदपरिग्रहः । **क्वचिदित्यादि** । यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः । तेनात्र करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेन चमत्कारित्वात् तेनैव व्यवहारो न ध्वनित्वेन । तदाह **प्राधान्येनेति** । प्राधान्यं तु चमत्कारप्रयोजकत्वम् । अनुरणनरूपयोरलङ्कारवस्तुनोर्वाच्याङ्गत्वं क्रमेणाह ।

**काव्यप्रकाशदर्पणः—पश्येत्कश्चिदिति** । अत्र यं पुरुषं ब्रवीति तस्मात् समं गोप्यः कश्चिद्व्यापार आक्षिप्यते । तेनात्र शङ्का च । **त्वरेति** । आवेगविशृङ्खलार्थं स्थापनरूपा धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बमित्यादिना तदङ्गस्य औत्सुक्यात् न विफलावचः [?] श्रमः । कातर्यप्रकटनं दैन्यम् । हहहा व्युत्क्रमविशेषेणं कथमेवं मया कुमार्या क्रियत इति बोधोऽयमिति यावत् । नीतिमार्गानुस्मृत्यादेरेवार्थनिर्धारणमिति । क्वासि यासीति । तस्य तद्गतरागातिरेकबोधार्थं कञ्चित् कुतश्चिन्मिथ्यागमनमालोक्यौत्सुक्यम् ।

**रसवदादीति** । अयं स रशनेत्यत्र कैलासालयेत्यत्र च रसवदलङ्कारः । अत्युच्चा इत्यादिषु षट्सु क्रमेण प्रेय ऊर्जस्वी समाहितभावोदयभावसंधिभावशबलता व्याख्याताः । षट् प्राचीनैरुक्ताः । एषां गुणीभूतरसादीनां स्वव्यञ्जकवाच्यत्वाच्चमत्कारोपस्कृतामलङ्कारव्यपदेशः । ननु ध्वनिगुणीभूतव्यङ्ग्यानां ध्वनिमिश्रणस्य पृथग्वक्ष्यमाणत्वात् शुद्धानामेवोदाहरणम् । अयं स रशनेत्यादौ तु करुणादिसंभेद इत्याह

यद्यपीति । स्वप्रभेदैः सजातीयप्रभेदैः अयं स इत्यादौ करुणादेस्तत्प्राधान्येऽपि संभोगशृङ्गारादिद्वारेणैवा-स्वादप्रकर्ष इति तेनैव गुणीभूतेन व्यवहारो न्याय्यः । यच्चैवंभूतानामपि मिश्रीभावस्थलेऽप्युदाहरणं तस्मिन् मिश्रीभावफलमिति ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥१२४॥

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः ।

**बालचित्तानुरञ्जनी**—शब्दशक्तिमूलमपरस्याङ्गमुदाहरति **जनस्थान इति** । याचकवचनम् । मया याचकेन रामत्वं रामचन्द्रत्वमाप्तम् । तदेव विशेषणैराह । जनानां स्थाने, पक्षे दण्डकारण्ये, कनक-मृगस्य मार्गणमन्वेषणम् तत्र तृष्णा तद्युक्तधिया पक्षे, कनकमृगे तृष्णा तदन्वितधिया, भ्रान्तं पर्यटितम् । वै प्रसिद्धौ । देहि विश्राणयेति, पक्षे वैदेहि सीते ! इति वचः प्रतिपदं उपसृत्य यथा स्यात् तथा प्रलपितम् । अलमत्यर्थं काभर्तुः ईषद्भर्तुः, अल्पत्वेन तु कुत्सितत्वं लक्ष्यते । वदनपरिपाटीषु वचनश्रेणिषु घटना आदेश-कारितेति यावत् कृता, पक्ष लङ्काभर्तुः रावणस्य, वदनानां परिपाटी पङ्क्तिः, [तत्र] इषुघटना शरयोजना कृता, कुशलं वसु धनं यस्य तस्य भावस्तत्ता, पक्षे कुशलवौ सुतौ यस्याः सा कुशलवसुता सीता तु नाधिगता न प्राप्ता । किं कस्याङ्गमित्याकाङ्क्षायामाह **अत्रेति** । शब्दशक्तिर्मूलं यस्यानुरणनरूपः व्यङ्ग्यतायोग्यः । 'अनुरणनोपम' इति पाठे अनुरणनसदृशः रामवृत्तान्तस्याप्राकरणिकत्वात् । स्वविशेषणोपमेयकथनेनैव रामत्वे सिद्धे रामत्वमिति शब्देनोपादानात् उपमानोपमेयभावो वाक्यार्थीभूतस्य वाच्यस्यार्थस्याङ्गमित्यर्थः ।

**सारबोधिनी—जनस्थान इति** । जनानां स्थानं जनस्थानं नगरग्रामादि दण्डकारण्यं च । कनके मृगतृष्णा निष्फलाशा कनकमृगे तृष्णा च । वै निश्चितम् । देहि प्रयच्छ । वैदेही सीता च । भर्तुर्भरणकर्तुः परिपाटीषु सुवविवलनाङ्गमोठनानवधानादिषु का घटना न कृता । यद्वा, काभर्तुः कुत्सितभर्तुः वदनपरि-पाटीषु वचनभङ्गीषु घटना योजना । अलम् अत्यर्थेन कृता, अलं व्यर्थं वा, पक्षे लङ्काभर्तुः रावणस्य वदनानां परिपाट्यां इषुघटना, शरसंयोजनं च । कुशलं वसु धनं यस्य । एवंभूतौ तौ कुशलवौ सुत यस्याःसा सीता च ।

अत्र प्रकृताप्रकृतयोः कवयितृरामयोः साम्यं व्यञ्जनया बोध्यत इत्याह **रामेणेति** । उपमानोपमेय-भावः साम्यम् । शब्दानां परिवृत्यसहिष्णुत्वेन शब्दशक्तिमूलता । वाच्यस्य "मयाप्तं रामत्वम्" इत्यस्या-न्यत्रान्यतादात्म्यारोपरूपातिशयोक्तिरूपस्याङ्गतामुत्कर्षतां नीतः । मयाप्तं रामत्वमित्यभिधाय कविनेति शेषः । तदनुक्तावुपमाध्वनित्वानपायः स्यात् ।

अयमर्थः । तत्सदृशे तत्त्वारोपस्याचमत्काररूपत्वात् । वाच्यस्य तत्त्वारोपस्य प्रतीयमान साम्य-मुत्कर्षकमित्यपराङ्गता । अथ कुतो रामत्वम् इत्याकाङ्क्षायां निवर्तकस्य साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव नापराङ्गत्वमिति चेन्न । जनस्थानभ्रमणादिरूपसाम्यस्य शब्दशक्तिमूलव्यङ्ग्यतः प्रागेवावगतौ रामत्वा-

रोपरूपवाच्यस्य सिद्धत्वात् । अङ्गोपमायां तु जनस्थानेत्यादिशब्द एव साधर्म्यम् । "वाच्यताम्" इति पाठे वाच्यपदात् तत्प्रत्ययः । तेन वाच्यतां वाच्योत्कर्षताम् इत्यर्थः ।

अन्ये तु, वाच्यतां नीतः मयाप्तं रामत्वमित्यनेनेति शेषः । वारणेन्द्रलीलाम् इति निदर्शनोदाहरणवद्रामत्वमित्यस्य बाधात् रामसदृशार्थकेन तेन वाच्यवत् प्रतीतत्वात् इत्यर्थः । तदङ्गं तु शब्दशक्तिमूलो द्वितीयार्थ इति वदन्ति ।

**काव्यप्रकाशदर्पणः**—अथ शब्दशक्तिमूलं क्रमेणोदाहरति **जनेति** । जनस्थानं नगरग्रामादि दण्डकारण्यं च । कनकं प्रति मृगतृष्णा निष्फला । कनके मृगे तृष्णा च । वं निश्चितम् । देहं प्रतिच्छविः देह—तृष्णा च । अलं व्यर्थम् । काभर्तुः कुत्सितस्वामिनो यद्वदनं तस्य परिपाटीषु परम्परासु, लङ्काभर्तुः रावणस्य वदनानां मुखानां, परिपाटी पंक्तौ, इषुघटना शरसंयोगश्च, कुशलं शुद्धं वसु धनं यस्य, एवंभूतौ कुशलवौ सुतौ यस्याः सा सीता च उपमानोपमेयभावः सादृश्यं, वाच्यतामन्वयोपपादकताम् । वाच्याङ्गम् इति पाठे तु वाच्यः वाच्यार्थः तदङ्गता । असंबन्धरूपाया अतिशयोक्तेरङ्गताम् । अत्र रामत्वम् इत्यध्यवसायेऽपि शब्दशक्तेरेव प्रतीयमानरामतादात्म्यं च तेनाविष्कृतमिति गोपनकृतचारुतामिव स्यात् । गुणीभूतव्यङ्ग्यत्वमिति भावः ।

आगत्य संप्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः ॥१२५॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

**बालचित्तानुरञ्जनी**—अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यमुदाहरति । कश्चिन्नायको नायिकां प्रत्याह हे तन्वङ्गि ! पश्य क्वचित् क्वचिदपि द्वीपे क्षपिता त्रियामा रात्रिर्येन स सहस्ररश्मिरागत्य संप्रति प्रभाते पादपतनेन किरणपतनेन कृत्वा वियोगेन विसंष्ठुलाङ्गीं कृशामित्यर्थः । एताम् अम्भोजिनीं शनैः प्रसादयति लक्षणया विकासयतीत्यर्थः । अत्र वाच्यस्याङ्गं किमित्याकाङ्क्षायामाह **अत्रेति** । अत्र श्लिष्टपदोक्तौ प्रस्तुतरविकमलिनीवृत्तान्तस्य वाच्यस्य प्रधानस्य सामर्थ्यात् वाच्यसंस्कारकत्वेनागतो नायकवृत्तान्तोऽङ्गम् । ननु वियोगसंष्ठुलाङ्गीपादपतनेनेति श्लिष्टशब्दसद्भावात् किमुभयशक्तिमूलः अर्थशक्तिमूलो वेति शङ्कायामाह अत्रेति । नाम्ना व्यपदेशा भवन्तीति न्यायात् अर्थस्यैवाधिक्यात् अर्थशक्तिमूल एवेति भावः ।

ननु किमयमुपमालङ्कारध्वनिः ? किं वा वस्तुध्वनिरित्याकाङ्क्षायामाह **वस्तुरूप इति** । उल्लास्य कालकरवालेत्यादाविव श्लिष्टशब्दभावनया पार्थक्येनार्थद्वयप्रतीत्यभावान्नोपमालङ्कारः । किन्तु वस्तुरूपालङ्कार एवेत्यर्थः । नन्वयं वाच्यसिद्ध्यङ्गमस्तु, मास्तु परस्याङ्गमित्यत आह **निरपेक्षेति** ।

रविकमलिन्यौ न हि नायिकानायकवृत्तान्तमपेक्षेते अध्यारोपेणेत्यनेनैवयप्रतिपत्तिः साध्यते । एवकारेण गुणभावं विना प्रकारान्तरेणान्वयाभावः । निरपेक्षत्वेन सिद्धस्य वाच्यस्य यदुपोद्बलकं तदपराङ्गम् । यत्तु वाच्येऽत्यन्तमेवोपकारकं तद्वाच्यसिद्धयङ्गमिति विवेकात् नायं वाच्यसिद्धयङ्गमिति भावः ।

**सारबोधिनी—आगत्येति** । वियोगो द्वीपान्तरसञ्चारेण संबन्धाभावो विरहश्च । विसंष्ठुलं सङ्कुचितम् । कार्कश्यादिना पूर्वावस्थातो विसंवादि च । क्वचित् द्वीपान्तरे नायिकान्तरे च प्रसादनं विकसनं मानापनयनञ्च । पादो रश्मिश्चरणश्च । पतनमधःसंयोगः प्रणामश्च । **अत्रेति** । नायकेत्येकशेषः । वृत्तान्तो व्यवहारः । स एव न तत्प्रतियोगिनौ नायिकानायकौ, तदुपस्थापकविरहात् । व्यवहारावच्छेदकत्वेनैव तयोः प्रतीतेः तेन प्राधान्येन तदनुपस्थितौ नोपमारूपकध्वनी । तदाह **वस्तुरूप इति** । यद्यपि पादपतनेनेति श्लिष्टपादसद्भावात् शब्दशक्तिमूलं संभवति । तथाप्यर्थशक्तिमूलत्वेन व्यपदेशः, प्राधान्यात् । तद्व्यतिरेकेणापि नायकवृत्तान्तावगमाच्च ।

ननु प्रकृताप्रकृतवृत्तान्तयोरभेदो वाक्यार्थोऽप्रकृतवृत्तान्तोपस्थितिं विना न पर्यवस्यतीति वाच्यसिद्धयङ्गत्वमापतितमित्याह **निरपेक्षेति** । अप्रकृतवृत्तान्तोपस्थितिं विनापि वाक्यार्थस्य पर्यवसानं तु न तत्साकाङ्क्षत्वम् अपि तु तेनोत्कर्षणीयत्वमेवेत्यर्थः । अस्या व्यङ्ग्योक्तेर्वाच्योत्कर्षकत्वेन समासोक्तित्वं तथा द्वयोर्वृत्तान्तयोरारोप्यारोपविषयताया एव संबन्धत्वात् ।

टीकाकृतस्तु—रसस्य वाच्याङ्गत्वेऽप्येतदेवोदाहरणमिति वदन्ति । तेषामयमाशयः । खण्डितानुनयनलक्षणनायकवृत्तान्ततादात्म्यावगम आक्षिप्तरतिरूपेण रसेन वाच्यस्य रविकमलिनीवृत्तान्तस्य परिपोषणमिति रसस्य वाच्याङ्गतेति ।

**काव्यप्रकाशदर्पणः—आगत्येति** । विसंष्ठुलं बिल्वमिति । प्रसादयति विकासयति प्रसन्नां करोति च । पादानां रश्मीनां पतनं प्रणामश्च । नायकश्च नायिका च नायकावित्येकशेषः । अध्यारोपेणैव स्थित इति । न ह्यत्र रविकमलिनीवर्णनरूपवाच्यार्थवत् प्रतीयमानो नायककेलिरूपोऽर्थो वाच्यार्थतां लभते । विशेष्याभिधायिनोः पदयोः उभयार्थानुप्रतिपादकत्वाभावात् । प्रसादयतीत्येतावन्मात्रेणैव प्रकृतनिर्वाहात् । पदद्वयस्य द्व्यर्थत्वेऽपि नोत्कटा शब्दशक्तिरित्यर्थशक्तिमूलोक्तिः । नि·पेक्षेत्यनेनास्य वाच्यसिद्धयङ्गताया भेदश्च रसादौ चानुरणनरूपस्य गुणीभावः । व्यभिचार एवेति (?) तस्यागमनम् (?) । मुखविकारकारी कश्चिदान्तरो धर्मः येन दिग्भ्रमणमिव दृश्यते ।

वाच्यसिद्धयङ्गं यथा

> भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
> मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥१२६॥

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत् ।

यथा वा

गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते
किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा ।
इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-
माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥१२७॥

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य । एतच्चैकत्र एकवक्तृगतत्वेनापरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः ।

**बालचित्तानुरञ्जनी**—अपरस्याङ्गं सप्रपञ्चमुदाहृत्य क्रमप्राप्तं वाच्यसिद्ध्यङ्गमुदाहरति **वाच्येति** । जलदा एव भुजगाः सर्पाः, तत्तु विषम् उदकम् । वियोगिनां भ्रमिश्चेतसोऽनवस्थानम् । अरतिं विषयेष्वनभिलाषं, अलसहृदयतां, प्रलयं इन्द्रियाणां नष्टचेष्टतां, मूर्च्छा मनसो बाह्येन्द्रियैः सह शक्तिनिरोधः । तमः सत्येव चिन्तासामर्थ्ये बाह्येन्द्रियशक्तिनिरोधं, शरीरकार्श्यं, मरणशब्देन प्राणत्यागसाधिका पूर्वक्रियैव पाशबन्धाद्यवसरगता विवक्ष्यते । तच्च प्रसह्य बलात्कारेण कुरुते । चकार उक्तसमुच्चयार्थः ।

अत्र किं व्यङ्ग्यं कथं वाच्यसिद्ध्यङ्गं तत्राह **अत्रेति** । जलदा एव भुजगा इति । जलदानां भुजगरूपणं वाच्यं हालाहलं वस्तु व्यङ्ग्यं विना न सिद्ध्यतीति हालाहलवाच्यस्य सिद्धिकृत् वाच्यस्य भुजगार्थस्य निर्वाहाय विषमितिपदप्रकाश्यशब्दशक्तिमूलो हालाहलो वाच्यसिद्ध्यङ्गम् । अत एव सापेक्षत्वापरस्याङ्गादस्य भेदः ।

अत्रैवोदाहरणान्तरमाह **यथा वेति** । । हे अच्युत कृष्ण अक्षरणशील गच्छामि । भवतो दर्शनात् सुरतसेवाविकलेन प्रीतिः किमुत्पद्यते ? किन्तु हतजनः एवं विजनस्थयोरावयोरन्यथा संभावयति मन्यते इत्यनेन प्रकारेणामन्त्रणभङ्गिः अच्युतेत्यामन्त्रणप्रकारस्तेन सूचितम् । यद्वृथावस्थानं तज्जनितः खेदः । तेनालसां गोपीं श्लिष्यन् पुलकानामुत्करः समूहस्तेनाञ्चिता तनुर्यस्य स हरिः वः पातु ।

अत्र किं व्यङ्ग्यमित्याकाङ्क्षायामाह **अत्रेति** । अच्युतेत्यामन्त्रणेन मद्विषये त्वं न चरम इति यद्व्यङ्ग्यम् तदामन्त्रणभङ्गीत्यादिवाच्यस्य सिद्ध्यङ्गमिति शेषः । वाच्यमेवात्र वैदग्ध्यातिशयकारि तदपि वाच्यं स्वोत्पत्तौ चोपकारकं व्यङ्ग्यमपेक्षते । स्वस्यैवालाभादिति भावः । उदाहरणद्वयस्यैको भेदस्तत्राह **एतच्चेति** । एतद्व्यङ्ग्यं एकत्र भ्रमिमरतिमित्यादौ एक एव कविर्वक्ता, अन्यत्र गच्छाम्यच्युत इत्यादौ पूर्वार्धे गोपी वक्त्री, अपरार्धे कविर्वक्तेत्यनयोरुदाहरणयोर्भेद इत्यर्थः ।

**सारबोधिनी**—**भ्रमिमिति** । भ्रमिश्चेतसोऽनवस्थानम् । अरतिर्विषयेष्वनभिलाषः । प्रलयो बहिरिन्द्रियचेष्टाविरहः । मूर्च्छा मनसो बहिरिन्द्रियासंबन्धः । तमोऽन्धकारदर्शनम् । विषं जलं हालाहलश्च । **अत्र हालाहलमित्यादि** । तथा च जलगरलोद्गारित्वरूपसाधर्म्येण जलदभुजगयोः रूपणमुपपन्नमिति भावः ।

ननु गरलस्य न व्यङ्ग्यता । सत्यपि वृष्टिप्रकरणे प्रसिद्धिवशादभिधया विषपदेन प्रागेव गरलोपस्थितेः । यतः प्रकरणात् प्रसिद्धिरेव बलवती, अन्यथा निरूढार्थविलोपप्रसङ्गात् । प्रकरणबलादप्रसिद्धस्य प्रागुपस्थितौ तद्बोधस्यानवकाशादभिधया व्यञ्जनया च जलस्य पुनर्गरलस्योपस्थितिरिति जला-

भिन्ने गरले जलदभिन्नभुजगे जन्यत्वावगमः अभिधाया विरतत्वात् व्यञ्जनयैव गरलप्रत्यायनञ्च । न च पुनरभिधयैव गरलप्रत्यायनमस्तु किं व्यञ्जनयेति वाच्यम् । तथा सत्यावृत्तिकल्पनापत्तेः । अस्मन्मते तु तेनैवाभिधेयद्वारा व्यञ्जनसिद्धिरित्युक्तम् । अन्यथैवमावृत्तिकल्पने गत शाब्दीव्यञ्जनयेत्यलं बहुना । न च जलगरलयोजलदभुजगयाश्च न कथमुपमेति वाच्यम् । अम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेः, न तु तत्सदृशादिति ।

लक्ष्यान्तरमाह **गच्छामीति** । अच्युतः तन्नामकः, अपरिच्युतधैर्यश्च । किं दर्शनेन ? अपि तु संभोगेन । संभावयतीत्यन्यथा संभावनमावश्यकम् । तत् किमित्यात्मानं वञ्चयाव इत्यर्थो व्यङ्ग्याः । ते चामन्त्रणाद्यर्थस्योपपादकाः । अन्यथा आमन्त्रणभङ्गिस्वरूपाज्ञानेन इत्यर्थाद्येनान्वयः स्यादित्याह **एत-च्चेति** । एतद्वाच्यसिद्ध्यङ्गम् ।

**काव्यप्रकाशदर्पणः**--प्रलयो नष्टचेष्टता । अत्र शब्दवाच्ये जले गरलार्थप्रतीतिं विना जलद-भुजगयोस्तादात्म्यरूपमसङ्गतमिति शब्दशक्तिमूलालङ्कारस्य वाच्यसिद्ध्यङ्गता । **गच्छामीति** । अप-रित्यक्तधैर्यदर्शनेन किं फलम् ? किन्तूपभोगेनैव । **किन्त्विति** ।

अत्र यद्यपि व्यङ्ग्ययोरलङ्कारवस्तुरूपतयाऽप्युदाहरणद्वयदर्शनमुक्तम्, तथापि प्रकारान्तरेण भेदमाह **एकत्रेति** । एकत्र अयं स रशनेत्यादौ व्यङ्ग्यं कविनिबद्धवक्तृगतम् । आमन्त्रेत्यादिवाच्यं तु कविगतम् ।

अस्फुटं यथा

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥१२८॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम् ।

**बालचित्तानुरञ्जनी**--वाच्यसिद्ध्यङ्गमुदाहृत्य तदुत्तरमुदाहरति **अस्फुटं यथेति** । काचित् प्रियं प्रत्याह । त्वयि अदृष्टे दर्शनोत्कण्ठा, दृष्टे सति परित्यज्य गमिष्यसीति दर्शनविच्छेदभीरुता । अतः अदृष्टेन भवता कृत्वा मया सुखं न लभ्यते । दृष्टेन कृत्वापि सुखं न लभ्यते । अत्र किं व्यङ्ग्यमस्फुटमित्याकाङ्क्षा-यामाह **अत्रेति** । तथा कुर्या इति व्यङ्ग्यमस्फुटत्वेन प्रतीयत इति न तथा चमत्कारकारीति क्लिष्टम् । युक्तं शब्दार्थशक्त्या प्रकाशमानं व्यङ्ग्यमितरदस्फुटमिति विवेकः ।

**सारबोधिनी**--**अदृष्ट इति** । अदृष्टयोर्भवदर्थ एव विशेष्यः । भवतेति हेतौ तृतीया । क्लिष्टं व्युत्पन्नैरपि झटित्यसंवेद्यम् ।

**काव्यप्रकाशदर्पणः**-**अदृष्ट इति** । अत्रार्थप्रतीत्यनन्तरं विमर्शालोचनैव प्रतीतिविषयत्वात् । व्यङ्ग्यं क्लिष्टं सहृदयानामप्यगोचरम् । **संदेह इति** । वाच्यव्यङ्ग्ययोर्द्वयोरपि प्रधानप्रत्यासत्तिविशेषात् ।

संदिग्धप्राधान्यं यथा

हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ।।१२६।।

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

**बालचित्तानुरञ्जनी**—क्रमप्राप्तं सन्दिग्धप्राधान्यमुदाहरति **सन्दिग्धेति** । चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चित् परिवृत्तधैर्यो हरस्तु किञ्चित् फलमधरयतः बिम्बफलाधरौ ओष्ठौ यस्य, तस्मिन् मुखे विलोचनानि व्यापारयामास । ओष्ठद्वयं मुखं चेति स्थानत्रये व्यापारणार्थं विलोचनानीति बहुवचनम् । अत एवैतत्सचमत्कारम् । अत्र संदिग्धप्राधान्यं कथमित्यत आह **अत्रेति** । चुम्बितुमैच्छदिति प्रतीयमानं प्रधानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः । उभयोश्चमत्कारकारित्वादित्यर्थः ।

**सारबोधिनी**—**हरस्त्विति** । विलोचनानीति बहुवचनेनोत्कण्ठातिशयो व्यज्यते । तेन रागातिशयपूर्वकदर्शनस्य संभोगान्तरङ्गस्य सामग्र्या चुम्बनेच्छयापि प्राधान्यम् । प्रधानं चमत्कारप्रयोजकम् ।

तुल्यप्राधान्यं यथा

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये ।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते ।।१३०।।

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात् क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम् ।

**बालचित्तानुरञ्जनी**—तुल्यप्राधान्यमुदाहरति **तुल्येति** । जामदग्न्यो रावणस्य प्रधानपुरुषं प्रत्याह । ब्राह्मणावज्ञातिक्रमो भवद्भिश्च क्रियते तर्हि सा भवतां भूतय एव । तथा जामग्न्योऽहं मित्रम् । अन्यथा जामदग्न्योऽयं दुर्मनायते । व्यङ्ग्यकथनपूर्वकं प्राधान्यमाह **अत्रेति** । वाच्यस्य दौर्मनस्यलक्षणस्य रक्षःक्षयलक्षणस्य व्यङ्ग्यस्य च समकाल प्रतीत्या तुल्यं प्राधान्यमित्यर्थः ।

**सारबोधिनी**—**ब्राह्मणेति** । अत्र भूत्युपदेशमित्राभिधानं साम वाच्यम् । उक्तरूपश्च दण्डो व्यङ्ग्यः । तथा चोभयोरपि अनर्थनिबन्धकत्वेन तुल्यता ।

**काव्यप्रकाशदर्पणः**—**ब्राह्मणेत्यादि** । रावणं प्रति परशुरामस्य वाक्यमिदम् । भवतां रक्षसां मित्रं जन्मप्रभृति अखिलरहस्यवेदी । अत्र वाच्यव्यङ्ग्ययोः सामदण्डयोस्त्वल्पतयैव । वैरिमोचनपर्यन्ते त्वप्रस्तुतप्रशंसावत् परस्परानपेक्षया चमत्कारास्पदत्वात् द्वयोरपि समप्राधान्यम् । पूर्ववत् सन्देहालङ्कारवत् ।

वाच्यस्य निषेधस्य सहभावे समकालमेव झटित्यर्थप्रतिभासात्। अत एवात्र विद्यमानानेव मुख्यार्थबाधात् रससंबन्धानपश्यतां केषाञ्चित् लक्षणावृत्त्यङ्गीकारः।

काक्वाक्षिप्तं यथा

मथ्नामि कौरवशतं समरे न कोपाद् दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू संधिं करोतु भवतां नृपतिः पणेन ॥१३१॥

अत्र मथ्नाम्येवेत्यादि व्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।

**बालचित्तानुरञ्जनी**-- क्रमप्राप्तं काक्वाक्षिप्तमुदाहरति **काक्वाक्षिप्तमिति**। भीमवचनम्। समरे कोपात् कौरवाणां शतं न मथ्नामि ? दुःशासनस्य उरस्तः रुधिरं न पिबामि ? सुयोधनस्योरू गदया न सञ्चूर्णयामि ? नृपतिः युधिष्ठिरः पणेन भवतां संधिं करोतु। अत्र किं व्यङ्ग्यम्, तस्य वा कथं गुणभावस्तदाह **अत्रेति**। वाच्यश्चासौ निषेधश्च, तेन भेदे न वाच्यप्रतीत्यनन्तरं प्राधान्यम्। अत्र तु शक्तिरेव स्वासिद्धेराक्षिप्तकाकुसहाया सती अर्थविशेषप्रतिपत्तिहेतुर्न तु काकुमात्रमिति उभयोर्वाच्यव्यङ्ग्ययोर्युगपत् प्रतीतत्वाद् गुणीभूतव्यङ्ग्यत्वमित्यर्थः। न चात्र विपरीतलक्षणास्तीति वाच्यम्। उच्चारणकाल एव कोपात् गद्गदस्वरादिसाकाङ्क्षकाकुबलात् निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गाक्षमारूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभावात्।

**सारबोधिनी--मथ्नामीत्यादि**। सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिरियम्। **मथ्नामीति**। न मथ्नामीति। तेन तत्कृतसंधाने नास्माकं संधिः। **अत्रेति**। प्रतिज्ञातस्य विरुद्धनिषेधाभिधायिषु नञ्सु काकुनिषेधान्तराक्षेपिका अभावाभावश्चावधारणमेवेत्याह **मथ्नाम्येवेत्यादि**। नन्ववधारणस्य चमत्कारित्वे ध्वनित्वे संभवति कथं गुणीभाव इत्यत आह **वाच्येति**। सहभावेन समकालं प्रतीयमानत्वेन तेन व्यङ्ग्यकृतचारुत्वस्य वाच्यनिर्वाहकत्वाग्रहान्न ध्वनित्वम्, किन्तु गुणीभूतत्वमेवेति भावः। अत एव काकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेनाक्षिप्तपदं झटिति प्रत्यायितमित्येतत्परम्। यत्र काकुतोऽपि विलम्बेन प्रतीतिस्तत्र ध्वनित्वमेव। यथोदाहृते "गुरुः खेदं खिन्न"इत्यत्र।

असुन्दरं यथा–

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए बहुए सीअन्ति अंगाइं ॥१३२॥

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्।

**बालचित्तानुरञ्जनी**—असुन्दरमुदाहरति **असुन्दरेति**। वाणीरकुञ्जुड्डीणसउणिकोलाहलं वानीरा वेतसाः कुञ्जलताः, गहनवाणीरकुञ्जोड्डीनशकुनिकोलाहलं, सुणंतीए श्रृण्वन्त्याः, घरकम्म-

**वावडाए** गृहकर्मव्यापृतायाः, **बहुए** वध्वाः, **अंगाइ** अङ्गानि, **सीअन्ति** सीदन्ति। अत्रापि अङ्गानीति बहुवचनेन एकमपि न तादृगङ्गं यदात्मानं सञ्चारयितुं शक्नोति। एवं शकुनिकोलाहलश्रवणमात्रेण अङ्गसादोऽभूदिति वाच्यस्य स्मरणस्य प्रतीतिहेतुत्वेन चमत्कारकारित्वेनासुंदरत्वाद्व्यङ्ग्यमसुन्दरमित्यर्थः।

**सारबोधिनी**--वाणीरेति।

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

अत्रौत्सुक्यावेगसंवलितमनुभावभूतमङ्गावसादरूपं वाच्यमेव मन्मथोन्मादं प्रत्याययति। दत्तसङ्केत इत्यादिव्यङ्ग्यं तु तन्मुखप्रेक्षित्वादसुन्दरमिति।

**काव्यप्रकाशदर्पणः**--वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥

अत्रौत्सुक्यावेगसंवलितसत्त्वभावभूतं वाच्यमेव तन्मन्मथोन्मादं प्रत्याययति। दत्तसंकेत इत्यादि तु तटस्थप्रायमेवेति भावः। एतच्च वाच्यसिद्ध्यङ्गतादेरपवादभूतत्वाद्भिन्नम्। तेषु हि व्यङ्ग्यस्यापि चारुत्वं संभावितम्।

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत् ॥४६॥**

यथायोगमिति।

"व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।
ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात् ॥" [ध्वन्या० २/२९]

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूत व्यङ्ग्यत्वम्।

**बालचित्तानुरञ्जनी**—अगूढादीनामन्योन्ययोजने सङ्करसंसृष्टी च [इति] पूर्ववदेव द्रष्टव्यमित्याह **एषामिति**। एषामगूढादीनां भेदाः शुद्धध्वनिवत् द्रष्टव्याः। यावन्तः शुद्धध्वनिभेदाः तावन्तः सर्वेऽपि मध्यमकाव्यस्यापि किं सन्ति ? नेत्याह **यथायोगमिति**। यथासंभवमित्यर्थः। यथायोगशब्दार्थं ध्वनिकारवदनसंवादपूर्वकमाह **यथेति**। यदा वस्तुमात्रेण केवलवस्तुना अलङ्कृतयः अलङ्कारा व्यज्यन्ते तदा तासामलङ्कृतीनां ध्रुवं निश्चयेन ध्वन्यङ्गता। ध्वनिः शब्दार्थौ [?]अङ्गतां व्यञ्जकत्वेन यासां तासां भावस्तत्ता। अत्र हेतुमाह **काव्यवृत्तेस्तदाश्रयादिति**। व्यङ्ग्यालङ्कारपरत्वात् अलङ्काराणां व्यङ्ग्यानां प्राधान्यात् तत्र काव्ये न गुणीभूतव्यङ्ग्यम्। यदि तत्र व्यङ्ग्योऽर्थो मुख्यो न भवेत् तदा वस्त्वेव मुख्यं स्यात्। न च वस्तुमात्रे काव्यशब्दप्रवृत्तिः। शब्दचित्रत्वेन जघन्यत्वात्।

**सारबोधिनी**—**एषामिति**। एषां समनन्तरमेवोक्तप्रकाराणाम्। यथायोगं यथासंभवम्। पूर्ववत् ध्वनिभेदवत् अर्थान्तरसङ्क्रमितवाच्यत्वादिना। यत्तु अष्टानामेवैषां गुणीभूतव्यङ्ग्यभेदानां परस्पर-

योगातिदेशकमिदमिति तन्न तथा सति वस्तुनाऽलङ्कारव्यक्तौ यथायोगमित्यनेन गुणीभूतत्वव्यवच्छेदानौचित्यात्प्रसङ्गाभावात् । तदेवाह **व्यज्यन्ते वस्तुमात्रेणेति** । वस्तुमात्रेण वाच्यालङ्कारशून्येन । तद्वत्त्वे तु विशेषो व्यज्यते । ध्वन्यङ्गता ध्वनिविशेषहेतुता । काव्यवृत्तेस्तदाश्रयात्, तदुद्देशेनैव **कविना** काव्यनिर्वाहात् । तत्कृतचारुत्वेनैव शब्दार्थयोः काव्यत्वलाभादित्यर्थः । **न तत्रेति** । न गुणीभूतव्यङ्ग्यत्वमपि तु ध्वनित्वमेव । तथा च तैर्भेदैर्न्यूनोऽत्रप्रकारः ।

इदमत्राकूतम् । अलङ्काराः कदाचिदङ्गभूतवाच्यालङ्काररहितेन वस्तुमात्रेण व्यज्यन्ते कदाचिद्वाच्यालङ्कारसहितेन वस्तुना । तत्राद्ये वस्तुमात्रापेक्षयाऽलङ्कारस्याधिकं चारुत्वमिति तत्र सर्वत्र ध्वनित्वमेव । उत्तरत्रापि यत्र वाच्यालङ्कारापेक्षया व्यङ्ग्यालङ्कारस्याधिकं चारुत्वं तत्र गुणीभूतत्वम् । यथा—

नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः ।
आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम् ॥

इत्यत्र प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायाम् । यत्र च व्यङ्ग्यालङ्कारस्याधिकं चारुत्वं तत्र ध्वनित्वमेव । यथा'गाढकान्तदशनक्षतव्यथे'त्यादौ विरोधव्यङ्ग्यायां तुल्ययोगितायम् ।

**काव्यप्रकाशदर्पणः**–एषां समनन्तरोक्तगुणीभूतव्यङ्ग्यप्रकाराणां यथायोगं यथासंभवम् । **पूर्ववत्** ध्वनिप्रकारवत् । **ध्वन्यङ्गतेति** । अङ्गता उपाधिता । तेनोपाधिना काव्यस्य ध्वनित्वमेव न तु गुणीभूतव्यङ्ग्यत्वमिति भावः । काव्यवृत्तेस्तदाश्रयात् । तदभिवादनपूर्वकं ता एताश्च प्राचीनानुसारेणोक्तम् ।

ज्योत्स्नापूरप्रसवधवले सैकतेऽस्मिन् सरय्वा
वादद्यूतं सुचिरमभवत् सिद्धयूनोः कयोश्चित् ।
एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥

इत्युदाहरणं ये केचिद् ध्वनौ पठन्ति तदयुक्तम् । भवतेत्यनेन कृष्णतारूपणस्य स्फुटीकृतत्वादिति लोचनकारोक्तदिशाऽगूढाख्यगुणीभूतव्यङ्ग्यभेदस्य वाच्याङ्गतादर्शनात् । वाच्यालङ्कारस्य पुनर्गुणीभूतालङ्कारस्य व्यञ्जकत्वम् । यथा "साहित्यपाथोधिसुधारसज्ञः कापिञ्जलः कश्चिदपीह लोके" इत्यादिषु वाच्यानां दृष्टान्तप्रतिवस्तूपमादीनां गुणीभूतोपमाव्यञ्जकता ।

**सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

**सालङ्कारैरिति तैरेवालङ्कारैः । अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता**

"सगुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।
सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा" ॥ इति । [ध्वन्या० ३ । ४४]

**बालचित्तानुरञ्जनी--सालङ्कारैरिति ।** सालङ्कारैरित्यनेन शुद्धस्य ध्वनेः केवलैरलङ्कारैर्योगः । अलङ्कारयुक्तैश्च तैरित्यनेन अलङ्कारयुक्तैर्गुणीभूतव्यङ्ग्यैर्योगश्चेति पक्षद्वयमुक्तम् । तैश्चेत्यनेन गुणीभूतव्यङ्ग्यैः केवलैर्योग इति तृतीयः पक्षः । एवं त्रयः पक्षा इत्यर्थः । उक्तेऽर्थे संमतिमाह **तदुक्तमिति** । गुणीभूतव्यङ्ग्यैः अलङ्कारैश्च सह ये वर्तन्ते तैः सङ्कीर्णतया संसृष्ट्या वा स्वभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारान्तरसङ्कीर्णो वाच्यालङ्कारान्तरसंसृष्टः ससृष्ट्यालङ्कारान्तरसङ्कीर्णः संसृष्ट्यालङ्कारान्तरसंसृष्टश्चेति अनन्तप्रकारो ध्वनिरिति भावः । तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वं यथा —

तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां
क्षेमं भद्र ! कलिन्दशैलतनयातीरे लतावेश्मनाम् ।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना
ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः ॥

मय्यनासीने का स्मरतल्पकल्पनेति भावः । अत एवान्योन्यानुरागनिश्चयगर्भमेवाह **जाने इति** । वाक्यार्थस्यात्र कर्मत्वमधुना जरठीभवन्ति मयि तु संनिहिते अनवरतोक्तोपयोगान्न ते जराजीर्णतामापुरित्यर्थः । विगलन्नीला त्विट् येषाम्, अनेन चिरकालप्रोषितस्याप्यौत्सुक्यं ध्वनितम् । अत्र तु सुशब्दे साक्षिशब्देऽविवक्षितवाच्यो ध्वनिभेदः । ते जाने इत्येते च पदे गुणीभूतव्यङ्ग्ये । रूपभेद इति पदेनासाधारणगुणगणोऽभिव्यक्तोऽपि गुणत्वमवगते वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात् जाने इत्यनेनोत्प्रेक्षमाणा तत्र धर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपतया प्रधानीक्रियते [???] ।

तयोः सङ्करो यथा--

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापस" इत्यत्रालक्ष्यक्रमव्यङ्ग्यस्य रौद्रस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिपदैः सङ्करः । यदरयः इत्यादिभिः विभावादिरूपतया रौद्र एवानुगृह्यते वाच्यस्यैव क्रोधोद्दीपकत्वात् गुणीभूतव्यङ्ग्यता ।

वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षया यथा--

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥

कूजितान्दोलितशिप्रातरङ्गजमधुरशब्दमिश्रं भवतीति दीर्घत्वम् विकसितकुसुमामोदेन या मैत्री । अभ्यासाङ्गवियोगान्योन्यानुकूल्यलाभः, तेन कषायः उपरक्तः मकरन्देन कषायः कषायीकृतः । प्रार्थनार्थं चाटूनि कारयति प्रियोऽपि संभोगार्थं चाटूनि करोति । अङ्गेषु चातुः षष्ठिकप्रयोगेष्वनुकूलः ।

अत्र मैत्रीपदं ह्यविवक्षितवाच्यो ध्वनिः। पदान्तरे चोत्प्रेक्षादिवाच्यालङ्कारसङ्कीर्णत्वं वा लक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति सालङ्कारे काव्ये सर्वत्रैव द्रष्टव्यम्। न त्वत्र ध्वनेर्भेदादिभिः संसृष्टिसङ्करौ, किन्तु तेषामन्योन्ययोजनयापि तौ स्यातामित्याह **अन्योन्ययोगादिति**। सूत्रं व्याकरोति **एवमिति**।

**सारबोधिनी**—ध्वनिगुणीभूतव्यङ्ग्यमिश्रणमाह **सालङ्कारैरित्यादि**। ध्वनेर्योगो मिश्रणम्। **तैरेवालङ्कारैरिति**। समासोक्तिस्थले—'आगत्य संप्रति वियोगे'त्यादौ व्यङ्ग्यस्य नायकवृत्तान्तस्य रविकमलिनीवृत्तान्तोत्कर्षतां प्राप्य समासोक्त्यलङ्कारतां प्राप्तैः अलङ्कारयुक्तैरित्यर्थः। स्वोक्ते प्रामाणिकसंमतिमाह **तदुक्तमिति**। सः ध्वनिः प्रभेदैः अर्थान्तरसङ्क्रमितवाच्यादिभिः। सालङ्कारैर्वाच्यालङ्कारसहितैः। **भेदेति**। प्रभेदोऽवान्तरभेदः।

**काव्यप्रकाशदर्पणः—सालङ्कारैरिति**। ध्वनेरुक्तभेदवतः तैर्गुणीभूतव्यङ्ग्यैः अर्थादष्टानामप्येषां ध्वनिभेदसंख्यानामित्याह। सजातीयसंसृष्टौ षट्त्रिंशत्क्रमः, सङ्करे तु शतमष्टोत्तरमिति। ततश्चत्वारिंशदधिकशुद्धभेदाष्टकेन सह चैवंविधसंख्याकभेदवद्भिः। **संसृष्टीति**। एकया संसृष्ट्या त्रिभिश्च सङ्करैर्योगः संबन्धः। **तैरेवालङ्कारैरिति**। वाच्यालङ्कारव्यङ्ग्यैः। अलङ्कारयुक्तैरिति वाच्यालङ्कारयुक्तैः। उद्योतते प्रकाशते। ध्वनिरित्यनुषङ्गः। भेदानां विशेषाणां गुणने शुद्धजातीयसङ्कीर्णसंसृष्टतया शृङ्गारस्य विवक्षितान्यपरवाच्यविशेषासंलक्ष्यक्रमविशेषरसविशेषस्य संख्यानन्त्यं पूर्वोक्तरीत्या शुद्धसङ्कीर्णसंसृष्टताभिन्नानां ध्वनिगुणीभूतव्यङ्ग्यानाम्। संप्रति व्यञ्जनावृत्तिसद्भावे विप्रतिपत्ति निरासादिभिराभासमानस्य प्रकारस्य प्रकरणस्य संप्रतिपत्तये संक्षिप्य ध्वनिगुणीभूतव्यङ्ग्यभेदमहासङ्कलनेन सङ्क्षेपेण ध्वनेः, ध्वननव्यापारोपहितस्य। तेन ध्वनेर्गुणीभूतव्यङ्ग्यस्यापीत्यर्थः। त्रीणि स्वरूपाणि वस्त्वलङ्काररसादिलक्षणविचित्रं वक्रोक्तिरूपं अलङ्काररूपम्। अलङ्कार्यत्वेऽपि वक्रोक्तिरूपतया अलङ्कारपदवाच्यम्। एतदेवाह **अत्रापीति**। लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम यस्य रसभावादेरित्यर्थः।

**अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ॥४७॥**

एवमनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना। तथाहि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम् का गणना तु सर्वेषाम्।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि। किञ्चिद्वाच्यतां सहते। किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम्। विचित्रन्त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यम्, तथापि ब्राह्मणश्रमणन्यायेन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधीयेत। न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेः। तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयत इति निश्चीयते। तेनासौ व्यङ्ग्य एव। मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

**बालचित्तानुरञ्जनी**—गणनायाः प्रभूततरत्वमेवोपपादयति **तथाहीति**। एकस्यैव शृङ्गारस्य भेद-

प्रभेदगणनायामानन्त्यम्, किं वक्तव्यं सर्वेषाम्! तद्गणनायामानन्त्यं स्यादित्यर्थः। यद्येवमानन्त्यं स्याद्भेदानां भेदगणनमेव दुर्घटमित्यत आह सङ्कलनेनेत्यादि। सङ्कलनं सङ्ग्राहकेणाप्युपाधिना एकीकरणमित्यर्थः। तत्र हेतुमाह **व्यङ्ग्यस्येति**। त्रिरूपत्वाद्वस्त्वलङ्काररसरूपत्वादित्यर्थः। तदेव विशदयति **तथाहीति**। किञ्चित् रसादिरूपम्। अन्यथा वाच्यतां न सहते। वाच्यत्वस्य स्पर्शाक्षमत्वमित्यर्थः। तयोर्मध्ये वाच्यतासहस्य द्वैविध्यमाह **तत्रेति**। तयोः स्वरूपमाह **अविचित्रमिति**। मात्रग्रहणेन एतदाह। यथा विधिनिषेधादुभयात्मतया वस्तुध्वनिः सङ्क्षेपेण सुवचः न तथालङ्कारध्वनिः, अलङ्काराणां भूयस्त्वादिति। ननु यदालङ्कारो व्यङ्ग्यः तदा तस्यालङ्कार्यत्वात् कथमलङ्कारध्वनिरित्याह **यद्यपीति**। तथेत्यलङ्कारध्वनिः। तुशब्देन रसादेः वस्त्वलङ्काराभ्यां विशेषं दर्शयन् आह **रसादीति**। आदिशब्देन भावतदाभासतत्प्रशमा उच्यन्ते। रसादयः केवलं व्यापारेण जीवतया भवन्ति। व्यापारान्तरेणेत्याह **स हीति**। यदि स रसादिर्वाच्यः स्यात् तदा अयं रसः, अयं शृङ्गारः, अयं वीरः इत्यादिशब्दैरभिधेयेत। तदाभिधेयविभावादि प्रयोगाद्यन्वयव्यतिरेकित्वादित्यर्थः। अन्यथा व्यतिरेकानुविधायित्वमेवाह **तत्प्रयोगेऽपीति**। रसादिशृङ्गारादिशब्दप्रयोगेऽपीत्यर्थः। **प्रतीयत इति**। प्रतीतिविषय इत्यर्थः। रसभावादिशब्दसहिते "शृङ्गारी गिरिजानन" इत्यादौ केवलशृङ्गारहास्यकरुणादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते मनागपि न रसप्रतीतिः। रसशृङ्गाराद्यभिधानं विनापि केवलेभ्यो विभावादिभ्यः प्रतीतिश्चेत्यन्वयव्यतिरेकाभ्यां न कथञ्चिदभिधेयत्वं रसादीनामिति भावः। एतेन स्वसंवेदनासिद्धत्वमुक्तमिति द्रष्टव्यं तर्हि रसादिर्लक्ष्य एवास्तु नेत्याह **मुख्यार्थेति**। मुख्यार्थे विभावानुभावादौ लक्षणामूलबाधाद्यभावान्न लक्षणा काव्यात्मकशब्दनिपीडनेन रसचर्वणादर्शनात्। अत एवालक्ष्यक्रमो रसादिरित्युक्तमिति भावः।

ननु द्वितीयोल्लासे व्यङ्ग्यविचारःकृतः पुनः किमिति क्रियत इत्याशङ्क्यात्र लक्षणामूलध्वनेर्व्यङ्ग्यत्वमुपपादितमित्याह प्रतिपादितं विस्तरेणेति शेषः। तर्हि किमवशिष्टमित्याशङ्क्य **अर्थान्तरेति**। अभिधामूलस्य ध्वनेर्व्यङ्ग्यत्वं पूर्वं नोपपादितमिति तत्प्रतिपादनायाह **शब्दशक्तीति**।

**सारबोधिनी**—संप्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमारभते। **सङ्कलनेनेति**। सङ्कलनं सङ्ग्रहः। सङ्क्षेप इति यावत्। केनाप्युपाधिना एकीकरणं ध्वनेर्ध्वननव्यापारोपहितस्य तेन गुणीभूतव्यङ्ग्यस्यापि सङ्ग्रहः। त्रिरूपत्वात् वस्त्वलङ्काररसादिरूपत्वात्। सहत इति वाच्यमपि कर्तुं शक्यत इत्यर्थः। तच्च वस्त्वलङ्काररूपम्। **किञ्चिदिति**। रसादिरूपम्। रसादिति लक्षणशब्दो लक्ष्यते। ज्ञाप्यतेऽनेनेति नामार्थः। आदिशब्दाद्भावादिपरिग्रहः। स्वप्नेऽपीति। सर्वथैवेत्यर्थः। अत्र हेतुमाह **स हीति**। हि यस्मात्। अभिधानं चर्वणेति केचित् तन्न तथा सति लक्षणापत्तेः। वस्तुतस्तु अभिधीयेतेत्येव पाठः। लिङर्थस्तु चर्वणारूपेष्टसाधनत्वम्। **तदिति**। तस्य रसादिपदस्य शृङ्गारादिपदस्य वा। प्रयोगेऽपीत्यर्थः। अप्रतिपत्तेरिति। अचमत्कारित्वादित्यर्थः। **विभावादिति**। तेन विभावादिघटितसामग्र्या एव तद्व्यञ्जकत्वं न रसादिपदस्य, प्रत्युत तस्य स्वशब्दवाच्यत्वे दोष इति वक्ष्यते। प्रतीयत इति चमत्कारविषयीक्रियत इत्यर्थः **बेनासौ व्यङ्ग्य एवेति**। चमत्कारगोचर इति शेषः। नन्वलङ्कारादेरप्यलङ्कारपदेनोपादाने उपमादिपदेन वा न चमत्कारः प्रादुर्भवतीति कथं रसादिवैलक्षण्यमिति चेन्न। तेषां पदसमन्वयबलेन क्वचित्प्रतीतानामपि चमत्कारित्वदर्शनात् नैवं रसादीनामिति तेषां विभावादिद्वारकैव प्रतीतिः। अथ विभावादिवाचकेभ्यो रसप्रतीतिनियमेन तत्र तेषां शक्त्यभावाल्लक्षणास्तु इत्याशङ्क्य निराकरोति।

**काव्यप्रकाशदर्पणः—स्वप्नेऽपीति**। सर्वथेत्यर्थः। तस्यावाच्यत्वे **हेतुमाह स हीति**। हि यस्मात्। तस्य रसादिपदस्य शृङ्गारादिपदस्य वा प्रयोगे। **तदप्रयोगेऽपीति**। "शून्यं वासगृहमि"त्यादौ विभावादि-सामग्र्या। एवं च "शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धे हरिः क्रीडती"त्यादौ विभावादिसामाग्र्या एव तद्व्यञ्जकत्वम्। न च शृङ्गारादिपदस्य प्रधानरसस्य स्वशब्दवाच्यत्वे दोष इति वक्ष्यते।

**अर्थान्तरेति**। वाच्यपदस्य प्रत्येकमन्वयः। प्राक् लक्षणानिरूपणप्रस्तावे। **शब्देति**। "भद्रात्मन" इत्यादौ नियन्त्रणेनाशक्यान्तरस्याभिधाने निर्विवादमिति तत्रैवास्मद्व्याख्यारीत्या। **अर्थेति**। विशेषे संसृष्टः करेणायुज्यते न शक्यते, अनन्तदोषादित्यर्थः।

अर्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम्। शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य, तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम्।

अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थाना-माकाङ्क्षासंनिधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभि-हितान्वयवादे का वार्ता व्यङ्ग्यस्याभिधेयतायाम्।

**बालचित्तानुरञ्जनी–शब्दशक्तीति**। शब्दशक्तिमूलानुरणनरूपव्यङ्ग्ये ध्वनौ "गावो वः पाव-नानामि"त्यादौ नियन्त्रणेन प्रकरणनैयत्येनानभिधेयस्यावाच्यस्य सुरभिलक्षणस्यार्थान्तरस्य व्यङ्ग्यत्वम्। तेन व्यङ्ग्यरूपेणार्थान्तरेण सह प्राकरणिकस्यार्थस्योपमानोपमेयभावपरिकल्पनात्। उपमादेरलङ्कारस्य व्यङ्ग्यत्वं च सर्वसंमतमिति भावः। अर्थशक्तिमूले कथमित्याशङ्क्याह। अर्थशक्तिमूले ध्वनौ व्यङ्ग्य-स्याभिधेयतायां का वार्तेति सम्बन्धः। विशेषे व्यक्तिविशेषे सङ्केतः कर्तुं न शक्यते। आनन्त्यात् व्यभिचारा-दिति भावः। **सामान्यरूपाणामिति**। सामान्यभूतस्यार्थमात्रविश्रान्तानामित्यर्थः। तथा चोक्तम्–सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यमिति। प्रतिपत्तुर्जिज्ञासा आकाङ्क्षा। आकांक्षितस्य नैकट्यं संनिधिः। संबन्धार्हत्वं योग्यता। एतत्त्रितयवशात् संसर्गे सति विशेष्यविशेषणभावलक्षणः परस्परमनुकूले अन्वये सति अपिशब्दो भिन्नक्रमः। यत्र वाक्यार्थोऽपि अपदार्थः पदैरनभिधेयः तदभिहितानां पदार्थानां उत्तरकालान्वये परस्परानुकूललक्षणं [?] वदतां भाट्टादीनां मते व्यङ्ग्योऽभिधेयो न भवतीति किं वक्तव्यमित्यर्थः।

**सारबोधिनी––मुख्यार्थेति**। न च तात्पर्यानुपपत्त्या लक्षणास्त्विति वाच्यम् अतात्पर्यविषयीभूत-स्यापि ध्वननात्। न च योगोऽस्ति न च ज्ञाप्यज्ञापकभावयोगोऽस्तीति वाच्यम्। वृत्तिं विना तस्यैवा-सिद्धेः। नापि प्रयोजनमस्ति। न हि रसे लक्ष्ये प्रयोजनान्तरं रसपर्यन्तेनैव प्रतीतिविश्रान्तेरिति। ननु मा भवतु रसादौ लक्षणा, वस्तुनि व्यङ्ग्ये साऽस्त्विति। अत आह **अर्थान्तरसङ्क्रमितेत्यादि**। तत्र रूढ्यभावेन प्रयोजनवत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न लक्ष्यत्वमनवस्थापत्तेरित्याह **प्रागिति**। **प्रतिपादित-**मेवमप्यनवस्था स्यादित्यादिना।

शब्दशक्तीत्यादि। अनभिधेयस्य तदानीमभिधया बोधयितुमुपमादेरलङ्कारस्य चाभिधाप्रवृत्त्य-विषयस्य निर्विवादि व्यङ्ग्यत्वम्। शाब्दबोधस्य वृत्तिविषयत्वानियमात्।

अभिहितान्वयवादे व्यङ्ग्यस्याभिधेयतां निरस्यति **अर्थेत्यादि**। विशेषे तद्वयक्तिविशेषे पदार्थ-संसर्गो वा न युज्यते न शक्यते आनन्त्यात् व्यभिचाराच्च । वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेश्च। कथं तर्हि वाक्यार्थावगतिरित्याह **आकाङ्क्षेति**। अयमर्थः—पदार्थशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वारा आकाङ्क्षादिसांनिध्यात् समभिव्याहृतपदार्थेन सह स्वार्थान्वयं बोधयतीति कार्यकारणभावकल्पना । इयमेव संसर्गमर्यादेत्युच्यते। तथा च संसर्गमर्यादयैव वाक्यार्थबोध इति भाव इत्युक्तं प्राक्। इदं भट्टैकदेशिमते। भट्टैस्तु संसर्गांशे लक्षणाया एव स्वीकृतत्वात्। सामान्यरूपाणां जातिरूपाणां विशेषवपुर्वैशिष्ट्यात्मा। **का वार्तेति**। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। व्यङ्ग्यस्य वाक्यार्थादपि दूरभावित्वाद्व्यङ्ग्यस्याभिधेयतायां कः प्रसङ्ग इत्यर्थः।

**काव्यप्रकाशदर्पणः**—सामान्यरूपाणामिति विशकलिताकाराणां पदार्थानां पदैरभिधया बोधितानाम्। अत्र विशेषे सुलक्षणे सामान्यरूपाणां गोत्वादिसामान्यानामेव पदैरभिधानानन्तरं तद्विभावादाक्षिप्तसुलक्षणानाम्। नैयायिकमते तु विशेषे प्रस्तुतोपयोगिनि। ततो नानन्त्यव्यभिचारः। सङ्केतस्याशक्यतया जात्यवच्छेदकतया पदैरभिहितानां परस्परं संसर्गे विशेषणरूपद्वितीयलक्षणोपनीते अपदार्थः एकैकपदलभ्यार्थः विशेषेण सहान्वितानामिति लक्षणास्वरूपः। वस्त्वलङ्काररूपस्य व्यङ्ग्यार्थस्य वाक्येऽपि पश्चाद्भागितया। शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति। येन अभिधावृत्तिबोध्यतया दुरधिप्रकर्षात् का कथेत्यर्थः।

येऽप्याहुः—

"शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया ॥१॥
अन्यथाऽनुपपत्या तु बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबोधेत संबन्धं त्रिप्रमाणकम्" ॥२॥

इति प्रतिपादितदिशा 'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयानुमाय तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते। परतः 'चैत्र गामानय', देवदत्त अश्वमानय, देवदत्त गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यत इति विशिष्टा एव पदार्था वाक्यार्थः। न तु पदार्थानां वैशिष्ट्यम्।

**बालचित्तानुरञ्जनी**—अन्विताभिधानवादिमतेऽपि व्यङ्ग्यस्य वाच्यत्वं नोपपद्यत इत्याह **येऽप्याहुरिति**। ये अन्विताभिधानवादिनः तन्मतं प्रतिपादयितुमाह **शब्दवृद्धेत्यादि**। शब्दाश्च वृद्धाभिधेयाश्च तान् वृद्धयोः व्यवहरमाणयोः कियद्व्युत्पन्नः पार्श्वस्थो बालः श्रोतुर्मध्यमवृद्धस्य प्रतिपन्नत्वमर्थावगतित्वञ्च

ग्रर्थानयनलक्षणया चेष्टयानुमानेन पश्यति। ततो मध्यमवृद्धबुद्ध्यन्यथानुपपत्त्या शब्दैः प्रतिपादितां शक्तिं अर्थे च प्रतिपाद्य, तामवगच्छेत्। एवं च प्रत्यक्षानुमानार्थापत्तिलक्षणं त्रिप्रमाणकं संबन्धं बुद्ध्यन्ते लोकाः। अर्थापत्त्या, अर्थापत्तेः साक्षात् व्यक्तिविषयत्वात् इतरयोश्चार्थापत्तेरनुत्पादकत्वादिति भावः। प्रतिपादितदिशा प्रतिपादितप्रकारेण, तच्चेष्टया मध्यमवृद्धचेष्टया, तत्र वाक्यवाक्यार्थविषये, व्युत्पद्यते व्युत्पन्नो भवति। व्यवहर्तृ गतयोः शब्दप्रयोगार्थप्रतिपत्त्योरविभक्तोद्देशवाक्यत्ववाक्यार्थनिष्ठतया पूर्वं हेतुफलत्वमनयोर्भवतीत्यर्थः। तर्हि व्युत्पत्तिः कथमत आह **परत इति**। परतः तदनन्तरम्। चैत्र गामानय देवदत्त अश्वमानयेत्यत्र आनयनक्रिययोरुद्वापावापौ, अन्वयव्यतिरेकाभ्यां पदानां सङ्केतो गृह्यत इति संबन्धः। प्रवृत्तिनिवृत्तीति वृद्धव्यवहाराभ्यां शब्दार्थसंबन्धाध्यवसायः। स च व्यवहारः प्रवृत्तिनिवृत्तिरूपः। प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे इति। अतो विशिष्ट एव पदार्थे पदानां संबन्धाध्यवसाय इत्यर्थः। **वाक्यमेवेति**। अनन्वितार्थपदं प्रयोगयोग्यमिति प्रयोज्यं वाक्यमेवेत्यर्थः। अन्वितैः इतरपदार्थान्वितैः। **विशिष्टा एवेति**। अन्वितानां विशिष्टानामेव पदार्थानामभिधेयत्वम्। वाक्यार्थो हि क्रियाकारकसंसर्गरूपः। कारकाणां क्रियासंसर्गोन्मुखतया क्रियाणामपि कारकविरहासहिष्णुत्वेनान्वितानामेव स्वशब्दैरभिधानं भवतीत्यर्थः। एवकारव्यावर्त्यमाह **नत्विति**। सामान्याकारेणाभिहितानां पदार्थानां पश्चाद्वैशिष्ट्यं वाक्यार्थत्वेन न संभवति। ननु किं पदार्थसामान्यान्विते स्वार्थे पदानां संकेतग्रहः, आहोस्वित् पदार्थानां विशेषान्विते? नाद्यः, विशेषतो व्युत्पत्तिर्न स्यात्। नापि द्वितीयः, प्रतिवाक्यं स्वार्थस्य विशेषरूपत्वात्। अस्यैव वाचकमित्येवंरूपेण पदानां प्रत्यभिज्ञानम् तस्मात् आनन्त्यदोषश्च स्यादित्यन्विताभिधानवादपक्षः।

**सारबोधिनी**--एवमभिहितान्वये व्यङ्ग्यस्याभिधेयतां निरस्यान्विताभिधानवादेऽपि तन्निरस्यति **येऽपीत्यादि**। आद्या व्युत्पत्तिर्व्यवहारात्। अत्र व्युत्पादको वृद्धः प्रयोजकश्च प्रयोज्यः। व्युत्पित्सुश्च बालो वृद्धव्यवहारदर्शनाद्व्युत्पद्यते। **तदाह शब्देति**। शब्दो गामानयेत्यादिरूपः। एतान् श्रोत्रादिना, प्रत्यक्षेण प्रत्यक्षहेतुना। अत्र व्युत्पत्तिकाले पश्यति जानाति। श्रोतुः प्रयोज्यवृद्धस्य प्रतिपन्नत्वं ज्ञातार्थत्वम् अनुमानेन चेष्टया गवानयनादिचेष्टारूपेणानुमानेन पश्यति जानाति। अनुमानस्य येयमस्य स्वतन्त्रप्रवृत्तिः सा बुद्धिपूर्विका स्वतन्त्रप्रवृत्तित्वात् मदीयैवंविधप्रवृत्तिवत्। सा च बुद्धिरेतद्वाक्यजन्या एतदन्वयव्यतिरेकानुविधानात्। बुद्धिप्रवृत्त्योस्तु समानविषयत्वं स्वाभाविकमेव। **द्वयात्मिकामिति**। आश्रयभूतस्य वाक्यस्य वाचकत्वं विषयभूतस्यार्थस्य वाच्यत्वमेतद्द्वयात्मा स्वरूपं यस्यास्तथाभूतां शक्तिं वाच्यवाचकभावात्मिकामित्यर्थः। अनुपपत्तिश्च शब्दादर्थज्ञानं वृत्तिं विनानुपपन्नम् अन्यथातिप्रसङ्गात्। सा च शक्तिः स्वाभाविकसंबन्धत्वादित्याकारा। **त्रिप्रमाणकमिति**। प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम् अनुपपत्तेरप्यर्थापत्तिभेदत्वात्।

कारिकाद्वयं विवृणोति **देवदत्तेति**। देवदत्तेत्यादि सत्यन्तं शब्देत्यादेः पश्यतीत्यन्तस्य विवरणम्। वाच्यवाचकसंबन्धग्रहणमेव व्युत्पत्तिरेतन्निर्विभागस्यार्थस्य प्रतिपादकमित्यवधारयतीत्यर्थः। वाच्यवाचकभावसंबन्धमिति शक्तिमित्यस्य विवरणम्। **परत इत्यादि अवधारयतीत्यन्तश्च** त्रिप्रमाणकमित्यन्तस्य विवरणम्। विशेषशक्त्यवधारणमाह **परत इत्यादि**। तस्य गवादिशब्दस्य तं तं गवादिरूपमर्थम्। विशेषशक्त्यवधारणे **हेतुमाह इत्यन्वयव्यतिरेकाभ्यामिति**। इति गवादिपदप्रयोगाप्रयोगाभ्याम् यावन्वयव्यतिरेकौ गवादिषु प्रवृत्यप्रवृत्ती ताभ्यां हेतोरित्यर्थः। ननु तथापि पदार्थवैशिष्ट्यरूपो वाक्यार्थः

आकाङ्क्षादिमहिम्ना भासताम्, किं तत्र शक्त्येत्यत आह **प्रवृत्तिनिवृत्तीत्यादि** । प्रवृत्तिनिवृत्तिकारीति प्रवृत्तिनिवृत्तिकारित्वादित्ययमर्थो बोद्धव्यः । **गामानयेति** । गवानयने प्रवृत्तिकारि, गां नयेत्यत्रैव निवृत्तिकारि । **प्रयोगयोग्यमिति** शब्दप्रयोगस्य परार्थत्वात् । वाक्येनैव परस्येष्टानिष्टसाधनयोः प्रवृत्ति-निवृत्तिसंभवात् अतो वाक्यस्यैव सदा प्रयोगादन्वितेऽर्थे उपस्थितत्वात् पदानामभिधानसामर्थ्यमवधार्यते इति वर्तुलितार्थः । **इतीति** । यस्मादेवं व्युत्पत्तिग्रहणप्रकारस्तस्माद्वाक्यस्थितानां वाक्यतया परस्परान्वित-बोधकतया स्थितानां पदानां अन्वितैः पदार्थैः सह सङ्केतो गृह्यत इत्यन्वयः । **पदानामिति** । विशेषयति **अन्वितानामिति** । परस्परसाकाङ्क्षाणामित्यर्थः । तेन 'दण्डेन गां नये'त्यत्र करणत्वान्विते गवि न गोपदस्य शक्तिः, प्रत्ययस्य स्वप्रकृत्यर्थं प्रत्येव साकाङ्क्षत्वात् । अन्वितैः पदार्थान्तरेण संसृष्टैः पदार्थैः । **इतीति** । यतोऽन्विते व्यवहारस्तत इत्यर्थः । विशिष्टाः पदार्थाः पदवृत्तिविषयाः न त्वन्वितपदानां पदवृत्तिविषयाणां वैशिष्ट्यमन्वयो वृत्तिं विनैवाकाङ्क्षादिगम्य इति शेषः ।

**काव्यप्रकाशदर्पणः**—संप्रत्यन्विताभिधानवादिभिरपि व्यञ्जनावृत्तिरङ्गीकार्येत्याह **आक्षिप्येति** [?]। आहुरित्यादिना विध्यादेश्चर्चेत्यन्तेन ग्रन्थेन । येऽप्याहुस्तेऽप्यन्विताभिधानवादिनां मत इति तूत्तरेण संबन्धः । इतिशब्देन शब्देत्यादिकारिकाद्वयपरामर्शः । दृशा दर्शनेन । दिशेति पाठे मार्गेण । कारिकार्थश्च, शब्दो गामानयेत्यादिवाक्यम् वृद्धौ प्रयोजकप्रयोज्यावभिधेयः प्रयोजकवृद्धस्य गामानयेत्यादिवाक्यश्रवणा-नन्तरं प्रयोज्यस्य गवानयनादिः, एतान् श्रोत्रेण प्रत्यक्षेण पश्यतिःगृह्णाति । अर्थात् व्युत्पित्सु अत्र व्युत्पत्तिकाले श्रोतरि प्रयोज्यवृद्धस्य प्रतिपन्नत्वं वृद्धवाक्यावगतित्वं गवानयनादिचेष्टया अनुमानेन पश्यति जानाति । अनुमितिशरीरं च, येयं प्रयोज्यवृद्धस्य प्रवृत्तिः सैतदनुगुणपूर्विका प्रवृत्तित्वात् तदादायैवंप्रवृत्ति-त्वात् । सा च बुद्धिरेतत्प्रयोगजन्या एव । तदन्वयव्यतिरेकार्थानुविधानादिति । द्वयम् आश्रयभूतस्य वाक्यस्य वाचकत्वं विषयभूतस्य चार्थस्य व्यङ्ग्यस्यानियमनं आत्मा स्वरूपं यस्यास्तथाभूतां शक्तिं वाच्यवाचकरूपं संबन्धम् । अन्यथानुपपत्त्या अर्थात् प्रयोज्यवृद्धे प्रवृत्ते जानाति । नन्वेवं भिन्नवाक्यभागयोगात् प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया, सा चानान्त्याद्दुरुपपादेति शब्दव्यवहारोच्छेदः स्यादित्यत आह **अर्थापत्त्या चेति** । चकारेण बोधेच्छक्तिं द्वयात्मिकामित्यस्य परामर्शः । अवगम्यत इति तु अर्थत एव । अयमर्थः । गृहीत-सङ्केतात् वाक्यभागरूपस्य पदस्याकारो यस्मिन्नर्थे सङ्केतस्तस्मिन्नर्थे तस्यैव पदस्य शक्तिरर्थापत्त्यावधा-र्यत इति । नानावाक्येषु पूर्वापरपदयोगेऽपि न व्यामोहः । एवं चोक्तप्रकारेण प्रत्यक्षादित्रिप्रमाणकं वाच्य-वाचकसंबन्धं व्युत्पित्सुरेव जानाति । शब्देत्यादि । पश्यतीत्यन्तस्य कारिकाभागस्य देवदत्तेत्यादिना सतीत्यन्तेन विवरणम् । श्रोतुरित्यादेश्चेष्टेत्यन्तस्य अनेनेत्यादिना अनुमायेत्यन्तेन ग्रन्थेन, अन्यथानुप-पत्त्यादेर्द्व्यात्मिकामित्यन्तस्य तयोरित्यादिना, अन्यथानुपपत्त्येति कारिकापदार्थस्यार्थः । अर्थापत्त्येति अर्था-पत्त्या चेत्यस्य परत इत्यादिना अन्वयव्यतिरेकाभ्यामित्यन्तेन, अयमर्थः—यस्य पदस्यान्वये यस्यानुभाग-स्यान्वयः यस्य व्यतिरेके व्यतिरेकस्तस्य तस्य शब्दस्य शब्दस्य तं तमर्थं जानातीति व्यवहारेषु वृद्धानां वाक्यश्रवणादिषु आवापोद्वापभेदेन पदानां शक्तिनिश्चय इति । प्रकृते योजयति **इतीति** । इत्युक्तप्रकारेण प्रवृत्तिनिवृत्तिकारीति हेतुगर्भविशेषणं, तेन प्रवृत्तिनिमित्तकारित्वादित्यर्थः । गामानयेति वाक्ये गवामानयन-प्रवृत्तिकारिणाम् आनयेत्यर्थः [?]। मा आनयेति वाक्ये तत्रैव निवृत्तिकारि इति । शब्दस्यान्वयव्यतिरेका-भ्यामित्यतः पूर्वपाठे इतिशब्दः प्रकारार्थः । अन्वयव्यतिरेकाभ्यामिति पदस्योत्तरवाक्ये योजना । वाक्यमेवे-त्येवकारेण एकस्य विशकलितानर्थवादानां व्यवच्छेदः [?]। इति हेतोः यस्मात् प्रयोजकादेव संबन्धनिश्चय

इति भावः । इतीति । यस्मादेवं व्युत्पत्तिग्रहणप्रकारः तस्मात् वाक्यस्थितानां वाक्यतयैकार्थप्रतिपत्त्यर्थंगुण-तया स्थितानामेव पदानामन्वितैः पदार्थान्तरसंसृष्टैः पदार्थैः सहान्वितानां समभिव्याहृतानामेव सङ्केतो गृह्यते । स च सम्यक् केतनं ज्ञापनम् ।

उपसंहरति इतीति । इति हेतोः विशिष्टा गुणप्रधानभावेन परस्परान्विता एव पदार्थाः वाक्यार्थः, न तु विशकलिततया प्रथमं पदैरभिहितानां पदार्थानां वैशिष्ट्यम्, पश्चात् वृत्त्यन्तरयोः संसर्गमात्रम् न तु गामानयेत्यादौ यानि गवादिपदानि तान्येव गां बधान अश्वमानयेत्यादावपीति ब्रूयात् । विशेषेषु चानन्त्यव्यभिचारापातात् । क्रियासामान्यात् कारकपदानां कारकसामान्येऽन्यान्वितानामेव क्रियाणां क्रियापदानामन्वयव्यतिरेकमूलकस्य संबन्धग्रहणात् संबन्धानुसारेणैवाभिधानात् ।

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्त इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरः, तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः ।

तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्था-न्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरे अर्थान्तरभूतस्य 'निःशेषे'-त्यादौ विध्यादेशचर्चा ।

अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेष-स्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

**बालचित्तानुरञ्जनी--यद्यपीति** । सङ्केतगोचरो यद्यपीति संबन्धः । यद्यपि वाक्यान्तरे दृष्ट-प्रयोगाणि तान्येवैतानीत्यर्थः । **व्यतिषक्तानामिति** । वाक्यस्यैव प्रयोगार्हत्वात् पदार्थान्तरैरन्वितानामित्यर्थः । **तथाभूतत्वादिति** । सामान्यावच्छादिते विशेषरूपत्वादित्यर्थः । प्रथमपक्ष एव स्वीकृतत्वात् विशेषे व्युत्पत्त्यभावः । 'निर्विशेषं न सामान्यमि'ति न्यायेन विशेषे पर्यवसानादिति भावः ।

एवमन्विताभिधानं प्रदर्श्य व्यङ्ग्यस्यावाच्यतामाह **तेषामिति** । सामान्यतः कृताशेषविशेषाणि भवन्तीति तत्प्रतीतिनान्तरीयकतयैवेति विशेषसिद्धिः । 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।' ततः सामान्यावगतो विशेष एव सङ्केतविशेषः । ततश्च सामान्यरूप एव पदार्थोऽसङ्केतितत्वात् अनभिधेय इत्यर्थः । **अतिविशेषभूत इति** । विशेषमतिक्रान्तः अतिविशेषः संभूतः प्राप्तः अतिविशेषभूतः सामान्यपदार्थ इत्यर्थः । यत्र तु सामान्यरूपोऽपि पदार्थः प्रतिपद्यते प्रतीतिविषयः न वाच्यः, तत्रैव कथं व्यङ्ग्यस्य च विध्यादेरर्थान्तरस्यावाच्यतामाह **अन्वितविशेष इति** । अन्विताः विशेषाः यत्र स संसर्ग इत्यर्थः । यतो-वाच्यस्ततः पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ।

**सारबोधिनी--**ननु तत्रापि संसर्गविशेषो वाच्य एव, इतरपदार्थान्वित एव शक्तिग्रहात् । अन्यथा गामानयेत्यनन्तरं गामपसारयेत्युक्तौ तदेवेदं पदमिति प्रत्यभिज्ञा न स्यात् । गवानयनतदपसारणरूपार्थभेदेन

शब्दभेदादित्यपेक्षायामाह **यद्यपीति** । **तथापीति** । सामान्यावच्छादितः क्रियापदार्थान्वितकारकत्वादि-सामान्यधर्मपरिगृहीतः । विशेषरूप आनयनत्वाद्यन्वितघटादिरूपः असौ सङ्केतः । व्यतिषक्तानां संसृष्टानाम् । तथाभूतत्वात्, सामान्यरूपेण विशेषस्यैव बोधविषयत्वात्, यथा घटस्य रूपमित्यत्र षष्ट्या संबन्धत्वेन समवायस्य । विशेषसामान्यरूप[6] इति सामान्येन विशेषरूपः शक्यः, न तु विशेषरूपत्वेनेत्यर्थः । अतिविशेषः प्रकृतोपयोगी योग्यः वाक्यान्तर्गतः वाक्यप्रयोगोद्देश्यः । "वाक्यार्थान्तर्गत" इति पाठे वाक्यार्थे भासमाने योग्यताबलाद्भासमान इत्यर्थः । **असङ्केतितत्वादिति** । सामान्यलक्षणप्रत्यासत्त्यभावेन सङ्केतग्रहकालाप्रत्यासन्नतया सङ्केतो[7]विषयत्वात् । अवाच्योऽनभिधेयः पदार्थः अन्वयव्यतिरेकाभ्यां पदैकगम्यः । **दूर इति** । अनभिधेयार्थप्रतीत्यनन्तरं वक्तृबोद्धव्यवैशिष्ट्येन प्रतीयमानस्य व्यङ्ग्यस्यातिविप्रकृष्टकत्वात् अर्थान्तरभूतस्य तदन्तिकगमननिषेधे विरोधिनस्तदन्तिकगमनस्य विध्यादेश्चर्चा प्रसङ्गः । वादिद्वयमतं युगपदुपसंहरति **अनन्वित इत्यादि** । अन्वितविशेषः प्रकृतोपयोगी अपदार्थः पदवृत्त्यविषयः वाक्यार्थः संसर्गः ।

**काव्यप्रकाशदर्पणः**—पदानां सामान्याभिधायित्वैव युक्ता । ततश्च विशेषान्वयरूपस्य वाक्यार्थस्य प्रतीतिरनुपपन्नेत्याह **यद्यपीति** । प्रत्यभिज्ञारूपः प्रत्ययो ज्ञानं स च प्राचीनेदानीन्तनदशाविशिष्टधर्मिबोधान्निश्चीयते । अवधितया विषयीक्रियत इति हेतोः एकदेशमात्रेण प्रतिबन्धविरहात् सामान्यमात्रविषयताविश्रान्तेत्यर्थः । सामान्यावच्छादितोऽभिहितः सामान्यं विनाऽलभ्यः विशेषरूपः । कृताविति योग्यः असौ कान्विति क्रियाभेदः [?] प्रतिपाद्यते पदैः कुत इत्याह व्यतिषक्तानां गुणप्रधानभावेनान्वितानां पदार्थानां तथाभूतत्वात् प्रकृतविशेषार्थप्रतीतिकृत् । गुणप्रधानभावेनान्वयश्चाकाङ्क्षादिसामग्रीवशादिति भावः । पदानामिति पाठे तु व्यतिषक्तानां समभिव्याहृतरूपाणां पदानां तथाभूतत्वात् येन तथाविधार्थप्रतिपत्तिक्षमत्वादित्यर्थः । समभिव्याहारमाह **तेषामपीति** । इति पूर्वोक्तप्रकारेणेत्याहुरित्यन्विताभिधानवादिन इत्यर्थः । सामान्यविशेषरूपप्रवृत्तिविषयस्य सङ्केतकानां समन्वितत्वात् सामान्यरूपः पदार्थान्विततया च विशेषरूपः पदार्थः एकैकपदबोध्यः अतिविशेषभूतः प्रकृतोपयोगिशरीरः । तदेतदाह वाक्यान्तिरतः संसूच्यमानक्रियाकारकविशेषार्थकतया [?] असौ समुदितशरीरो वाक्यार्थ उच्यत इत्यर्थः । अवाच्य एव प्रतिपद्यते व्यवह्रियते बोध्यते वा पदैः, अर्थान्तरभूतस्य संसृष्टो प्रतिपाद्यार्थातिरिक्तस्य विध्यादेर्विध्यादिर्व्यङ्ग्यस्य वाच्यान्तरस्य वृद्धप्रयोगादेव । स च वाक्यरूप एव । वाक्यं चान्वयबोधनियतम् । ततश्चोपदेशकाले उचित एव संबन्धग्रहणात् तत इत्यर्थः । वाचकमते तु पूर्वोक्तरीत्या निःशेषेत्यादौ विधेर्लक्षणत्वात् । अयमर्थः शब्दतदर्थवाच्यवाच्यवाचकव्युत्पन्नानामेव वाक्यार्थप्रतीतिव्युत्पत्तिम् तदनुसारेणैव नियोगकालेऽप्यन्विततयैव प्रथमतः प्रतीतिः । ततश्च वाच्य एव वाक्यार्थः । किं तावत् तात्पर्याख्यवृत्त्यन्तरकल्पनयेति वदतो वक्तव्या[?]आनन्त्यव्यभिचाराभ्यां विशेषेषु सङ्केतग्रहणस्याशक्यतया कारकसामान्यान्विते क्रियासामान्ये, क्रियासामान्यान्विते कारकसामान्ये स्वयमाश्रयणीयः । ततश्चाभिधायाः सामान्यान्विते प्रतीतेऽपि तन्मात्रस्याकिञ्चित्करतया प्रकृतविनियोगयोग्यस्य कारकविशेषान्वितस्य क्रियाविशेषस्य बोधने भवन्मते तात्पर्याख्यद्वितीलक्षणावृत्तेरङ्गीकारत् व्यञ्जनैव वृत्तिरुपासितुमुचिता । तत्पश्चाद्भाविनोर्व्यङ्ग्यवस्त्वलङ्कारयोः पुनरभिधाने का कथा ! एवं युक्तं मतद्वये वृत्त्यङ्गीकारास्यावश्यकत्वमुपसंहरति **अनन्वित** इति ।

यदप्युच्यते नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते इति । तत्र निमित्तत्वं कारकत्वं

ज्ञापकत्वं वा। प्रकाशकत्वान्न कारकत्वम्। ज्ञापकत्वं तु अज्ञातस्य कथम्? ज्ञातत्वं च सङ्केतेनैव, स चान्वितमात्रे, एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति नैमित्तिकानुसारेण निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम्।

**बालचित्तानुरञ्जनी**—अन्विताभिधानवादित्वादेकदेशिमतं दूषयितुमाह **यदप्युच्यत इति**। नैमित्तिकार्थानुसारेण वाक्यार्थतात्पर्यार्थानुसारेण निमित्तानि पदार्थाः कल्प्यन्ते। ततो नैमित्तिक एवायं न व्यङ्ग्य इति वदन् वादी प्रष्टव्यः। किं नियतत्वं कारकत्वं ज्ञापकत्वं वेति विकल्प्याद्यं दूषयति **शब्दस्येति**। द्वितीयेऽपि ज्ञापकत्वमज्ञातस्य वा। नाद्य इत्याह **ज्ञापकत्वन्त्विति**। द्वितीयेऽपि अन्यस्मात् ज्ञानं सङ्केताद्वा, नाद्यः, असंभवादित्यभिप्रेत्य द्वितीयं दूषयति **ज्ञातत्वञ्चेति**। स च सङ्केतः अन्वितमात्रे सामान्यावच्छादितविशेषरूपे। अस्तु को दोष इत्याशङ्क्य निमित्तप्रतीतौ नैमित्तिकप्रतीतिः नैमित्तिकप्रतीतौ निमित्तप्रतीतिरित्यन्योन्याश्रय इत्याह **एवञ्चेति**। फलितमाह **इति नैमित्तिकेति**।

**सारबोधिनी**-ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी, निमित्तान्तरानुपलब्धेः शब्द एव निमित्तम्, तच्च बोध्यबोधकत्वरूपम्। निमित्तत्वं वृत्तिं विना न संभवतीति अभिधैव वृत्तिरित्याह **यदपीति**। **अज्ञातस्येति**। प्रत्यक्षेतरप्रमाणस्य ज्ञानकारणत्वनियमात्, स चान्वितमात्रे नान्वितविशेषे न वा विध्यादौ।

नन्वस्तु विशेष एव सङ्केत इत्यपेक्षायामाह **एवञ्चेति**। निमित्तस्य शब्दस्य चेत्यर्थः। नियतनिमित्तत्वं विशेषसङ्केतत्वम्। तेषाञ्च विशेषसङ्केतज्ञाने तदुपस्थितिस्तदुपस्थितौ च सङ्केतज्ञानमित्यन्योन्याश्रयः स्यादिति भावः।

**काव्यप्रकाशदर्पणः**—अन्वितविशेषविशेषः व्यङ्ग्यरूपः अपदार्थोऽन्वितैरनन्वितैर्वा पदैर्बोध्योऽनभिधेयश्च, स न वाक्यार्थः। दिवादिभोजनरहितेऽपि रात्रिभोजनापेक्षेऽपि पीनशब्दनिमित्तका यस्य यस्यार्थप्रतीतिः तस्यापेक्षशब्दस्यनिमित्तता कल्प्यते किं व्यापारान्तरकल्पनयेति वदन्तं गुरुदर्शनैकदेशिनां मतमनूद्य दूषयति **तदपीति**। शब्दो हि नाज्ञानादिव घटं करोति किन्तु दीपवत् प्रकाशयति ज्ञापयति वेति प्रत्यक्षेतरप्रमाणानां हि ज्ञाते कारणत्वम्। शब्दान्तरस्य करणत्वे गामानयेत्यादिवाक्येषु ज्ञानाविशेषे प्रयोगाःस्यात्। स च सङ्केतः पूर्वोक्तदिशाऽन्वितमात्रे, न तु व्यङ्ग्येऽर्थे।

उपसंहरति **एवञ्चेति**। नैमित्तिकस्यानियतनिमित्तत्वमित्यस्यार्थः नियामकरूपसंबन्धशालित्वम्, नैमित्तकस्य व्यङ्ग्यार्थस्य संबन्धग्रहणात्। पुरस्कारेऽपि च वाक्यार्थप्रतीतिर्धर्मिग्राहकप्रमाणगम्या। यदि तु पूर्वसङ्केतग्रहेण संस्कृतस्य प्रतिभानवतः तया प्रतिपत्तिर्भवतीत्यनेन क्रमेण निमित्तनैमित्तिकभावोऽभिधीयते। तदेतदङ्गीक्रियत एव। व्यङ्ग्यव्यञ्जकभावं प्रत्युपात्तयोः शब्दार्थयोः प्रथममुपपादनीयत्वात्। तदुक्तं ध्वनिकृता—

आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।
तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥
यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते।
वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः॥ [इति ध्व० लो० १।९,१०]

ननु तर्हि भट्टनयवत् पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ रात्रौ भुंक्त इत्यादिवाक्यशेषवदत्रापि व्यङ्ग्यार्थप्रतीतौ वाक्यविशेषः कल्प्यतामिति चेन्न। धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायात्। व्यापारान्तरकल्पनस्यैव न्यायात्।

ये त्वभिदधति 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थ' इति विधिरेवात्र वाच्य इति। तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानां प्रियाः। तथा हि—'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते।

**बालचित्तानुरञ्जनी**—एकदेश्यन्तरमतं दूषयितुमाह **ये त्वभिदधतीत्यादि**। यथा इषुः उरश्छदं, उरश्च भित्वा जीवितं गृह्णाति न कश्चित् प्रवृत्तिभेदस्तथा शब्दस्याभिधाव्यापार एक एव स्वार्थमर्थान्तरं वा गमयतीति न व्यापारभेद इत्यर्थः। **यत्पर इति**। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वमुचितम्। तत्पर्यन्तता सा च प्रधानभूतव्यङ्ग्ये स्यादिति ध्वनेर्यन्निरूपितं तत्राप्यभिधाव्यापारेण भवितुं युक्तम्। ततो व्यङ्ग्यस्य विधेः प्राधान्येन वाच्यत्वमेव न्याय्यमिति तेषामभिप्रायः। तात्पर्यवाचोयुक्तेर्यत्परः शब्दः स शब्दार्थ इति वचनस्यातात्पर्यज्ञाः अभिप्रायं न बुध्यन्त इत्यर्थः। देवानां प्रियाः पशव इत्यर्थः। यद्वा, देवानामिन्द्रियाणां प्रियाः सुखिनः अज्ञा इति यावत्। एतदेव व्याचष्टे **तथाहीति**। भूतं प्रमाणान्तरेण सिद्धम्। भव्यं, भवतीति व्युत्पत्त्या साध्यम्। **कारकपदार्था इति**। यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादावोदनपाकश्चेदन्यतः सिद्धः तदा स्थाल्यामधिकरणत्वमात्रं विधेयम्। तस्यैव साध्यत्वात्। **स्वक्रियेति**। लोहितोष्णीषत्वाभिधानादिकाः क्रियाः। ननु कारकस्य साधनाभावात्तत्र वाक्यस्य तात्पर्यं न स्यादित्याशङ्क्याह **साध्यायमानतामिति**। साध्यस्वरूपतामित्यर्थः। फलितमाह **ततश्चेति**।

**सारबोधिनी**—मतान्तरमवतारयति **सोऽयमिषोरिवेति**। यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मभेदमुरोभेदं प्राणहरणं च रिपोः करोति तथा शब्दः एकेनैव शक्तिव्यापारेण पदार्थस्मृतिं, वाक्यार्थबुद्धिं, व्यङ्ग्यप्रतीतिं च विधत्ते। ततो व्यङ्ग्यस्य वाच्यत्वमेवेत्यर्थः। **विधिरेवेति**। निःशेषेत्यादौ गतासीति विधिर्वाच्य एवेत्यर्थः। दूषयति **त इति**। तात्पर्यवाचोयुक्तेस्तात्पर्यशब्दप्रयोगस्यातात्पर्यज्ञाः, किमुद्दिश्य यत्परः शब्दः शब्दार्थ इति प्रयुज्यते इत्यस्यानभिज्ञाः देवानां प्रियाः पशवः। **वाचोयुक्तेरिति**। देवानां प्रिया इति चालुक् समासः। तात्पर्यविषये शब्दः प्रमाणमित्यस्य उपात्तशब्दैः प्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्रैव तात्पर्यमित्यत्रैव यत्परः शब्दः स शब्दार्थ इत्यस्य तात्पर्यमिति सिद्धान्तयति **तथा हीति**। भूतं सिद्धं, भव्यं साध्यम्। समुच्चारणे समभिव्याहारे। यद्यपि कारकपदार्थाः सिद्धस्वभावास्तथापि कुर्वदेव कारकं नाकुर्वदन्यथा प्रधानक्रियां प्रति नानुकूलं स्यात् अतः क्वचित्तत्रापि तात्पर्यमित्याह **कारकपदार्था इति**। **प्रधानेति**। घटमानयेत्यत्रानयनं समीपदेशसंयोगध्वंसहेतुविभागजनकस्पन्दः। घटस्य स्वरूपतः सिद्धावपि स्पन्दाश्रयत्वेन साध्यत्वम्। विशेष्ये बाधे स्पन्दस्यैव तथात्वमिति ल्यङः प्रयोगः। तत इति उक्तन्यायादित्यर्थः। **अदग्धेति**। अदग्धमेव दहनेन दह्यते यथेत्यर्थः। **अप्राप्तमेवेति**

प्राप्तस्याप्राप्तप्रापणरूपविधानासंभवादित्यर्थः । प्रणवसञ्चारः[१०] प्रमाणान्तरादतिदेशात् । अन्यतः प्रधान-विषयकवाक्यात् वहनस्य सिद्धिः[११] ।

**काव्यप्रकाशदर्पणः**—सम्प्रति तदेकदेशान्तराणां परस्परोपकारकशक्तिद्वयमुपन्यस्य दूषयति **ये त्विति** । यथा खलु धनुष्मता प्रयुक्तो बाणः एकेनैव घातेन शत्रोः कवचयुग्मादिकमनेकं निर्भिनत्ति तथैव शब्दस्याभिधाव्यापारो तद्वदवश्यं बोधयति । यत्परः यदुद्देशेन प्रयुक्तः शब्दः स शब्दार्थः शब्देनावश्यं बोध्यः इति हेतोरत्र निःशेषेत्यादौ विधिर्वाच्य एव, इत्येवकारस्य व्यग्रषयोजना [?] इति । ये तु, ये पुनरभिदधति तेऽतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेस्तात्पर्यप्रयोगस्य देवानां प्रियाः पशवः । तात्पर्यप्रयोगं न जानन्तीत्यर्थः । कुत इत्याह तथा हीति । भूतानि सिद्धरूपाणि कारकाणि, भव्यं साध्यं क्रियारूपम् एषां समुच्चारणे तद्वाचक-पदानां समभिव्याहारे भव्याय साध्यरूपतया कारकपदार्था लोहितोष्णीषा इत्यादयः । स्वक्रियाः स्वस्येवान्तर्लीना या क्रिया तदभिसंबन्धात् । यद्यपि कारकस्वरूपं पूर्वसिद्धमेव तथापि क्रियावत एव कारकत्वात्, क्रियायाश्च साध्यरूपत्वात्, कारकाण्यपि साध्यरूपाणीति भावः । अदग्धस्य भागस्य पुनर्दाहो यथा तथा सर्वपदार्थानां विध्यर्हत्वेऽपि योऽर्थः प्रमाणान्तरेण प्राप्तः स एव विधीयते प्राधान्येनोपदिश्यते । तथाहि । दग्ध एव प्राधान्यम् । अत्रैव तात्पर्यशक्तिविश्रान्तिरिति न पुनः प्राप्ते तूपदेशवैयर्थ्यात् । प्रतीतिमात्रे ।

यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्यान्यतः सिद्धेः "दध्ना जुहोती"त्यादौ दध्यादेः करणत्वमात्रं विधेयम् ।

क्वचिदुभयविधिः क्वचित्त्रिविधिरपि यथा "रक्तं पटं वय" इत्यादौ एकविधिर्द्वि-विधिस्त्रिविधिर्वा । ततश्च यदेव विधेयम् तत्रैव तात्पर्यम् इत्युपात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतिमात्रे । एवं हि "पूर्वो धावति" इत्यादावपराद्यर्थेपि क्वचित्तात्पर्यं स्यात् ।

**बालचित्तानुरञ्जनी**—उदाहरणमाह **यथेति** । अन्यत् सर्वं प्रमाणान्तरसिद्धमिति लोहितोष्णी-षत्वमात्रमेव सर्वैः कारकैः साध्यत इत्यर्थः । उदाहरणान्तरमाह **हवनस्येति** । **अन्यत् इति** । अग्निहोत्रं जुहोतीत्यनेन । अनयोरुदाहरणयोरेकमेव वस्तु विधेयं न तु द्वयमिति मात्रशब्दार्थः । मात्रशब्दव्यावर्त्यमाह **क्वचिदिति** । **यथेति** । रक्तत्वं वा न वेदं नान्यत् सिद्धं तदा पटमात्रं विधेयम् । क्वचित्तु साक्षाच्छब्देनैव त्रयं विधेयम् । फलितमाह **ततश्चेति** । उपात्तस्य उक्तस्यैव शब्दस्य संबन्धिन्यर्थेऽभिधेये तात्पर्यं न तु निमित्तान्तरेण प्रतीतिमात्रेण व्यङ्ग्ये तात्पर्यावकाशः । ज्ञानमात्रे तात्पर्यप्रसङ्गे अङ्गीक्रियमाणे बाधकमाह **एवं हीति** । पूर्वशब्दस्य सापेक्षत्वादपराद्यर्थोऽपि प्रतीयेत इति तत्रापि तात्पर्यं स्यादित्यर्थः ।

**सारबोधिनी**—उभयविधिः । ब्राह्मणं स्नातं भोजयित्वा तमानयेत्यत्र स्नानप्राप्तौ भोजनानयनयो-र्विधानम् । अत्रैव स्नपयित्वेत्युक्तौ त्रिविधिः । लोकेऽप्युदाहरति **यथेति** । रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा असिद्धौ एकविधिर्द्विविधिस्त्रिविधिरित्यर्थः । प्रकृतमनुसरति **ततश्चेति** । अर्थे वृत्तिविषये तस्यैव विधेयत्वादित्यर्थः । तात्पर्यं प्रामाण्यनियामकमिति शेषः । अतिप्रसङ्गवारणायाह **न त्विति** । इष्टा-पत्तिं परिहरति **एवं हीति** । अपराद्यर्थे पूर्वादिप्रतियोगित्वेनार्थापत्त्या गम्येऽन्यलभ्यत्वेनापदार्थे तात्पर्यवृत्ति-साधकं स्यादित्यर्थः ।

[मात्रशब्दव्यावर्त्यमाह **क्वचिदिति**। उदाहरति **यथेति**। रक्तत्वं वा न वेदं नान्यतः सिद्धं तदा पटमात्रं विधेयम्। पटो वा न वेत्युभयमन्यतः सिद्धं तदा पटमात्रं विधेयम्। क्वचित्तु साक्षाच्छब्देनैव त्रयं विधेयम्।]

**काव्यप्रकाशदर्पणः**—अनुपात्त एव पदे वाक्यार्थप्रत्ययान्तरबोध्येऽर्थे एव हानिप्रसङ्गः इत्याह **एवमिति**। अपराद्यर्थे पूर्वाद्यर्थेनावधिभावेनाक्षिप्ते भवतापि तात्पर्यविशेषतयाऽनङ्गीकृत इति भावः। अयमाशयः-वाच्यार्थव्यङ्ग्यार्थप्रतीत्योर्हेतुफलभावाङ्गीकारात् नैयायिकाभिधया तात्पर्येण वा वृत्त्या युगपत् प्रतीतिः। क्रमप्रतीत्यङ्गीकारे तु लक्षणाङ्गीकारस्याप्यनुचितत्वात् अङ्गीकृततात्पर्याणां च विरम्य व्यापार-स्वीकरणात् न केवलमपराद्यनु साधारणयोर्वस्त्वलङ्कारयोस्तात्पर्यं न प्रसज्यति[?], किन्तु वाचकत्वात् प्रधानभूतयोरपीति भावः।

यत्तु "विषं भक्षय मा चास्य गृहे भुङ्क्थाः" इत्यत्र 'एतद्गृहे न भोक्तव्यम्' इत्यत्र तात्पर्यमिति स एव वाक्यार्थ इति, **उच्यते** तत्र चकार एकवाक्यतासूचनार्थः। न चाख्यात-वाक्ययोर्द्वयोरङ्गाङ्गिभाव इति। विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्थाः, इति उपात्तशब्दस्यार्थे एव तात्पर्यम्।

**बालचित्तानुरञ्जनी**—विषं भक्षयेत्यत्र व्यभिचारादित्याशङ्क्याह **यत्त्विति**। विषं भक्षयेत्येत-द्वाक्यस्य पुत्रं प्रति मात्रोक्तस्य मा चास्य गृहे भुङ्क्था इति तात्पर्यादनुपात्तेऽपि तात्पर्यमिति पूर्वपक्षिणोऽ-भिप्रायः। उच्यत इति यत् तत्रेति संबन्धः चकारादेकवाक्यतावगमात्। आख्यातयोरङ्गाङ्गभावाभावे-नैकवाक्यतायामसम्भवात् विषभक्षणवाक्यस्यास्य गृहे न भोक्तव्यमिति कृदन्तवाक्यत्वकल्पनेनाङ्गाङ्ग-भावो विषभक्षणादपि दुष्टमेतद्गृहभोजनमिति सर्वथा मास्य गृहे भुङ्क्था इति उपात्तशब्द एव तात्पर्यमिति सिद्धान्ताभिप्रायः।

**सारबोधिनी**—ननु'पात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतिमात्रे' इति यदुक्तं तदसङ्गतम्। **यत्त्विति**। विषं भक्षयेत्येतद्वाक्यस्य नास्य गृहे भोक्तव्यमित्यत्र तात्पर्यादुपात्तशब्दादन्यत्र तात्पर्यं प्रसक्त-मिति पूर्वपक्षिणोऽभिप्रायः। परिहरति **तत्र चेति**। विषं भुंक्ष्वेत्येतावन्मात्रस्याकस्मादुच्चरितस्य साकाङ्क्ष-त्वात् समनन्तरोच्चारितेन मा चे त्यादिना एकवाक्यता। सा च चकारेण सूच्यत इत्यर्थः। **न चेत्यादि**। अत्र द्वयोराख्यातवाक्ययोरसंबन्धः समत्वात् स्यात्। अत उभयोः संबन्धार्थमेकस्य गुणीभावः कल्पनीयः। तत्र विषं भुंक्ष्वेत्येतस्य सुहृद्वाक्यत्वेन तथाविधनियोगानुपपत्त्या गुणभावो युज्यते। गुणानां च परार्थत्वात्, परार्थैकानुबन्धितया स्वार्थयोगो युक्त इति एतद्गृहभोजनस्यात्यन्तंगर्हितत्वपरत्वमस्य वाक्यस्यावगम्यते, तथाहि विषं भुंक्ष्वेत्येतस्य विषभक्षणप्रतियोगित्वे लक्षणबलवदनिष्टान्नुबन्धेत्याह[?]। विषभक्षणादपीत्याह **दुष्टमिति**। बलवदनिष्टानुबन्धीत्यर्थः। अत्र विषभक्षणादपीति स्वार्थः। दुष्टमित्यादिस्तु परार्थः। ततस्तदन्विततया स्वार्थबोधे उपात्तशब्दस्यार्थ एव तात्पर्यमिति दीर्घदीर्घाभिधानं दूषयति।

**काव्यप्रकाशदर्पणः**--ननु यद्युपात्तस्य वाचकस्यैवार्थे तात्पर्यं प्रसज्यति [तदा] विषं **भक्षयेत्या**-दिवाक्ये का गतिरित्याह **यत्त्विति**। स एव वाक्यार्थो वाक्योद्देश्य इति तत्र तात्पर्यात् उच्यत इति **संबन्धः**। चकार इति अर्थैकत्वात् एकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति [पू० मी० २।१।४७] **जैमिनिवचनात्**। विषं भुंक्ष्वेत्यादिवाक्ये तावन्मात्रस्याकस्मादुच्चरितस्य साकाङ्क्षत्वात्। समनन्तरोच्चारितेन मा चेत्या-दिना एकवाक्यता। सा चकारेण सूच्यत इति भावः। **न चेति**। कृद्वाच्यत्वेनानुवाद्यत्वम्, आकस्मिकतया विधिवाक्यस्याङ्गता। अर्थवादान्ते इत्यर्थः। तत्र किमित्याह **विषभक्षणादपीति**। दुष्टं अधिकदोषावहम् इत्यनेन नयेन उपात्तानामेव शब्दानामर्थे सङ्गमान्न संसृष्टाकारेण तात्पर्यं पर्यवस्यति न तु व्यर्थे तद्वतस्तत्र [?] भुंक्ष्वेति पदस्य भक्षणादपीति न साक्षादर्थः किन्तु व्यङ्ग्य एव इत्यभियुक्तानां मतम्।

यदि च शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः, ततः कथं 'ब्राह्मण पुत्रस्ते जातः' 'ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्य-त्वम् कस्माच्च लक्षणा, लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः किमिति च श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पूर्वपूर्वबलीयस्त्वमित्यन्विताभिधानवादेऽपि विधे-रपि सिद्धं व्यङ्ग्यत्वम्।

**बालचित्तानुरञ्जनी**—अनुपात्तेऽपि तात्पर्यकल्पनायामतिप्रसङ्गमाह **यदि चेति**। शब्दो हि सङ्के-तसापेक्षः स्वार्थमभिधत्ते, न निरपेक्षः। अतो यत्रैवास्य सङ्केतस्तत्रैवाभिधाव्यापारः, नार्थान्तरे। तत्र सङ्केताभावात्। अन्यथा 'ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादिवाक्यश्रवणानन्तरं प्रतीयमान-हर्षशोकादीनां वाच्यत्वं स्यादिति भावः। अनुपात्तेऽपि तात्पर्यकल्पनायां लक्षणा न स्यादिति भावः। तत्रैव दूषणान्तरमाह **किमिति चेति**। श्रुत्यादीनां लक्षणानि त्वस्माभिरनन्तरोक्तप्रकरणे दर्शितानि। यथा

श्रुतिः शब्दानपेक्षः स्यादभिधातुं पदान्तरे।
श्रुतसर्वार्थसामर्थ्यं लिङ्गमित्युच्यते बुधैः॥
पदद्वयं मिलित्वा कृकवाकामितीति [?]
प्रधानवाक्यमङ्गोक्त्याकाङ्क्षं प्रकरणं मतम्।
स्थानं समानदेशत्वं समाख्या यौगिको रवः।
एतेषां पारदौर्बल्यं विरोधे पूर्वधर्मतः।
अर्थस्य विप्रकर्षेण विप्रकर्षस्तु कथ्यते॥
पञ्चभिः स्याद् व्यवहिता सा समाख्या पुनः......
वाक्यं द्वयेन चैकेन लिङ्गं स्यात् केवला श्रुतिः॥
बाध्यैव स्यात् समाख्या [तु] बाधिकैव श्रुतिः पुनः।
बाध्यबाधकरूपेण लिङ्गादीनि यथोचितम्॥

एतेषामुदाहरणानि **प्रदीपिकायां** प्रदर्शितानि। यथा-तत्र तावत् श्रुतिलिङ्गयोर्बलाबलत्वे **चिन्ता**। तत्र 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यादिका ऐन्द्री ऋक्। 'ऐन्द्रया गार्हपत्यमुपतिष्ठत' इति द्वितीयारूपा श्रुतिः। ननु इन्द्रस्यैवोपस्थानं उत इन्द्रस्य गार्हपत्यस्य वा, किं वा उभयोः उत गार्हपत्यस्येति

विशेषहेतोरभावात् संशयः । तत्र इन्द्रस्य प्रकाशनसामर्थ्यरूपाल्लिङ्गात् मन्त्रस्य इन्द्रविषयक्रियासाधनत्वं गम्यते । अन्यथा अनेन इन्द्रप्रकाशनं व्यर्थं स्यात् । अत एव मन्त्रकरणक्रियां प्रति इन्द्रः प्रधानमिति एवंविधबुद्ध्युत्पादनं लिङ्गविनियोगः । का क्रियेति विषयजिज्ञासायां ऐन्द्रचोपतिष्ठत इत्यनेनाधिकपदद्वयरूपेण वाक्येन उपस्थानक्रियायां पर्यवसानं क्रियायाः । एतदुक्तं भवति—ऐन्द्रचेण मन्त्रेण द्वन्द्वमुपतिष्ठितमिति [?] गार्हपत्यमित्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यः प्रधानं गम्यते । तद्गुणीभूय [त] किञ्चित्करणक्रियामन्तरेण न सम्भवति । ततस्तादृशीं काञ्चन क्रियां प्रति गार्हपत्यः प्रधानमित्येतद्-बुद्ध्युत्पादनं श्रुतिविनियोगः । ऐन्द्रचोपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति । एवञ्च सति ऐन्द्रचेण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति । तदेवं श्रुतिलिङ्गयोर्विरोधे सति श्रुतिवदेव लिङ्गादेरपि मानत्वाविशेषात् तदर्थप्रतीतेः श्रुतिलिङ्गाधीनत्वादिन्द्रोपस्थानस्य लिङ्गाधिगतिसमये श्रुत्या गार्हपत्योपस्थानावगमात् ब्रीहियववद् विकल्पेन द्वयोरुपस्थापनमित्येकः पक्षः । गुणानां प्रति प्रधानव्या [मा ?] वृत्तरुपस्थानद्वयेऽपि मन्त्रावृत्तेरुपपत्तेः । श्रुतिबलीयस्त्वेऽपि विरोधाभावेन लिङ्गस्य बाधात् उपस्थानसमुद्भव इति पदान्तरलिङ्गस्य सामर्थ्यरूपत्वेन श्रुत्यपेक्षया बलवत्त्वात् । अशेषशब्दप्रवृत्तेर्वस्तुशक्त्यनुसारित्वात् इन्द्रस्यैव लिङ्गादुपस्थानमित्यपरः पक्षः । मन्त्रेण तदर्थप्रतिपादनात् पुनः शक्तिं निरूप्य मन्त्रस्याकाङ्क्षावशात् इन्द्रशेषत्वे श्रुतिर्यावत् कल्प्यते तावत् श्रुत्या गार्हपत्याङ्गत्वे मन्त्रस्यावगते सति आकाङ्क्षोपशान्तेः श्रुतिकल्पनाया निर्मूलत्वात् अतिशीघ्रवृत्तं श्रुत्या मन्त्रगतेन्द्रप्रकाशनसामर्थ्ये [न] लिङ्गं बाध्यते । न च लिङ्गस्य विरोधाभावात् अबाध इति वाच्यम् । प्रामाण्यस्याकाङ्क्षाधीनत्वात् । आकाङ्क्षायाश्च श्रुत्या प्रत्याख्यानाद् विरोधसिद्धिः । विरोधेन प्रत्यक्षेणेवानुमानं श्रुत्या लिङ्गं दुर्बलत्वेन बाध्यते । तस्मादिन्द्रोपस्थानमेव श्रुतिवशेन वक्तव्यमिति सिद्धान्तः ।

लिङ्गवाक्ययोर्विरोधस्योदाहरणम्–'स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ ब्रीहीणां मेध सुमनस्यमानः' इति दर्शपूर्णमासयोः श्रूयते । हे पुरोडाश तव समीचीनं स्थानं करोमि । तत्स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि । हे ब्रीहि सारभूत त्वं समाहितमनस्कः तस्मिन् समीचीने सदनस्थितो भवेत्यर्थः । तत्र सकलो मन्त्रः सदनकरणे पुरोडशसादने च विनियोक्तव्यः । किं वा कल्पयामीत्येतत् सदनकरणे तस्मिन् सीदामृतेत्यादि पुरोडाशासादन इति वाक्यैकत्वपदन्त्राभ्यां संशयः । सति सम्भवे वाक्यभेदस्यान्याय्यत्वात्, तस्मिन्निति पूर्वसापेक्षत्वात् वाक्यैक्यादुभयत्र समासो[?]मन्त्रो विनियोक्तव्यः अथवा लिङ्गवाक्ययोः समानबलत्वात् मानत्वाविशेषात् न्यस्तस्य[?]वा विकल्पेन उभयत्र विनियोग इति पूर्वः पक्षः । लिङ्गवाक्ययोर्द्वयोरपि श्रुतिद्वारा विनियोजकत्वाविशेषेऽपि लिङ्गेन साक्षादेव श्रुतिकल्पनावाक्येन [तु] किं लिङ्गद्वारा तत्कल्पना कृता । श्रुतिविप्रकर्षादितरस्य च तत्सन्निकर्षेण बलवत्त्वात् पूर्वार्द्धस्य सदनकरणे परापेक्षामन्तरेण सामर्थ्यावगमात् । उत्तरार्द्धस्यापि तस्यैव पुरोडाशप्रसादने सामर्थ्यस्य क्लृप्तत्वात् अर्थभेदे नानावाक्यत्वावगमात् विसृज्य विनियोगो लिङ्गबलीयस्त्वादिति सिद्धान्तः ।

वाक्यप्रकरणयोर्विरोधोदाहरणम्–सूक्तवाकनिगदः तत्र अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् इत्यादिश्रुतौ इदं हविरजुषेतामित्यादीनि देवतापदेन एकवाक्यभूतानि । तत उपस्थितप्रकरणविशेषात् अन्यत्रापि सर्वत्र प्रयोक्तव्यानि । किं वा देवतापदैकवाक्यतया तथैव व्यवस्थितानीति प्रकरणस्य वाक्यतो बलीयस्त्वाबलीयस्त्वाभ्यां संशयः । प्रधानाकाङ्क्षमप्रधानमिति न्यायेन

सर्वस्य प्रधानार्थत्वमङ्गीकर्तव्यम् । तथा च वाक्याद् विनियोगात् प्राकरणिकविनियोगो बलवानिति पूर्वः पक्षः । वाक्येन सामर्थ्यं बुद्धय [?] श्रुतिं कल्पयित्वा तया विनियोगे गम्यमाने प्रकरणाद् वाक्यादि-परम्परया विनियोगस्य विप्रकृष्टत्वेन प्रकरणस्य ततो दुर्बलत्वम् । अतो वाक्यीयो विनियोगो बलवानिति सिद्धान्तः ।

प्रकरणस्थानयोर्विरोधोदाहरणम्—राजसूये बहुषु यागेषु फलवस्तुसमप्रधानेषु अभिषेचनीय संज्ञः सोमयागः [पठितः] तत्सन्निधावक्षैर्दीव्यति राजन्यं जिनातीत्यादिना देवनादयो धर्माः श्रुताः । ते किं सर्वस्य राजसूयस्याङ्गभूता उत अभिषेचनीयस्यैवेति प्रकरणसन्निधिभ्यां संशयः । सन्निधिविशेषात् अभिषेचनीयाङ्गत्वम् । प्रकरणानुसरणे सन्निधिविशेषस्य निरर्थकत्वं स्यात् । सन्निध्यनुरोधात् प्रकरणं विशेषसङ्कुचितमपि सावकाशम् । अतो देवनादयः अभिषेचनीयस्याङ्गानीति पूर्वः पक्षः । देवनादीनां प्रकरणविशेषात् सर्वार्थत्वात् अविशेषतः सर्वाकाङ्क्षायामपि यावत [?] सन्निधि विशेषात् अभिषेचनीयस्य विशेषाकाङ्क्षां कल्पयित्वा तादर्थ्यकल्पनायाः क्लृप्तत्वात् आकाङ्क्षातः सर्वार्थतावगमस्य सन्निकृष्टत्वात् आकाङ्क्षाकल्पनयाऽभिषेचनीयार्थत्वस्य विप्रकृष्टत्वात् एतेऽर्थाः सर्वार्था इति सिद्धान्तः ।

क्रमसमाख्ययोर्विरोधोदाहरणम्—पौरोडाशिकसमाख्याने दर्शपूर्णमासकाण्डे सान्नाय्यपात्र-संस्कारक्रमे समाम्नातः शुन्धध्वं दैव्याय कर्मण इत्यादिमन्त्रः । स किं समाख्याया बलीयस्त्वात् पुरोडाश-पात्राङ्गं किं वा क्रमस्य बलवत्त्वात् सान्नाय्यपात्राङ्गम् आहोस्विदविशेषादुभयाङ्गमिति संशयः । विशेषाग्रहणात् उभयोरपि क्रमसमाख्ययोस्तुल्यबलत्वेन उभयाङ्गं, सम्बन्धवचनत्वेन समाख्याया बलीयस्त्वात् पुरोडाशपात्राङ्गमिति पूर्वः पक्षः । दण्डी पुरुषः, [अत्र] प्रकृत्या दण्डस्य उक्तत्वात् प्रत्यये न पुरुषस्याभिधानात् मिथो योगस्य समभिव्याहारकल्पनया वाक्याभावात् इहापि समाख्यायाः सम्बन्ध-वचनत्वानङ्गीकारात् । तद्वचनत्वेऽपि तस्यास्तत्राप्रमाणत्वात् तामवलंब्य पुरोडाशस्वरूपस्य काण्ड-स्वरूपस्य च सामान्यसम्बन्धं परिकल्प्य अपेक्षावशात् एकवाक्यत्वमुपेत्य ततः सामर्थ्यकल्पनया ततः श्रुतिं कल्पयित्वा तया विनियोगो यावदवगम्यते तावत् क्रमकृतसम्बन्धमात्रस्य प्रत्यक्षत्वात् तस्मादारभ्य श्रुत्यर्थप्रतिपत्तेः सन्निकर्षात् शुन्धध्वम् इति मन्त्रः सान्नाय्यपात्राङ्गमिति सिद्धान्तः । तदुक्तं श्रुतिलिङ्ग-वाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । श्रुत्यादीनां समवायः समान-विषयत्वेनैकार्थसन्निपातः । तत्र परस्य दौर्बल्यं तस्य पूर्वानुमानद्वारा तत्सम्बन्धात् तेनार्थसाधकस्य ततो विध्युत्कर्षात् पूर्वस्य प्राबल्यम् । तस्यार्थसाधने परापेक्षाभावात् तेन सन्निकर्षादिति सूत्रार्थः । अत्रोदाहरणं आचार्यसुन्दरपाण्ड्येन दर्शितमिति ।

विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः ।
निःश्रेण्यारोहणं प्राप्य प्राप्तिमात्रो ददाति च [?] ।
एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥
एकसोपानवर्त्येको भूमिष्ठश्चापरस्तयोः ।
उभयोस्तु जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥
प्रथमे तद् गृहीतेऽस्मिन् यस्मिन्नेव तरे मुधा इति ।

[प्रथमेन गृहीतेऽस्मिन् पश्चिमेवेतरन्मुधा] अत्रापि दीर्घदीर्घाभिधाव्यापारेणैव शेषशेषिभाव-प्रतीतेः सर्वेषां सामान्यात् सबलदुर्बलभावो न स्यादिति भावः ।

**सारबोधिनी**—कन्या कुमारी अनूढा, तस्या गर्भाच्छोकः। हर्षशोकादीनां मुखप्रसादाप्रसादानुमितत्वेन। नन्वलभ्येष्वेव वृत्तिरिति न तेषु परिवृत्तिरित्यतो दोषान्तरमाह **कस्माच्चेति**। लक्षणीये **मुख्यार्थबाधात्** प्रतीयमाने। नन्वेवं लक्ष्यार्थस्य मुख्यार्थतायां मुख्यार्थबाधज्ञानं न सम्भवतीति अस्वरसादाह **किमिति चेति**। यदाह जैमिनिः—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति। विप्रकर्षो विलम्बेनोपस्थितिः। श्रुत्यनन्तरं प्रतीयमानानां सर्वेषामेवार्थानामभिधेयत्वेनोपस्थितेर्विलम्बाभावात् विप्रकर्षविरहेण पूर्वपूर्वस्य बाधकत्वं उत्तरोत्तरस्य बाध्यत्वमिति व्यवस्था न स्यादित्यर्थः। तदुक्तम्—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।
मध्यमानां तु बाध्यत्वं बाधकत्वं व्यवस्थया॥ इति

—किमिति च पूर्वपूर्वबलीयस्त्वमित्यन्वयः।

अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः।
सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते॥
संहत्यार्थाभिधायित्वं पदानां वाक्यमुच्यते।
प्रधानवाक्यस्याङ्गोक्त्याकाङ्क्षा प्रकरणं मतम्॥
स्थानं समानदेशत्वं समाख्या यौगिको रवः।
श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि।
सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या॥

यथा व्रीहीनवहन्तीत्यत्र द्वितीयाश्रवणमात्रेणावहननक्रियायां विनियोगोऽवगम्यते। क्षमता यथा दाहे वह्नेर्योग्यता। उदाहरणम्—बर्हिर्देवसदन दामीति। दाप् लवने इत्यस्य रूपम्। योग्यतावशात् बर्हिश्छेदनेऽस्य मन्त्रस्य विनियोगः। संहत्येति विशेष्यविशेषणभावं प्राप्येत्यर्थः। तेनाकाङ्क्षादिपरिग्रहः। यथा श्वेतं छागमालभेतेत्यत्र अन्वये श्वेतस्य प्रत्येकमालम्भनक्रियान्वयित्वेऽप्याकाङ्क्षादिमहिम्ना श्वेतस्यछागावच्छेदकता वाक्याद् व्यवस्थाप्यते। प्रधानेत्यादि। यथा दध्ना जुहोतीत्यत्र दधियागस्याग्निहोत्राङ्गतावगमः। अग्निहोत्रं जुहोतीत्यस्य प्रधानवाक्यस्य कथमित्याकाङ्क्षायां तदभिधानात्। स्थानमित्यादि। समानदेशत्वम् यो, यद्देश्यः तद्देशे तस्य विनियोगः। यथा हव्यकव्ये स्वाहा स्वधेत्यत्र हव्ये स्वाहा कव्ये स्वधेत्यस्य विनियोगः, तुल्यक्रमत्वात्। समाख्येति। योगेनावयवशक्त्याऽर्थं प्रत्याययतीति यौगिको रवः शब्दः। हौत्रमौद्गात्रमाध्वर्यवमिति। होतुरिदमित्यादि योगबलेन हवनं होतरि गानमुद्गातरि विनियुज्यते। न चेदं लिङ्गम्, गानेऽपि होतुः क्षमत्वात्। अत्र पारदौर्बल्योदाहरणानि अप्रकृतत्वाद् गौरवभयाच्च न लिखितानि। इत्यन्वितेति एकदेशिमतोपसंहारोऽयम्। मतान्तरं तु प्रागुपसंहृतम्। न तु निःशेषेत्यादौ तदन्तिकमेव रन्तुं गताऽसीत्यर्थः प्रतीयते। स चान्वयरूपोऽप्राप्ततया विधेयत्वेन तात्पर्यविषय इति तत्राभिधैवास्तु किं वृत्त्यन्तरेण। न चान्वयबोधाद् वाक्यस्य विरतिः विवक्षितवाक्यार्थबोधाजननात्। अन्यथा जनितखण्डवाक्यार्थबोधस्य महावाक्यार्थबोधकत्वं न स्यात्।

**काव्यप्रकाशदर्पणः**-एवं यत्परः शब्दः स शब्दार्थ इति पक्षस्य निरासेनापि सेयमिषोरित्यादिपक्षं प्रकारान्तरेणापि परिहरति **यदि चेति**। **हर्षेति**। हर्षादयो हि न तेनापि वाच्यत्वेनाभ्युपगम्यन्ते यतोऽमी वाच्यार्थप्रतीत्या क्रियन्ते। न खलु शब्दस्य कारकत्वम्, पूर्वोक्तरीत्यादिना ज्ञापकत्वात्। तस्माच्छब्दवाक्यार्थः

निष्पत्तिः [?] प्रतीयते । तत्प्रतिपत्त्या हर्षापुपमि [?] एवमपि च शब्दाङ्गीकारे शब्दादेव केवलात् सकलार्थ-प्रतिपत्तिः । श्रुतार्थापत्त्यादिप्रमाणान्तरस्वीकारेणापि निरर्थकं स्यात् । लक्षणेत्यनन्तरं पृथगुच्यत इति शेषः । यद्यभिधायास्तात्पर्यस्य वा लिखितशब्दार्थप्रत्यायनसामर्थ्यं तदा श्रुत्यादिप्रमाणान्तर विकस्य [?] समवाये पारदौर्बल्यमित्यपकर्षादिति भवतः प्रक्रिया कल्पनीयेति उपपद्यते । सर्वेषां समनुपसङ्गादित्याह [?] **किमिति चेति** । द्वितीयान्तं पदं श्रुतिः । तृतीयान्तमपीति भट्टः । पदार्थसामर्थ्यं लिङ्गं, यथा लिङ्गस्यातं [?] यौगिकं नाम समाख्याता शब्देत्येवं एषां समवाये पूर्वस्य बलीयस्त्वम् तत्रोत्तरोत्तरेषां दौर्बल्यं अर्थ-विप्रकर्षात् । यथा दर्शपूर्णमासयोः व्रीहीनवहन्तीत्यादौ यौगिकसमाख्यया विनियोगः । तत्र लिङ्गापेक्षया श्रुतेर्बलीयस्त्वं यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति । अत्र ऐन्द्र्या च इन्द्रप्रकाशनसामर्थ्यात् लिङ्गलक्षण [?] लिङ्गात् इन्द्रोपस्थाने विनियोगो गार्हपत्यमिति द्वितीयया श्रुत्या बाध्यते । अयमाशयः—ऐन्द्र्येत्यादौ श्रुतौ यतः श्रुतेर्बलीयस्त्वं तदपदार्थत्वेन व्यञ्जनानङ्गीकारेण निर्वहतीति उपसंहरतीति । अपिशब्दात् अभिहितान्वयवादादौ विधेर्निःशेषेत्यादि व्यङ्ग्यस्यापि [?]।

किञ्च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम् । न ह्यत्रा-सभ्योऽर्थः पदार्थान्तरैरन्वितः, इत्यनभिधेय एवेति, एवमादि अपरित्याज्यं स्यात् ।

**बालचित्तानुरञ्जनी**—पुनरप्यन्विताभिधानवादिनं दूषयति **किञ्चेति** । ['क्वन्तर्वर्तिनि' इति पाठे] कुशब्दः अन्ते यस्य वैपरीत्यस्य तस्मिन्वैपरीत्ये रुचिङ्कुर्वित्यादिरूपेऽन्विताभिधानपक्षेऽपि दुष्टत्वं प्रतीयतां को दोषस्तत्राह **न हीति** । लाटभाषायां चिङ्कुरिति मदनमन्दिरान्तर्वर्तिमध्यपरपर्यायः । तदर्थोऽसभ्यः । तस्य [न स ?] पदार्थान्तरैरन्वितश्चारु । तेनानभिधेयभावे प्रतीयमानत्वेन व्यङ्ग्यत्व-मङ्गीकर्तव्यं स्यादिति भावः [?]।

**सारबोधिनी**—**किञ्चेति** । क्वन्तर्वर्तिनि कुशब्दोऽन्तर्वर्ती यत्र तादृशे वैपरीत्ये रुचिं कुर्विति पाठे दुष्टत्वम् । **सन्धौ** चिङ्कुपदस्य निष्पादनात् । क्वचित्काव्यान्तर्वर्तिनीत्यपि पाठः सुगमः । ननु चिङ्कुपदस्य वाचकत्वमेवेत्यत आह **नहीति** । असभ्योऽर्थो व्यङ्ग्यो वराङ्गरूपः । **अन्वित इति** । तत्रैवाभिधाङ्गीकारात् । व्यञ्जनानङ्गीकारेऽनन्वितस्यासभ्यार्थस्याशक्यतया वृत्त्यभावेन तं प्रत्यबोधकस्य चिङ्कुपदस्य दुष्टता न स्यादित्याह **एवमादीति** । एवमादि पदमिति शेषः । अपरित्याज्यं काव्य इति शेषः ।

**काव्यप्रकाशदर्पणः**—शब्दादलङ्कृतध्वनेः सम्प्रति रसाभावतद्वरिदिति [?] नये व्यञ्जकत्वमङ्गी-कार्यमिति दर्शयति । वैपरीत्यं रुचिं कुर्विति पाठः । अत्र हि चिङ्कुपदं काश्मीरादिभाषायां अश्लीलार्थ-बोधकम् । उत्कलादिभाषायां धृतवांडकमिवेत्यादिकमसभ्योऽश्लीलः । अपरित्याज्यं स्यात् व्यञ्जनानङ्गी-कारात्, तत्प्रतीतेरसम्भवात् ।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदाऽसाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नम् सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्यवाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः' इत्यादौ पिनाक्यादिपद-वैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

**बालचित्तानुरञ्जनी**—स्वदर्शनेऽपि बाधकं तर्कमाह **यदीति**। असाधुत्वादयश्च्युतसंस्कारत्वाद-यस्तेषां नित्यदोषत्वं, सर्वदा सर्वत्र परिहरणीयत्वात् । कष्टत्वादयः अधाक्षीदद्राक्षीदित्यादिश्रुतिकटुत्वादयः, तेषामनित्यदोषत्वम्, शृङ्गारशान्ताद्भुतादौ रसानुपयोगित्वेन हेयत्वात्, वीररौद्रादौ वाऽभ्युपयोगाद-हेयत्वादित्यर्थः । श्रुतिकटुत्वादयः शृङ्गारादौ व्यङ्ग्ये सति हेयाः न वाच्ये अर्थमात्रे । न च व्यङ्ग्येऽपि शृङ्गारादिव्यतिरिक्त इति विभागः स्वदर्शनवृद्धैः कृतः व्यङ्ग्यव्यञ्जकभावानङ्गीकारे न स्यादिति भावः । तदङ्गीकारे व्यवस्था स्यादित्यन्वयमाह **वाच्येत्यादिना** ।

पुनरपि वाच्यव्यङ्ग्ययोर्भेदं दर्शयन् अन्विताभिधानवादिनां दोषमाह **द्वयं गतमित्यादिना** । पूर्वं चन्द्रकलैव शोच्या जाता इदानीं त्वमपीति द्वयं शोच्यमभूदित्यर्थः । अत्र कपालिन इत्यनेन बीभत्सो व्यज्यते । कपालिन इत्यनेनेति कपालिपदोपादानं तस्य काव्यानुगुणत्वं न स्यात् वाच्यव्यङ्ग्यविभागा-नङ्गीकार इत्यर्थः ।

**सारबोधिनी—यदि चेति** । असाधुत्वं व्याकरणव्युत्पत्तिविरहः । कष्टत्वं श्रुतिकटुता । अनित्य-दोषत्वं । रसविशेषापकर्षकत्वम् सर्वैः सहृदयैः व्यञ्जनोपगमे विभागबीजमाह **वाच्यवाचकेत्यादि** । **क्वचि दिति** । मधुरे शृङ्गारादिरसे मधुरवर्णस्यौचित्यम् । **द्वयमिति** । सम्प्रति द्वयं गतमित्यन्वयः । यत्र हि शिवनिन्दायां तात्पर्यम् तत्र पिनाक्यादिपदोपादाने पिनाकवत्तया वीरागते निन्दा न स्यादित्याह **पिनाक्या-दीति** । अशुचिकपालधारणया स्पर्शाद्यनर्हतया हेयताऽवगम्यते । तेनायमर्थः । कस्यापि न वाच्य इति व्यञ्जनैव लब्धप्रसरा इत्याह **काव्यानुगुणत्वमिति** । अनुगुणत्वमुत्कर्षकत्वम् ।

**काव्यप्रकाशदर्पणः**—नित्यदोषत्वम् सार्वत्रिकत्वात् । कष्टत्वं कष्टोच्चार्यत्वम् । श्रुतिकटुत्वम्, तत्प्रभृतीनामनित्यदोषत्वम् रौद्रादावदुष्टत्वात् । यथा मम नृसिंहविजये

स्फुटविकटचपेटापातनेनायमष्टौ सपदि कुलगिरीन् वा खण्डशश्चूर्णयामि ।
प्रलयमरुदुदारस्फीतदत्तोद्धतं वा [तं ?] प्रसृतितिरयगारा तामवातक्षिपामि [?] ॥

तथा च ममैव—

निःश्वासोत्पातवातप्रवधुतकुलाहार्यमुधुष्टदंष्ट्रा
जातः स्फुलिंगप्रकरणविरचितो त्वालिकायानिशङ्कम् ।
अर्द्धे पारींतनर्द्धे नवमहहमहालोकमालोक्यलोकाः
स्तोकः स्तोकावशेषःशरणमुपययुर्वा विधिं वा [?] ॥

सर्वस्यैव रसावेदिनः । कस्यचिद्रसादेवौचित्येन समनन्तरोक्तप्रकारेण अनित्यदोषाणां क्वचिदा-नुगुण्यं द्रढयति **द्वयमिति** । अत्र प्रथममन्यथेति शेषः । वाच्यत्वं शोचनीयत्वम् । **काव्यानुगुणत्वमिति**

पाठे काव्यस्योत्कर्षकत्वम् । कपालिपिनाकिपदयोर्द्वयोरपि साम्येन भगवद्वाचकत्वे कपालिपदेन संबन्ध निमित्तकस्य सकलामङ्गलविघ्ननिन्दितवाचकत्वादेः प्रत्ययनीतापहृतपोषकत्वम् । न चैतत् शृङ्गारादिरसोचितमित्यमङ्गलरूपाश्लीलस्यानित्यदोषता । एवञ्च व्यञ्जनाभावे कपाल्यादिपदं सर्वत्रैव वर्जनीयं स्यादिति भावः ।

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति, एकरूप एवेति नियतोऽसौ । न हि 'गतोऽस्तमर्क.' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्व भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति कर्मकरणान्निवर्तामहे इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागताऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थः, तत्र तत्र प्रतिभाति ।

**बालचित्तानुरञ्जनी**–इदानीं वाच्यस्यैकविधत्वं व्यङ्ग्यस्य बहुविधत्वं विविच्य दर्शयति **अपि च वाच्य इत्यादिना** । अनवधिरनन्तः, वाच्यस्यैकविधत्वाद्व्यङ्ग्यस्य बहुविधत्वादुभयोर्भेदोऽङ्गीकर्तव्य इत्यर्थः ।

**सारबोधिनी**–किञ्च वाच्यव्यङ्ग्ययोर्वाच्यः साधारणो व्यङ्ग्यस्तु नानारूपः प्रकाशत इत्यतोऽपि वाच्याद्व्यङ्ग्यस्य भेद इत्याह **वाच्योऽर्थ इति** । ननु नैतद्वैधर्म्यं नानार्थसैन्धवपदे नानार्थविगमदर्शनादिति चेन्न । तत्र यथानुशासनमेव बोधनात् । प्रकृते त्वनियतस्यैवेत्यस्य भेदकत्वात् ।

अत एवोक्तमनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभातीति । अवस्कन्दनं प्रसभमवमर्दनम् । तत्र तत्र बोद्धरि योधाभिसारिकावासकसज्जावैतनिकब्राह्मणपथिकगोरक्षकसन्तापभीतवणिग्विरहिण्यादिरूपे इत्यर्थः ।

**काव्यप्रकाशदर्पणः**––किञ्चैकत्र वाक्ये एक एवाभिधेयः व्यङ्ग्यस्तु वक्त्रादिवैचित्र्यादनेक इत्यभिधातो विलक्षणैव व्यञ्जनेत्याह **अपि चेति** । वाच्योऽर्थः समभिव्याहृतपदबोध्यः । अवस्कन्दनं प्रसभमवमर्द्दनम् । सुरभयो गावः ।

वाच्यव्यङ्ग्ययोः, 'निःशेषे'त्यादौ निषेधविध्यात्मना,

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥१३३॥

**इत्यादौ संशयशान्तशृङ्गार्यन्तरगतनिश्चयरूपेण,**

कथमवनिप दर्पो यन्निशातासिधारा—
दलनगलितमूर्ध्नां विद्विषां स्वीकृता श्रीः ।
ननु तव निहतारेरप्यसौ किं न नीता
त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥१३४॥

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य,

पूर्वपश्चाद्भावेन प्रतीतेः कालस्य शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन च आश्रयस्य शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभानैर्मल्यसहितेन तेन चावगम इति निमित्तस्य बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्यस्य गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः,

कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपडमग्घाइरिण वारिअवामे सहसु एण्हिं ॥१३५॥

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वम् तत् क्वचिदपि नीलपीतादौ भेदो न स्यात् । उक्तं हि "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च" इति ।

वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम् । किञ्च "वाणीरकुडंगु" इत्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूपे एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बतामिति ।

**बालचित्तानुरञ्जनी**—वाच्यव्यङ्ग्ययोर्विषयभेदादेकत्वं नास्तीत्याह **वाच्यव्यङ्ग्ययोरित्यारभ्य किञ्चेत्यतः** पूर्वग्रन्थेन । निषेधविध्यात्मनेत्यादीनां तृतीयान्तानां शब्दानां विषयभेदेऽपीत्युत्तरत्र सम्बन्धः । हे आर्याः विद्वांसः ! भवन्तः मात्सर्यमुत्सार्य निवार्य मर्यादासहितं कार्यं विचार्य इदं वक्ष्यमाणं वदन्तु । तदेवाह-भूधराणां पर्वतानां नितम्बाः मध्यप्रदेशाः सेव्याः किम् स्मरेण कामेन स्मेराणामीषद्धासयुक्तानां विलासिनीनां पश्चाद्भागाः सेव्या इतीदं वदन्त्विति सम्बन्धः । अत्र संशयो वाच्यः । शान्तशृङ्गारान्यतरनिश्चयश्च व्यङ्ग्य इत्यर्थः ।

कश्चित्कश्चिद्राजानमाह, हे राजन् त्वया निशातया तीक्ष्णया असिधारया दलनं खण्डनं तेन छिन्नशिरसां शत्रूणां श्रीः स्वीकृतेति यदयं कथं दर्पः । किन्तु विपद्धचोऽर्थो जातः । तमेवाह—निहतारे-**र्मारितशत्रोरपि तव वल्लभा असौ कीर्तिः अपगताङ्गैर्मृतैरेभिः शत्रुभिः त्रिदिवं स्वर्गं किं न नीता,**

नीतैव। अत्र मृतैरपि शत्रुभिर्वल्लभा स्वर्गं नीतेति निन्दा वाच्या स्तुतिर्व्यङ्ग्येति वाच्यव्यङ्ग्ययोस्त्वत्र भेदेऽपीत्युत्तरत्र सम्बन्धः। पूर्वं वाच्यं प्रतीयते पश्चाद्व्यङ्ग्यमिति वाच्यव्यङ्ग्ययोः कालस्य भेदेऽपि; वाच्यं शब्दाश्रयमेव व्यङ्ग्यं तु शब्दाश्रयं, तदेकदेशाश्रयं, अर्थाश्रयं वर्णरचनाद्याश्रयञ्च। शब्दशब्दैकदेशादिभिरपि व्यञ्जकत्वस्य प्रतिपादितत्वादिति वाच्यव्यङ्ग्ययोर्निमित्तस्य कारणस्य भेदेऽपि; वाच्यबोद्धाबोद्धैर्वोच्यते व्यङ्ग्यबोद्धविद्भ्य इति [?]। तथा चोक्तम्

शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।
वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥इति। [ध्व० १।७]

तथा च वाच्योऽर्थः प्रतीतिमात्रकारी व्यङ्ग्यश्चमत्कारकारीति वाच्यव्यङ्ग्ययोः कार्यस्य भेदेऽपि, गतोऽस्तमर्क इत्यादौ प्रदर्शितन्यायेन वाच्यस्तावदेकः व्यङ्ग्यश्च प्रकरणादिविशेषसहायतया अनेकप्रकार इति वाच्यव्यङ्ग्ययोः संख्याया भेदोऽपि।

काचिद्विदग्धा सखी काञ्चिदविनीतां उपपतिखण्डिताधरां नायिकां तत्पतिसन्निधौ तमपश्यन्तीव नायिकावाच्यतानिवारणायाह **कस्स इति**। सभमरपउमग्घायिणि सभ्रमरपद्माघ्रायिणि हे सभ्रमरपद्माघ्राणशीले। वारिअवामे हे वारितवामे वारणानङ्गीकारिणि हे सखि, पिआइ प्रियायाः सव्वणं सव्रणं, अहरं अधरं, दट्ठूण दृष्ट्वा, कस्स वा कस्य वा, रोसो रोषः, ण होइ न भवति। अपि तु भवतीत्यर्थः। अतः सहसु सहस्व। उपालम्भानिति शेषः। "वाच्छद्मपद्ममूर्खद्वार" [?] इति सूत्रेण दकारमकारयोर्मध्ये पउमेति रूपम्। "पञ्चमी"ति सूत्रोणोत्वपक्षे "पोम्मं" इति रूपं 'इर' इति सूत्रेण शीलाद्यर्थानां तृन्तादीनामिरादेशः [?]। इदानीं सहस्वेति वाक्यं अविनीतसखीविषयं भ्रमरेणाधरो दष्टः नान्यथेति अस्यापराधो नास्तीति त्वया अन्यथा शङ्का न कार्येति कान्तविषयम् भ्रमरेणापीडितोऽधर इति मया समर्थितम्। अतस्त्वया न भेतव्यमिति व्यङ्ग्यमुपपतिविषयम् भ्रमरेण दष्टोऽधरः न रमणेन अतस्त्वया संरम्भो न कर्त्तव्य इति सपत्नीविषयम् अन्यथा न शङ्का कार्येति प्रतिवेशिकविषयम्, अद्य मया यथा कथञ्चित् समाहितम्, अतः परं सावधानतया त्वया भवितव्यमिति नायिकाविषयम् इत्यादि प्रकारेण वाच्यव्यङ्ग्ययोर्विषयस्य भेदेऽपि रूपभेदात् कारणभेदात् कार्यभेदात् संख्याभेदात् विषयभेदाच्च वाच्यव्यङ्ग्ययोरत्यन्तभेदः। तथाप्येकत्वाङ्गीकारे नीलपीतादेरपि भेदो न स्यादित्याह **यद्येकत्वमिति**। तर्हि वृद्धसम्मतिमाह **उक्तं हीति**। अयमेव हि धटपटयोर्भेदः जलाहरणशीतत्राणादिविरुद्धधर्माध्यासः अयमेव हेतुः यत्कारणभेदश्चेत्यर्थः। भेदकान्तरमाह **वाचकानामिति**। नियताभिधाव्यापाराणां वाचकानां शब्दानां तत्तद्वर्णादीनामर्थनिरपेक्षाणामनियतव्यञ्जकशक्तीनां कथं न वैलक्षण्यमित्यर्थः। **किञ्चेति**।

वाणीरकुडंगुड्डीण सउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए बहुए सीअंति अंगाइं॥
वेतसीकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥

इत्यादौ वाच्यार्थप्रतीतिपुरःसरा प्रतीयमानार्थप्रतीतिः तदनन्तरं तृतीयकक्षायां वाच्यप्राधान्यात् स्वरूप एव विश्राम्यति। तत्र गुणीभूतं व्यङ्ग्यं यस्य तस्मिन् काव्ये अतात्पर्यभूतः शब्दान-

भिधेयः रसादिस्वरूपोऽर्थः प्रतीयमानः कस्य व्यापारस्य विषयतामवलम्बतां व्यञ्जकव्यापारव्यतिरेकेणेति शेषः ।

**सारबोधिनी**--वाच्यव्यङ्ग्ययोर्भेदे उपपादकान्तरमाह **वाच्येति** । निषेधविध्यात्मना वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपि यद्येकत्वमिति दूरेणान्वयः । **मात्सर्येति** । वाच्यव्यङ्ग्ययोः संशयरूपतया निश्चयरूपतया च स्वरूपस्य भेदेऽपीत्यत्रापि योज्यम् । **शान्तेति** । शान्तशृङ्गार्यन्तरगतः शान्तशृङ्गार्यन्तरविषयको यो निश्चयः, शान्तस्य भूधराणां नितम्बः, शृङ्गारिणाश्च विलासिनीनामित्याकारः । अभिधाया अविषयत्वादयमर्थोऽवाच्यः । तथा च संशयो वाच्यो निश्चयश्च व्यङ्ग्य इति ।

**कथमित्यादि** । अत्र निन्दावाक्यार्थो वाच्यः । स्तुतिर्व्यङ्ग्या । वपुषा स्वरूपेण । वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपि यद्येकत्वमिति दूरेणान्वयः । **असाविति** । असौ कीर्तिः ।

पूर्वपश्चाद्भावो व्यञ्जकव्यङ्ग्यस्वरूपत्वात् । पूर्ववर्तित्वेनैव कारणत्वात् । अभिधाव्यञ्जनयोराश्रयभेदमाह **शब्देत्यादि** । निमित्तभेदमाह **शब्दानुशासनेति** । कार्यभेदमाह **बोद्धृमात्रेति** । विदग्धो रसिकः । व्यपदिश्यत इति व्यपदेशः । भावे घञ् । चमत्कृतिरास्वादः ।

**कस्सेति** । प्रेष्यागते प्रियाया उपपतिदष्टाधरं व्रणं वीक्ष्य विमनायमाने गृहपतौ विदग्धसखी समाधत्ते ।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम् ॥

वारितकर्मणि वामा विरुद्धाचारिणी । वारितस्य भ्रमरस्य पद्माघ्राणं दंशकारणं अधरदंशनं चावश्यमाचरयसि । वपतिक्रोधनियन्त्रणमनुभव । एण्हिं इदानीमविचारदशायां प्रतिनायकसन्निधौ तत्सन्निधौ च सर्वं सुखाय भविष्यति ।

**सखीत्यादि** । वक्त्री [वक्त्र्याः ?] सखी । नायिका, सा वाच्यस्य विषयः । सैव कान्ता यस्य तत्कान्तो गृहपतिः । इयं भ्रमरेण दष्टाधरा, न षिङ्गेनेति व्यङ्ग्यस्य नायको विषयः । आदिपदादुपपत्यादिग्रहणम् । पुनरेवं मा कृथा इत्यस्योपपतिः । ममैव वैदग्ध्यं इत्यस्य प्रतिवेशिनी इत्यादि । भेदेऽपीति प्रतिपङ्क्त्यन्तेनान्वेति, भेदे वैधर्म्ये । **उक्तमित्यादि** । भेदोऽन्योन्याभावः । विरुद्धस्य तदवृत्तेर्धर्मस्याध्यासो ज्ञानम् । ज्ञायमानवैधर्म्यमेवान्योन्याभाव इति वादिमतेनायं भेदहेतुरन्योन्याभावविषयकः । न केवलं वाच्यव्यङ्ग्ययोरेव वैधर्म्यमपि तु वाचकव्यञ्जकयोरपीत्याह **वाचकानामित्यादि** । गृहीतसङ्केतं सन्तमेवार्थं वाचका बोधयन्तीति तेषामर्थापेक्षा । असदेव पावनत्वादिकं तटे बोधयतांव्यञ्जकानां नार्थापेक्षेत्यर्थः ।

**काव्यप्रकाशदर्पणः**–संप्रति पदवैलक्षण्यदर्शनेनापि वाच्याद् व्यङ्ग्यभेदं दर्शयन् आह **वाच्यव्यङ्ग्ययोरिति** । एवं स्वरूपादिभेदेऽपि यद्येकत्वं वाच्यव्यङ्ग्ययोः क्वचिदपि नीलपीतादौ भेदो न स्यादिति संबन्धः । संशये प्रकरणादिति नियमाभावदशायामरसिके व्यङ्ग्यसंभेदरहिते, वपुषा स्वरूपेण, स्वरूपस्येति समनन्तरोक्तेषु त्रिष्वपि तृतीयान्तेषु संबन्धः । शब्दशासनं व्याकरणम् । अर्थानुशासनं मीमांसादि । प्रकरणवक्त्रादिसहकृतेन प्रतिभासात् । काव्यरसस्य ज्ञानाच्च गुणान्तरातिशयविशेषस्य

नैर्मल्येन वाच्यप्रतीतेरपि प्रकरणादिसाहाय्यस्याङ्गीकारेऽपि तत्सहिततत्प्रतिभानैर्मल्याङ्गत्वं व्यङ्ग्यस्यैवेति विशेषः । गतोऽस्तमर्क इत्यादेर्विषयाभेदापेक्षया पुनरुक्तेः ।

कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥

वारितवामे प्रतिकूलकारिणि । तत्र वाच्यं सखीविषयं भ्रमरेण दष्टाधरेयं न पुनः परेणेति व्यङ्ग्यं तत्कान्ताविषयभेदेऽपीति प्रतिपाद्यत इत्यन्वयः । एकत्वं एकवृत्तिबोध्यता । लक्षणामेकजातीयाम् । अयमेव हि भेदो यद् विरुद्धधर्माध्यासः । अयमेव भेदहेतुः यः कारणभेद इत्यर्थः । प्रकारान्तरेणापि व्यङ्ग्यस्य वाच्याद्भेदमाह **वाचकानामिति** । अयमर्थः यस्य शब्दस्य योऽर्थो वाच्यस्तस्यार्थस्य पूर्वपरिज्ञाने तस्य शब्दस्य तद्वाचकत्वं ज्ञातुमशक्यम् । अतः शब्दानां वाचकत्वं सङ्केतितार्थज्ञानसापेक्षमवगम्यते । व्यञ्जकं व्यङ्ग्यार्थस्य पूर्वज्ञानापेक्षयापि भवतीत्यपि न वाचकत्वमेव व्यञ्जकत्वम् । तद्वाचकानां वाचकत्वाद्भिन्नपदार्थज्ञानापेक्षा । व्यञ्जकानां तु सङ्गीतकाकलीकोलाहलादीनां रसादिव्यञ्जत्वेन पदार्थप्रतिसन्धानाभावोऽपीत्युभयोर्भेदः ।

तात्पर्यवृत्तौ च व्यङ्ग्यार्थबोधनमिति वादिनं प्रति दूषणान्तरमाह **किञ्चेति** । यत्परः शब्दः स शब्दार्थ इति न्यायेन व्यङ्ग्यस्य गुणीभावे शब्दस्य तत्परत्वाभावात् । व्यञ्जनानङ्गीकारे शब्दार्थत्वमनुपपन्नं स्यादिति कस्य व्यापारो संवेद्यः । पूर्वं व्यञ्जनादृत इति शेषः । ननु गतोऽस्तमर्क इत्यादिवाक्येन प्रकरणादिरूपज्ञापकान्तरसहायेन बोधितस्य कान्तमभिसरेत्यादिव्यङ्ग्यार्थस्य कथं शब्दप्रमाणबोध्यत्वं शब्दैकसमधिकत्वाभावादिति चेत् अत्र केचिदाहुः यथा शब्दस्य बोधितस्य क्वचिद्वाक्यस्यार्थस्य सत्यासत्यजिज्ञासायां सत्यमेवायं प्रोक्तवानित्यन्वभावेन साधिते सत्यत्वे यथा शब्दप्रमाणवेद्यत्वं तथा व्यङ्ग्यस्यापीति । [?] नैवम् । तथाहि । वाच्योऽर्थो यः शब्दप्रमाणविषयः तस्य क्वचित् सत्यासत्यजिज्ञासायां सत्यत्वमनुमानविषय इति शब्दानुमानप्रमाणयोर्भिन्नविषयत्वम् । व्यङ्ग्यस्त्वेक एव शब्दप्रमाणेन प्रकरणादिना च बोध्यत इति दृष्टान्तदार्ष्टान्तिकयोर्विषयभेदात् का गतिरिति चेत् अत्रैवं सङ्गतिः यथा प्रमाणादेर्विष्णुसहाद्यनेकार्थस्यापि हर्यादेरेकविधधियोऽनवच्छेदकत्वम्, यथानेकव्यञ्जकस्यापि शब्दस्यैकव्यङ्ग्ये प्रकरणसाम्यस्येतिकर्त्तव्यतारूपतया शब्दस्याङ्गत्वं साङ्गस्य व्यवधायकत्वं न्यायसिद्धमेवेति न शब्दप्रामाण्यव्याकोपः । इह च यद्यपि वाक्यार्थस्य प्रतीत्यनन्तरं तस्य सत्यासत्यजिज्ञासायां प्रतिपाद्यत्वं प्रमाणान्तरेणार्थज्ञानेनैव बोध्यते तथापि सत्यासत्यजिज्ञासातः पूर्वव्युत्पन्नाया वाक्यार्थप्रमाया अप्रमात्वाभावात् शब्दैकसमासगम्यत्वाच्च न शब्दप्रामाण्यव्याकोपः । न हि चक्षुरादिना प्रतीतौ सत्यासत्यजिज्ञासायां प्रत्यक्षप्रामाण्यं व्याकुप्यते ।

ननु 'रामोऽस्मि सर्वं सहे' इति 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति 'रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोयं नूतनः प्रतीयमानो नाम ।

उच्यते–लक्षणीयस्यार्थस्य नानात्वेऽपि, अनेकार्थशब्दाभिधेयवन्नियतत्वमेव। न खलु मुख्येनार्थेनानियतसम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविशेषवशेन नियत-सम्बन्धः अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते।

न च

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णिमज्जहिसि॥१३६॥

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत्कथमत्र लक्षणा। लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम्।

यथा च समयसव्यपेक्षाऽभिधा तथा मुख्यार्थबाधादित्रयसमयविशेषसव्यपेक्षा लक्षणा अत एवाभिधापुच्छभूता सेत्याहुः।

**बालचित्तानुरञ्जनी**—ननु यथा व्यङ्ग्यः प्रकरणादिबलादनेकस्तथा लक्ष्योऽपीति, तत्र व्यङ्ग्य-स्यान्तर्भावो भविष्यतीति शङ्कते **नन्विति**।

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥

इति श्लोके रामोऽस्मीत्यत्र कठिनहृदयत्वं वनवासादिदुःखभाजनत्वञ्चेत्यादिरनन्तो लक्ष्योऽर्थः।

प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्॥

इति श्लोके, रामेण प्रियजीवितेत्यत्र कातरत्वं, कैतवस्नेहत्वं वेत्यादिर्लक्ष्योऽर्थः। 'रामोऽसावि'त्यत्र सर्वलोकातिशायित्वं खरदूषणादिराक्षसहिंसानिपुणत्वं लक्ष्योऽर्थ इति लक्ष्योऽर्थो नानाविध इत्यर्थः। यथा व्यङ्ग्यबोद्धुर्व्यञ्जक इति व्यपदेशस्तथा लक्ष्यार्थबोद्धुर्लक्षक इति विशेषव्यपदेश इत्यपि समानम्। अतो व्यङ्ग्यं लक्ष्येऽन्तर्भवतीति न व्यङ्ग्यं पृथगिति भावः।

व्यङ्ग्यलक्ष्ययोर्भेदं दर्शयन् परिहरति **उच्यत इति**। व्यङ्ग्यवल्लक्षणोयो नानाविधो गोशब्दार्थवन्नियतसम्बन्ध एव। यथा गङ्गायां घोष इत्यादौ मुख्येन गङ्गाशब्दार्थेन तटादिर्लक्ष्यते न तथा पावनत्वादिरपि अनियतसम्बन्धो लक्षयितुं शक्यत इति उक्तमेवार्थं विशदयति **न खल्विति**। व्यङ्ग्योऽर्थस्तावदेवंविधो न भवतीत्याह **प्रतीयमानस्त्विति**।

यत्र यत्र व्यङ्ग्यप्रतीतिस्तत्र लक्षणा न भवतीत्याह **न चेति**।

अत्ता एट्ठ णुमज्जइ एट्ठ अहं दिअसअं पुलोएहि।
मा पहिअ रत्तिअंधअ सेज्जाए महं णुमज्जिहिसि॥
श्वश्रूरत्र निषीदति अत्राहं दिवसकं विलोकय।
मा पथिक रात्र्यन्ध ! शय्यायामावयोर्निषीदसि॥

अत्र च न मुख्यार्थबाध इत्यन्वयः। **मुख्यार्थबाधाभावादत्र** लक्षणा नास्तीत्यर्थः। किञ्च प्रयोजनं विना लक्षणाया नोपयोग इति लक्षणायामपि व्यञ्जनाव्यापारोऽङ्गीकर्तव्य इति प्राक् प्रतिपादितम्। अतस्तयोर्भेदोऽङ्गीकर्तव्य इत्याह **लक्षणायामपीति**।

ननूभयोर्नियतत्वानियतत्वरूपात्तत्र भेदोऽस्तु नानात्वभजनादिना धर्मेणाभेदः किं न स्यादित्यत आह **यथा चेति**। अभिहितान्वयपक्षमाश्रित्य मुख्यार्थबाधादित्रयमेव समय इत्युक्तम्। यथा अभिधालक्षणयोः सङ्केतापेक्षत्वसाम्येऽपि मुख्यार्थबाधादित्रयरूपसङ्केतविशेषादिना भेदस्तथा लक्षणाव्यञ्जनयोरपि नानात्वभजनादिधर्मसाम्येऽपि नियतत्वानियतत्वरूपावान्तरभेदेन भेद इति भावः। अभिधालक्षणयोर्भेदकमाह **अत एवेति**। यत उभयोर्भेदः, अतः मुख्यया वृत्त्या सङ्केतग्रहणमपि तत्रास्तीति अभिधाशेषभूता लक्षणा। उभयोरभेदे **शेषशेषिभावो** न स्यादिति भावः। व्यञ्जना लक्षणैवेति यदुक्तं तद्दूषयति **न चेति**।

**सारबोधिनी**--ननु व्यङ्ग्येषु नानात्वमर्थान्तरसङ्क्रमितवाच्यध्वनित्वादिविशेषव्यपदेशविषयत्वं शब्दार्थाधीनत्वं प्रकरणादिसव्यपेक्षत्वमिति धर्मा दृश्यन्ते, ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेत्याह **रामोऽस्मीति**। 'रामोऽस्मी'त्यत्र दुःखसहिष्णुत्वेन, 'रामेण'त्यत्र निःस्नेहत्वेन 'रामोऽसावि'त्यत्र विविधगुणाश्रयत्वेन प्रतीतेर्नानात्वमित्यर्थः। विशेषव्यपदेशाः अर्थान्तरसङ्क्रमितवाच्यादयो लक्षणाहेतुविषयाः। लक्ष्यस्यावगमः लक्षणया शब्देन प्रतिपाद्यत्वात्। यतः मुख्यार्थबाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतया प्रकरणादितात्पर्यग्राहकत्वेन तस्यापेक्षणीयत्वात्। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। तस्माल्लक्ष्ये वैधर्म्यानाश्रयत्वेन लक्ष्यतो न तद्भेद इत्याह **कोऽयमिति**। प्रतीयमानो व्यङ्ग्यः।

सिद्धान्तयति **उच्यत इति। अनेकार्थशब्दाभिधेयवदिति**। भद्रात्मन इत्यादिवदित्यर्थः। नियतत्वं नियतसम्बन्धत्वम्, वाच्यावाच्ययोरेकप्रतिपाद्यविषयत्वम्। तच्चानुपदं विवेचयिष्यते। **सम्बन्ध इति**। सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषय इत्यर्थः।

कथं च मुख्यार्थबाधं विना लक्षणेत्याह **अत्ता एत्थेति**। स्वयंदूत्या इयमुक्तिः। निमज्जति जरातुरत्वेन निष्पंदं निःशब्दं शेते। अहमित्यावयोरर्थे निपातः। अन्यथा स्वमात्रोट्टङ्कने रहस्यप्रकाशः स्यादिति लोचनकारः। वस्तुतस्तु ममेत्येवार्थः स्यातीव शङ्केति। ममेति विशिष्योक्तिरिति भावः। अत्र गृहे श्वश्रूरहं च। श्वश्रूरिति जरात्वेन निष्पन्दा। जनान्तरसञ्चारो नास्ति। यथेच्छं व्यवहरेति। ध्वनिव्यङ्ग्यपक्षे मा शब्दोऽन्धत्वनिषेधे। अरात्र्यन्ध पथिक ! ममैव शय्यायां पतिष्यसीत्यभिप्रायः।

न च मुख्यार्थान्वयानुपपत्तिः। ननु तात्पर्यविषयानुपपत्तिरस्त्येवेत्यत आह **लक्षणायामपीति**। प्रतिपादितं लक्षणाग्रन्थे। तत्र प्रयोजनस्यावश्यकत्वात्। तस्य च व्यापारान्तरानवगमत्वात्। तदर्थं

व्यञ्जनावश्यकत्वे अन्यत्रापि तस्यौचित्यात् । वस्तुतस्तु, व्यञ्जकवाक्यस्य वाक्यान्तराद्वैलक्षण्यं प्रतीयते । तत्र चाभिधादितोऽर्थोपस्थितौ यावती सामग्री तावती न व्यङ्ग्योपस्थिताविति स्थिते सहकारिविशेषे कल्पनीये अभिधाया एव तत्कल्प्यते चेत् तदा स्वभावभङ्ग इत्यगत्या वृत्त्यन्तरं कल्प्यते । अन्यथा मुख्यार्थबाधादिसहकारेणाभिधयैव लक्ष्यार्थोपस्थितिसंभवे लक्षणापि वृत्त्यन्तरेण न सिद्धयेदिति भावः ।

नवीनास्तु, पदपदार्थभिन्ना व्यञ्जना नाम काचिद्वृत्तिरङ्गीक्रियत इति न ब्रूमः, किन्तु यो व्यापारः सत्यपि बाधाद्यवतारे विनापि तात्पर्यज्ञानं वक्तृबोद्धव्यादिवैशिष्टयेन बोधयति सैव व्यञ्जना, शक्तिलक्षणयोर्वैधर्म्यादित्याहुः ।

नन्वस्तु, निरूढलक्षणावत् सर्वत्र न तदपेक्षेत्यत आह--**यथा चेति** । **समयः** सङ्केतः । मुख्यार्थबाधे प्रयोजनप्रतिपत्तये मुख्यार्थसंबन्धो बोद्धव्य इति व्युत्पादनम् । तदाह **समयविशेषेति** । मुख्यार्थबाधादिना विशेषणाद्विशेषः । न चैवं, व्यञ्जनया सामान्यविशेषसङ्केतरहितस्यापि बोधनात् । **पुच्छभूता** पृष्ठलग्ना । शक्यसम्बन्धस्य लक्षणात्वे तन्निरूप्येत्यर्थः । यद्वा, यतो मुख्यार्थानन्तरमेव लक्षणेत्यर्थः ।

**काव्यप्रकाशदर्पणः**--एवं व्यङ्ग्यस्य वाच्यत्वं तात्पर्यविषयत्वं च निराकृत्य लक्ष्यत्वसंभावनां निराचिकीर्षुराशङ्कते नन्वित्यादिना प्रतीयमानो नामेत्यन्तेन ग्रन्थेन ।

रामोऽस्मीत्यादौ राज्यभ्रंशक्लेशसहिष्णुतादयः ।

प्रत्याख्यानरुचेः कृतं समुदितं क्रूरेण यद्रक्षसा
सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।
व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन नु कृतं प्रेम्णः प्रिये नोचितम् ॥

इत्यत्र मायासीतादर्शने साहसैकरसिकत्वदुष्कृतफलभोक्तृत्वादयः । रामोऽस्मीत्यादाव लौकिकप्रभावत्वादयो **रामपदेन** लक्ष्यन्त एवेति भवतामपि मतं प्रकरणादिसाचिव्येन उक्तरीत्या **नानाविधे** प्राधान्यादिना धर्म्या पदेत्यादि व्यपदेश्यबीजं [?] वाच्यस्यार्थान्तरसङ्क्रमणादिनाऽर्थान्तरसङ्क्रमितवाच्यत्वादिव्यपदेहेतुः । अर्थोऽभिधेयः । एवञ्चोक्तस्य सर्वस्य व्यङ्ग्यप्रकारस्य लाक्षणिकेऽप्युपपत्तेः तदतिरिक्तः कोऽयं नूतनः प्राचीनतन्त्राप्रसिद्ध असाम्प्रदायिषु [?] **प्रतीयमानो नाम** ?

प्रकाश्य सिद्धान्तमाह–नियतत्वं नियतसम्बन्धत्वम् । एतदेवाह **न खल्विति** । वाच्यार्थव्यङ्ग्यार्थयोः-सम्बन्धस्य नियतत्वानियतत्वे एतदुदाहरणव्याख्याने स्फुटीकरिष्यति **न चेति** । न च मुख्यार्थबाध इति सम्बन्धः । किन्तु वाच्यवाचकभावाव्युत्पन्नः स्वयमेव मुख्यार्थस्यान्वयानुपपत्तौ **अन्वययोग्यमर्थं** लक्षयति । व्यञ्जनायास्तु ज्ञायमानप्रतिनियतानिमित्तसापेक्षविरहात् कथं लक्षणाभावः । **सुहृद्भूता** सा **लक्षणा** । तदनुगमेन तस्या लक्षणायाः पश्चाद्व्याप्रियमाणतया अवाचकवर्णानुमित्यादयः ।

आदि शब्दादधोमुखत्वादि भङ्गादि । एवमुक्तं सर्वमेव कारणार्थमुपसंहरति **इतीति** । अतिवर्ती अतिक्रान्तो विषयः । अनपह्नवनीयः अपह्नोतुमशक्यः ।

न च लक्षणात्मकमेव ध्वननम् तदनुगमेन तस्य दर्शनात् । न च तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात् । न चोभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः । न च शब्दानुसार्येव । अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः, इति अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव ।

तत्र 'अत्ता एत्थ' इत्यादौ नियतसम्बन्धः, 'कस्स व ण होइ रोसो' इत्यादौ, अनियतसम्बन्धः ।

विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं ।
हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ ।।१३७।।

इत्यादौ सम्बद्धसम्बन्धः । अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य सङ्कोचः । ततो ब्रह्मणः स्थगनम् तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितमिति ।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव च वाचकम्' इति येऽप्याहुः तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

**बालचित्तानुरञ्जनी**–व्यञ्जना लक्षणैवेति यदुक्तं तद् दूषयति-**न चेति** । व्यञ्जनाया लक्षणात्मकत्वं अनुगममात्रात् साध्यते । नियतानुगमाद्वेति विकल्प्याद्यं दूषयति **तदिति** । तदनुगमेन लक्षणानुगमनेन तस्या व्यञ्जनाया अनुगममात्रात्तदात्मकत्वे साध्यमाने अतिप्रसङ्ग इति भावः । द्वितीयं दूषयति, **चेति** । विवक्षितान्यपरवाच्ये ध्वनौ अभिधामूलत्वेन ध्वननत्वसंभवात् न लक्षणानुगतमेव ध्वननमित्यर्थः । अस्तु तर्हि ध्वननमभिधालक्षणानुगतमेवेत्याह **न चोभयेति** । ललितपरुषादिवर्णानुप्रासस्य अर्थाभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वदर्शनात् न ध्वननमुभयानुगतमेवेत्यर्थः । अस्तु तर्हि वर्णानुसारेण ध्वननम् तत्राह **न च शब्देति** । अशब्दात्मकं यन्नेत्रविभागेन विलोकनादि तद्गतत्वेनापि तस्य ध्वननस्य प्रसिद्धेर्दर्शनात् न ध्वननं वर्णानुगतमेवेत्यर्थः । "मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः" इत्यत्र गुरुजनमवधीर्यापि साभिलाषगर्भमन्थरं विलोकितवतीति स्मरणे विप्रलम्भोद्दीपनम् । आदिशब्देन अधोवक्त्रत्वकुचकम्पनवाष्पावेशादि गृह्यते । **व्यञ्जनस्याभिधादिव्यतिरेकसाधनमुपसंहरति इतीति** । शब्दस्य मुख्यो व्यापारः अभिधा वाच्यार्थव्यापारस्तात्पर्यं, **लक्षणीयव्यापारो** लक्षणेति त्रिविधात्मकं यद्व्यापारत्रयं तदतिवर्ति **"कस्स व ण होइ"** इत्यादौ सतीत्वप्रकटनादिव्यङ्ग्यं, सपत्नीप्रभृतीनां चान्यदिति अनियतसम्बन्धः । **विपरी अरए इत्यादि** । लट्ठी लक्ष्मीः । विपरीअरए विपरीतसुरते उपरिसुरत इत्यर्थः । णाहिकमलट्ठं नाभिकमलस्थं वलं लल्लाणं बम्हं ब्राह्मणं ? दट्ठूण दृष्ट्वा, रसाउला रसाकुला सती, हरिणो हरेः दाहिणणयणं दक्षिणनयनं, झडिति झडिति छेइ छादयति स्थगयति । दाहिणेति न वा तीर्थदुःखदक्षिणदीर्घ इति [?] सूत्रेण क्षशब्दस्य हत्वे हेदक्षिणेऽस्येति सूत्रेण दीर्घत्वे दक्षिणमिति भवति । पक्षे दक्षिणमिति "छदेर्नुमनुमोवालढंकयष्वासंनुमा" [?] इति सूत्रेण छदेर्ढकादेशः । वालदलोदशतृष्विति [?] एत्वम् । अत्र

सम्बद्धसम्बन्धत्वं व्यङ्ग्यस्य दर्शयति। **अहोति**। अत्र सम्बद्धस्य व्यङ्ग्यस्यार्थस्य सूर्यात्मकस्य सम्बन्धोऽपरो व्यङ्ग्योऽर्थः सूर्यास्तमयरूपः। तस्य च पद्मसङ्कोचरूपोऽपरः सम्बन्धः। ततो ब्रह्मणः स्थगनं, तस्मिंश्च सति गोप्याङ्गस्यादर्शनेन निर्लज्जरतप्रवृत्तिरित्यर्थः।

ननु "सत्यं ज्ञानमनन्तं ब्रह्म"त्यादौ धर्मिधर्मभावाभावात् अखण्डः परब्रह्मात्मको वाक्यार्थ एव वाच्यः, अखण्डवाक्यमेव वाचकमिति ब्रह्मवादिनः उपनिषदः शब्दब्रह्मवादिनो भर्तृहरिप्रभृतयश्च कथयन्ति। अतो विध्यादिव्यङ्ग्यो वाच्य एवेति शङ्कते **अखण्डेति**। अखण्डया बुद्धया नितरां ग्राह्यो वाक्यार्थ एव वाच्यः, अखण्डवाक्यमेव वाचकमित्यर्थः। तैरपि देशकालावच्छेदेन अशेषव्यवहर्तृनिष्ठतया कल्पितपदपदार्थसंश्रयेण वाच्यवाचकल्पना तैरपि क्रियत एवेति तन्मतेऽपि शब्दस्यार्थान्तरप्रतीतौ व्यञ्जकत्वमेवाङ्गीकर्तव्यमिति परिहरति **तैरपीति**। अविद्यापदं व्यवहारमार्गः। उक्तोदाहरणादौ निःशेषच्युतेत्यादौ विध्यादिः तदन्तिकमेव रन्तुं गतासीत्यादिरूपः।

**सारबोधिनी**--लक्षणाव्यञ्जनयोर्भेदमाह **न चेति**। तदनुगमनेन तदुपजीवनेन, लक्ष्यार्थं प्रत्याय्य विरतायां तस्यामित्यर्थः। अभिधाया आलम्बनं नानार्थव्यञ्जनायां सम्बद्धत्वेनाश्रयणात्। **नियतसम्बन्ध इति**। नियतसम्बन्धत्वं वाच्यव्यङ्ग्ययोरेकबोधविषयत्वम्। वाच्यव्यङ्ग्यप्रतीत्योरेकाधिकरणत्वमिति यावत्। 'अत्ता एत्थे'त्यत्र तस्य सत्त्वं द्वयोः पथिकरूपैकाधिकरणत्वात्। "कस्स व" इत्यादौ तदभावः। सखीकान्तादिगतत्वेनाधिकरणभेदात्। लक्षणायान्तु नियतसम्बन्धत्वम्। यस्यैव वाच्योपस्थितिस्तस्यैव तद्बाधेन लक्ष्योपस्थितिस्वीकारात्।

**विवरीअ इति**।

विपरीतरतौ लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।
हरेर्दक्षिणनयनञ्च रसाकुलत्वाज्झटिति स्थगयति॥

सम्बद्धसम्बन्धः। निर्वाह्यनिर्वाहकतया सन्तानीभूय व्यङ्ग्य इत्यर्थः। **हरिपदेनेति**। हरेर्दक्षिणवामनयनयोः सूर्यचन्द्रात्मकत्वेन प्रसिद्धत्वात्। किमत आह **तन्निमीलनेनेति**। निमीलनमाच्छादनम्। अस्तमयोऽप्रकाशः। सङ्कोचो मुद्रणम्। स्थगनं पिधानम्। तत्र स्थगने अदर्शने ब्रह्मणोऽनियन्त्रणमाश्वस्तम्।

वेदान्तिभिरपि दशाविशेषे व्यञ्जनाङ्गीकरणीयैवेत्याह **अथाखण्डबुद्धीत्यादि**। अविशिष्टरत्यादिजनितयाखण्डबुद्धया निर्ग्राह्यः परब्रह्मात्मको वाक्यार्थ एव वाच्यः अखण्डमेव वाक्यं वाचकं तद्व्यङ्ग्यो वाच्य एवेति पौर्वापर्यानेकशब्दप्रकाशितं एकं वेदान्तनिष्णा"तास्तमखण्डं प्रपेदिरेत्यादि" शब्दं ज्ञानमनन्त"मिति वाक्यमेव वाचकमिति। वाचकं एतादृशबुद्धिनिमित्तम्। यदाहुर्व्यासपादाः—"अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकपदवर्णविभागमस्या निमित्तम्।" **अस्याः बुद्धेः**। केचित्तु-अखण्डबुद्धिर्महावाक्यबुद्धिस्तया निर्ग्राह्यो महावाक्यार्थः स एव वाच्यः इत्याहुः। **वाक्यमेव वाचकम्** एतद्व्यङ्ग्योऽपीति वेदान्तैकदेशिमतं निराकरोति **तैरपीति**। **अविद्यापदं व्यवहारमार्गमाह**। अन्यथा व्युत्पन्नाव्युत्पन्नव्यवहारो न स्यात्। तत्तद्विशेषपदार्थोपस्थितिश्च न स्यात्। अविद्यापदे च तेषां भट्टनयस्तत्र व्यञ्जना स्थापितैव।

**काव्यप्रकाशदर्पणः**–श्वश्रूरत्र निषीदति अत्राहं दिवसं प्रलोकय ।
मा पथिक ! रात्र्यन्ध शय्यायां मम निषीद ।।

दिवसमिति काले कर्म्म । कथमत्र लक्षणा । मुख्यार्थबाधजीवितेत्यर्थः । प्रतिपादितं लक्षणानिरूपणप्रस्तावे । **तथेति** । समयविशेषः समप्रायो विशेष्यव्यञ्जनातो वैलक्षण्यम् । यद्यपि **प्रयोजनलक्षणायां** प्रयोजनस्य लाक्षणिकप्रतीतिकार्यत्वात् मुख्यार्थबाधसंबन्धयोरेव **प्रथमं** परिज्ञानं तथापि रूढिलक्षणाद्युपात्तत्रितयपरिज्ञानस्य पूर्वं संभवात् । लक्षणाजातीयसंभवमात्रेण किमप्यत्र प्रयोजनं भविष्यतीति प्रतीतेर्बुद्धिस्थतया चोक्तं **मुख्यार्थबाधत्रितयेति** । न खल्वत्र वाचकवन्मुख्यार्थबाधादिना परार्थो ज्ञेय इति संबध्यते । विषयान्तरप्रतिपादनव्यग्रतया पूर्वमदर्शितानि [नि] यतसंबन्धा [दी ?]न्युदाहरणानि दर्शयन् आह **तत्रेति** । नियताः संबन्धाः, वाच्यव्यङ्ग्ययोरेकविषयत्वात् । "कस्स व न होइ"इत्यादौ तु वाच्यार्थः सखीविषयः व्यङ्ग्यार्थस्तु तत्तत्प्रतिविषय इत्युभयोर्भिन्नविषयसंबन्धादनियतः । यद्वा **प्रथमे** तत्तद्वाच्यत्वात् तत्तद्व्यङ्ग्यार्थस्य एकरूपेण **प्रतीतेः** सार्वत्रिकत्वात् संबन्धो नियतः [?] । 'कस्स ण व होइ' इत्यादौ व्यङ्ग्यार्थस्य संभवे त्वसत्यतयावगतिः अन्येषां तु लिख्याहेनैवेत्यनियतः [?]। एवमेव हि संबन्धस्यानियतत्वं सर्वथा संबन्धनियमत्वाभि तोरे व्यञ्जने अतिप्रसङ्गः स्यात् [?] ।

विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ।।

अत्र वाच्येन प्रथमव्यङ्ग्यस्य संबन्धः । अयमर्थः । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिवाक्येन ब्रह्मणो निर्धर्मकत्वात् सत्यादिभेदेन खण्डशो धर्मप्रतिपत्तिविरहात् अविभक्त एवेत्यर्थः प्रकाश्यते । तन्वीत्या वाक्यान्तरेणापत्तिः [?] । येऽप्याहुः, वेदान्तिन इत्यर्थः । आरिसापादयाता[?]तैर्व्यवहारदशायां पदपदार्थकल्पना कर्तव्यैव । अन्यथा पदपदार्थव्याकोपे व्युत्पन्नाव्युत्पन्नयोर्विशेषः [न] स्यात् । उक्तोदाहरणं निःशेषच्युतेति । व्यङ्ग्य एव भट्टपक्षोक्तयुक्तचेति विशेषः । तेषां हि व्यवहारे भट्टनयः । किञ्चैषां मते सदानन्दस्वरूपब्रह्मणः अभिधाया विषयः शक्यतागोचरत्वात् । नापि लक्षणायाः सामग्रीविरहात् । नहि एतस्य तात्पर्यस्य अपदार्थस्य, सर्गमात्रनैयत्यात् । नाप्यनुमानस्य, व्याप्तिग्रहाभावात् । श्रुतेः प्रामाण्यात् इत्यन्यवृत्त्यादिभाषाव्यपदेश्यं तत्प्रकाशकं यद् व्यापारान्तरमङ्गीकृतं वेदान्तिभिस्तदेव व्यञ्जनादिव्यपदेश्यमस्माकं काव्योपनिषदानामिति [?] निर्विवादम् ।

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवञ्च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति । तथाहि–

"भम धम्मिअ वोसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणइकच्छकुडंगवासिणा दरिअसीहेण ।।१३८।।

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । यत् यत् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकं गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण, अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः अपि तु वचनात् न च वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धादित्यसिद्धश्च तत्कथमेवंविधाद्धेतोः साध्यसिद्धिः ।

तथा 'निःशेषच्युते'त्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति । अतश्चात्रैव स्नानकार्यत्वेनोक्तानीति नोपभोग एव प्रतिबद्धानीत्यनैकान्तिकानि ।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् । न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते इति व्यक्तिवादिनः पुनस्तत् अदूषणम् ।

इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ।

**बालचित्तानुरञ्जनी**—व्यञ्जकत्वं शब्दानां गमकत्वम् वाक्यार्थप्रतीतिपूर्विका व्यङ्ग्यार्थप्रतीतिः, ग्योऽर्थो लिङ्गरूपः, व्यङ्ग्योऽर्थो लिङ्गिरूप इति व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एवेति व्यक्तिविवेककारमतमवलम्ब्य पूर्वपक्षमाह **वाच्यादिति** । वाच्यादर्थादसम्बद्धं वस्तु न प्रतीयते । असम्बद्धमपि यदि प्रतीयते तदा यतः कुतश्चिच्छब्दाद्यस्य कस्यचिदर्थस्य प्रतीतिः स्यादित्यतिप्रसङ्गमाह **यतः कुतश्चिदिति** । वाच्यसम्बद्धस्यैव प्रतीतिरस्तु प्रकृते किमागतं तत्राह **एवञ्चेति** । प्रतिबन्धो व्याप्तिः । अप्रतिबन्धस्तदभावः । व्याप्तत्वेनेत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षाद्व्यावृत्तिः, धर्मिनिष्ठत्वेनेत्यनेन पक्षधर्मत्वमुक्तम् । अथवा व्याप्तत्वेनेत्यनेनैव पक्षधर्मत्वं सपक्षे सत्त्वञ्च दर्शितम् । तद्रूपः अनुमानरूप एवायं व्यङ्ग्यव्यञ्जकभावः पर्यवस्यतीति भावः । तथा चोक्तम्

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम् ।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ॥' इति ।

तदेतदनुमानं ध्वनिकारोक्ते ध्वनेरुदाहरणे योजयति **तथा हीति** । धम्मिअ धार्मिक । हे धार्मिक वीसद्धो विस्रब्धं यथा तथा भम भ्रम चरेत्यर्थः । कुत इत्याकाङ्क्षायामाह **अत्रेति** । यच्छ्वा [ यः श्वा ]

दुःशीलो निवसति सः श्वा मारित इति श्वनिवृत्त्या अत्र गृहे भ्रमेति धार्मिकभ्रमणं विहितं तत् **वाच्यं**, गोदावरीतीरे मा भ्रमेति प्रतीयमानमनुमानगम्यं, गोदावरीतीरं भीरुभ्रमणयोग्यं न भवति भयानकाक्रान्तत्वात् सम्प्रतिपन्नवदित्यनुमानस्य व्यतिरेकव्याप्तौ भीरुभ्रमणं गोदावरीतीरे श्वभ्रमणमनुमापयतीत्यर्थः। तामेव व्यतिरेकव्याप्तिमाह **यद्यदिति**।

एवं व्यतिरेकव्याप्तिमभिधायान्वयव्याप्तिं दर्शयति **गोदावरीति**। व्यतिरेकव्याप्तौ यद्व्यापकं भयकारणनिवृत्तिरूपं तद्विरुद्धं भयकारणाक्रान्तत्वं, तस्योपलब्धिः। यद्यद्भयकारणाक्रान्तं तत्तद्भीरुभ्रमणयोग्यं न भवति। यथा सम्प्रतिपन्नमित्यन्वयव्याप्तिः। अतोऽन्वयव्यतिरेक्यनुमानेन गोदावरीतीरे मा भ्रमेत्यस्यार्थस्य सिद्धत्वान्न व्यङ्ग्यं पृथक्कल्पनीयमित्यर्थः। सिद्धान्तं प्रतिजानीते **अत्रेति**। गोदावरीतीरं भीरुभ्रमणयोग्यं न भवति भयानकाक्रान्तत्वादित्ययं हेतुः पक्षत्रयवृत्तित्वादनैकान्तिकः। न केवलमनैकान्तिकः विरुद्धोऽपीत्याह **शुन इति**। यथा श्वभीतभ्रमणयोग्यं न भवति सिंहाक्रान्तत्वादिति प्रयोगस्तथा तावत्पक्षे वर्तते श्वभीतपुरुषभ्रमणविशिष्टसङ्ग्रामादौ सपक्षे [वर्तते] न च वर्तते विपक्षे पर्वतादौ। श्वभीतोऽपि वीरत्वात्सिंहाद्बिभ्यद् भ्रमतीति पक्षविपक्षयोरेव वर्तमानो हेतुः विरुद्ध इत्यर्थः। किंचासिद्धोऽपीत्याह **गोदावरीति**। सिंहाक्रान्तत्वादिति हेतुरसिद्धः, प्रत्यक्षानुमानाभ्यामनिश्चितत्वात्। न च वचनेन सिद्धिरिति वाच्यम्। वचनस्य कुलटोक्तत्वेनार्थव्यभिचारादिति भावः। उक्तमर्थमुपसंहरति **तदिति**। तत्तस्मात्कारणात् एवंविधात् अनैकान्तिकादिदोषसहितात् कथं साध्यसिद्धिः, न कथञ्चिदपीत्यर्थः।

इदानीं व्यङ्ग्यानामनुमेयत्वं नास्तीति स्थलान्तरेण दर्शयन्नाह **तथेति**। कारणान्तरतः स्नानादिरूपकारणान्तरात्। अस्त्वेवं ततः किं तत्राह **अतश्चेति**। स्नानं कारणम्, तत्कार्यत्वेनोक्तानि चन्दनच्यवनादीनीति उपभोगे प्रतिबद्धानि विनाभूतानि न भवन्तीत्यनैकान्तिकानीत्यर्थः। एवंविधस्थले अनुमा न प्रवर्तत इति वक्तुं व्यञ्जनवादिना उक्तं गमकत्वमाह **व्यक्तीति**। व्यक्तिवादिना व्यञ्जनव्यापारवादिना एषां चन्दनच्यवनादीनां व्यञ्जकत्वं गमकत्वमित्यर्थः। अस्त्वेवं कथमनुमानं नेत्यत आह **न चात्रेति**, प्रत्यक्षादिप्रमाणमनुमानाङ्गं धूमादिवत्। न चात्राधमत्वं प्रमाणसिद्धम् अतो नानुमानमित्यर्थः। ननु प्रमाणाप्रतिपन्नेन वस्तुना व्यञ्जनसिद्धिरपि कथं तत्राह **एवंविधादिति**। एवंविधान्निश्चितादनिश्चिताद्वा अर्थात् एवंविधोऽर्थः निश्चितः अनिश्चितो वार्थः उत्पत्त्यनपेक्षत्वेऽपि युक्तिशून्यत्वेऽपि व्यङ्ग्यस्य प्रतीतिमात्रपर्यवसायित्वात् सत्यासत्यनिरूपणं विनैव प्रकाशते, नानुमानमेवंविधम्, अतः शब्दव्यञ्जनव्यापारः पृथगङ्गीकर्तव्य इति भावः। तत्र प्रमाणाप्रतिपन्नत्वम्।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां पञ्चमोल्लासः।

**सारबोधिनी**—अथानुमानाद् व्यङ्ग्यप्रतीतिरिति महिमभट्टमतमाह **वाच्यादिति**। यद्यप्यनुमितौ नियतसम्बन्धस्यापेक्षणीयत्वम् व्यञ्जनायां तदनैयत्यम् संभावनमात्रादेव तदुपपत्तेः तथापि मया तत्रापि व्याप्तिः साधनीया इति पूर्वपक्षिणोऽभिप्रायः। तावच्छब्देन व्यक्तिवादिनोऽपि नात्र विप्रतिपत्तिरिति दर्शितम्। प्रतिबन्धः प्रतिनियतो बन्धः सम्बन्धः नियतसम्बन्ध इत्यर्थः। अवश्यं नियमेन सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेत्यर्थः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षव्यावृत्तत्वम्। धर्मिनिष्ठत्वं, धर्मी पक्षस्तन्निष्ठत्वं तेन पक्षवृत्तित्वम्। द्वयोः समासानन्तरं त्वप्रत्यय इति रूपत्रयम्। अबाधितत्वस्य सर्वसाधा

**रण्यान्नाभिधानम्** । असत्प्रतिपक्षितत्वस्य स्वार्थानुमानेऽनुपयोगान्नाभिधानम् । **लिङ्गाद्धेतोः** । लिङ्गिनि **साध्ये** साध्यविषयकं **ज्ञानमित्यर्थः** । अनुमानमनुमितिस्तद्रूपोऽनुमित्यात्मकः । इदं व्यङ्ग्यव्यञ्जकभाव इत्यस्य विशेषणम् । **व्यङ्ग्यव्यञ्जकभावो** व्यञ्जनयाऽर्थविषयकशाब्दप्रतीतिरित्यर्थः । तत्र व्यक्तिवादि-मूर्द्धाभिषिक्तध्वन्युदाहरणे प्रथममनुमानं योजयति **तथाहीत्यादि** ।

भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन ।
गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥

पुष्पाहरणाय निकुञ्जे यान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं प्रति भीषयितुं कस्याश्चिदिय-मुक्तिः । **विहितं भ्रमेति** विधिविषयीभूतम् । अभ्रमणमनुमापयतीति व्याप्तिग्रहोपयिकत्वेनेति शेषः । तदेव दर्शयति **यद्यदिति** । **व्यापकविरुद्धेति** । भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिस्तद्विरुद्धं भयकारणं तदुपलब्धिरित्यर्थः । तथा च व्यतिरेकव्याप्तिर्दर्शिता । व्यतिरेकिणि तस्या एव तन्त्रत्वात् । ततश्च गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात् यन्नैवं तन्नैवं यथा गृहमिति भ्रमणाभावानुमिति-रिति भावः ।

दूषयति **अत्रोच्यत इति** । तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति **भीरुरपीत्यादि** । अन्येन धनलाभादिना । अनैकान्तिको व्यभिचारी । **बिभ्यदिति** । स्पर्शेन पापजननात् पापजनके तद्विधे पौरुषानास्पदत्वात् । सिंहादभीतौ हेतुमाह **वीरत्वेनेति** । धार्मिकस्य भयानास्पदत्वात् । अतः सिंहवत्त्वभीरु-भ्रमणाभावयोर्न सामानाधिकरण्यमित्याह **विरुद्धोऽपीति** । भीरुभ्रमणेन साध्याभावेन व्याप्तत्वात् ।

केचित्तु व्यभिचारितो व्यतिरेकी विरुद्ध इति मतेनेदमिति वदन्ति । पक्षधर्मताविघटनमाह **गोदावरीतीरमिति** । **न चेति** । प्रामाण्यं नियतमिति शेषः । अप्रतिबन्धादप्रतीतेः । शब्देषु प्रामाण्यसन्देहा-दर्थेष्वपि सन्देह इत्यसिद्धिः । सन्दिग्धासिद्धिरित्यर्थः । नन्वस्त्वनुमानाभास इति चेन्न । व्यभिचारज्ञाने तदनुदयात् । न च व्यभिचारास्फूर्तौ तथा । सर्वविज्ञानवताम् सामाजिकानां तदस्फूर्त्यभावादित्यत आह **तत्कथमित्यादि** । स्वप्रदर्शितध्वनिलक्ष्यमपि समर्थयति **तथेत्यादि** । प्रतिबद्धानि व्याप्तानि । ननु व्यक्ति-वादिनेवास्माभिरप्यधमपदसाम्यमङ्गीकरिष्यत इत्यत आह । **न चाधमत्वमिति** । तथा च पूर्ववत्सन्दिग्धा-सिद्धिरिति भावः । नन्वस्मिन् व्यक्तिपक्षेऽपि दोष इत्यत आह **एवमिति** । अत्र व्याप्तेरनङ्गत्वेन संभावना-मात्रादेव तत्सिद्धिरिति भावः ।

इति सारबोधिन्यां पञ्चम उल्लासः

**काव्यप्रकाशदर्पणः**—अधुना ध्वनेरनुमानान्तर्भावं वाच्यादित्यादिना व्यापकविरुद्धोपलब्धि-रित्यन्तेन ग्रन्थेन शङ्कते **भ्रमेति** । व्यञ्जनावादिभिर्भवद्भिरपि एतदभ्युपगन्तव्यमिति भावः । तदु-भयव्यवच्छेदरूपाव्याप्तिसंबन्धेन [?] नियतः प्रकृतो यो धर्मी आश्रयस्तन्निष्ठत्वेन त्रिरूपात् पक्षसत्त्व-सपक्षसत्त्वविपक्षव्यावृत्तिनामकरूपत्रयवतो लिङ्गाद् व्याप्यात् लिङ्गव्यापकेना [कानु ?] नुमानमित्युच्यते । तटस्थरूपः पर्यवस्यति । वाच्याद् व्यङ्ग्याच्चावगम इत्यर्थः । हेतुमाह **तथाहीति** ।

भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन ।
गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥

इह हि वञ्जुललतागृहे सङ्के[ति ?]तायाः केनापि निमित्तेन धार्मिकेण तद्देशभ्रमणं स्वमनोविप्रकृतं मन्यमानाया **वचनम्** । **अत्र यौ** वाच्यव्यङ्ग्यार्थौ तयोः धूमाग्न्योरिव साध्यसाधनभावेनावस्थितिः । तदिह गोदावरीतीरे वने **कुञ्जे** आश्रयभूते भीरुभ्रमणरूपः साध्यः । तत्र वाच्यरूपो दृप्तसिंहसद्भावः साधनम् । इह च लिङ्गस्य पक्षसत्त्वं निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसेये इत्यतो नानुमेयभावो व्यङ्ग्य इति भावः । एतदेवाह **अत्रे**ति। यः खलु **भीरुः** शुनोऽपि सद्भावस्थाने भ्रमितुमशक्तः स कथं सिंहोपलब्धिस्थाने भ्रमिष्यतीत्यर्थः । **यद्भीरुभ्रमणमिति** । अयमर्थः । धार्मिकस्य भ्रमणं भयकारणनिवृत्त्युपलब्धिपूर्वकम भीरुभ्रमणत्वात् सम्प्रतिपन्नवत् इत्यन्वय[इत्यनु ?]माने यद् व्यापकं भयकारणं वृत्त्युपलब्धिपूर्वकम् [?]तस्य च विरुद्धं भयकारणनिवृत्त्युपलब्धिपूर्वकम् । तस्योपलब्धिः प्रतीतिः । सा च प्रकृते सिंहोपलब्धिः । तथा चात्र धार्मिकस्याभ्रमणमनुमितमिति भावः । एवं ध्वनिकारोदाहृतैतद्व्यङ्ग्योदाहरणरीत्या सर्वत्रैव विवादाध्यासितस्य व्यङ्ग्यस्यानुमेयत्वमेवेति महिमभट्टसिद्धान्तमाह **अत्रोच्यत इति** । अन्येन धनादिप्रयोगादिना सत्यपीति व्याप्त्यभावदर्शनम् । अनैकान्तिकः साध्यव्यभिचारी । नास्य पुनर्हेतुत्वमिति भावः । **शुन इत्यादि** । यः खलु शुनःस्पर्शशङ्कया शुनो बिभेति सिंहसद्भावस्थानं प्रत्युत मृगयादिकुतूहलतया गच्छतीति दर्शनाद्विरुद्धः भ्रमणरूपविरुद्धसाध्यविरुद्धसाधनात् । दूषणान्तरमाह **वचनस्येत्यादि** । पुंश्चल्यादीनामिति शेषः । अप्रतिबन्धात् प्रतिनियतो निश्चितः । असिद्धः संदिग्धासिद्धः स्वरूपासिद्धो वा । उपसंहरति **तथेति** । इदमेव युक्तिजालमुदाहरणान्तरे दर्शनं दृढयति । गमकतया कामुकसमीपगमनबोधकतया । **व्यक्तिवादिनेति** । व्यञ्जनव्यापारस्थापनार्थमुद्यतेत्यर्थः । न प्रमाणप्रतिपन्नं संदिग्धासिद्धादसिद्धत्वात् । एवं व्यञ्जनव्यापारसामग्र्या नानुमानसामग्रीत्वमिति । अर्थान्तराभिव्यक्तौ वः सामग्रीष्ठा तवघनं सैवार्थमिति पक्षे नो गमकत्वेन सम्मतेति [?] महिमभट्टोक्तमनुमानत्वं निरस्तमिति भावः । नन्वेवमपि यत्प्रतिबन्धमूलभाव एव व्यङ्ग्यव्यञ्जकभावः स्यादिति चेत् एवमेवेत्याह **एवंविधादिति** । उपपत्त्यपेक्षत्वेऽपि व्याप्त्यादिप्रतिबन्धनाभावेऽपीति । न चैवमतिप्रसङ्गः । प्रतीतेरन्यथोपपत्तावेकव्यक्तिकल्पना स्यादिति काव्यपुरुषावतारस्य निखिलशास्त्रवेदिनः श्रीमदानन्दवर्धनाचार्यस्य पृथग् व्यञ्जनव्यापारस्थापनमिति सर्वमवदातम् ।

इति महामात्य[पात्र ?]श्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे पञ्चमोल्लासः ।

FOOT NOTES

१. अनर्थनिवारकत्वेन A. B. २. चित्यत्प्रसङ्गाभावात् A. ३ निर्वहणात् A. ४. विषयभूतार्थस्य A. ५ पदार्थानियमिति A. ६. सामान्यविशेषरूप. A. ७ संकेतविषयत्वात् A. ८ निमित्तम् B. ९. ज्ञातकारणत्वनियमात् A. B. १० प्रचरणसञ्चारः A. ११. वहनस्य सिद्धेः A. ।

———

## षष्ठ उल्लासः

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।**
**गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥४८॥**

न तु शब्दचित्रेऽर्थस्याचित्रत्वम्, अर्थचित्रे वा शब्दस्य ।

**बालचित्तानुरञ्जनी**—अतिशयिनि व्यङ्ग्ये उत्तमं काव्यं, अनतिशयिनि व्यङ्ग्ये मध्यमं काव्यमिति काव्यद्वयं प्रदर्श्य क्रमप्राप्तं तृतीयमधमकाव्यं प्रकटिष्यन् अल्पप्रमेयतया कारिकां पठति **शब्देति** । शब्दचित्रमर्थचित्रं च यत्पूर्वं काव्यद्वयमुदाहृतं तत्र काव्ये चित्रार्थशब्दयोः गुणप्राधान्यतः स्थितिः अवस्थानम् । शब्दचित्रेऽर्थस्य गुणभावः शब्दस्य प्राधान्यम् तत्र कवेरभिनिवेशात् । अर्थचित्रे शब्दस्य गुणभावः अर्थस्य प्राधान्यम् तत्र कवेरभिनिवेशादित्यर्थः ।

**सारबोधिनी**—क्रमप्राप्तं चित्रकाव्यं लक्षयति **शब्दार्थचित्रमिति** । तत्र यद्यपि शब्दार्थचित्ररूपभेदद्वयं प्रथम उल्लास एव दर्शितम्, तद्भेदाश्चालङ्कारप्रदर्शनेनैव दर्शिता भविष्यन्तीति न दर्शनीयं किञ्चिदस्ति, तथापि शब्दानां चित्रतायां प्रधानीभूताया अर्थचित्रताया गुणत्वम् एवमर्थानां चित्रतायां शब्दचित्रताया गुणत्वम्, न तूभयोरुभयत्राभाव इति गुणप्राधान्येन स्थितिवशादनयोर्विभाग इति दर्शयितुं शब्दार्थालङ्कारात्प्यस्माकमिष्टौ न त्वन्यत इति दर्शयितुमयमारम्भः । उदाहृतं स्वच्छन्देत्यादिना, विनिर्गतमित्यादिना च ।

ननु प्रथमे व्यतिरेकालङ्कारेणार्थस्य चित्रत्वम्, द्वितीये च 'मानदमात्ममन्दिरादि'ति मकारस्य सकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्य चित्रत्वमस्ति तत्कथमयं विभाग इत्यत आह **गुणप्राधान्यत इति** । यच्चारुत्वस्योत्कटत्वं तस्य प्राधान्यमिति भावः ।

**काव्यप्रकाशदर्पणः**—इह यद्यपि अलङ्कार्यतया शब्दार्थचित्रयोरलङ्कारवत्त्वाद् विशेषलक्षणं पश्चादुल्लासद्वयेन निरूपयितुमात्मनोऽभिमत इति ध्वनिगुणीभूतव्यङ्ग्यरूपकाव्यविशेषप्रतिपादनानन्तरं तदुल्लासितम् तथापि प्राचीनानुरोधेन काव्यविशेषत्वेन लक्षितयोस्तयोः किञ्चिद् विशेषमाश्रित्य उल्लासान्तरमारभते **शब्देति । चित्रं** शब्दार्थयोः प्रत्येकं सम्बन्धः । उदाहृतं शब्दचित्रं वाच्यचित्रमित्यादिना । प्रतिपादितं **गुणेति** । शब्दचित्रे प्रधाने अर्थचित्रस्य गुणत्वम् अर्थचित्रे प्रधाने शब्दचित्रस्य गुणत्वमिति द्वयोरेकत्र सद्भावेऽपि 'प्रधानेन व्यपदेशा भवन्ती'त्युक्तनयेन यस्य प्राधान्य तेन व्यपदेश इत्यर्थः । अविचित्रत्वमित्यत्र सर्वथेति शेषः [?] ।

तथा चोक्तम्

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥

रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥" इति।

**बालचित्तानुरञ्जनी**—शब्दालङ्काराणामर्थालङ्काराणां च चमत्कारप्रयोजकत्वे प्रामाणिकसंमतिमाह **तथा चोक्तमित्यादिना**। **उक्तमिति** भामहेनेति शेषः। **रूपकादिरिति**। तस्य काव्य रूपकादिः। रूपकोपमादिरेवालङ्कारः। अन्यैः कैश्चिदालङ्कारिकैः। बाह्यम् आस्वादोत्पत्तिपरवर्तिनम्। सौशब्द्यम् शब्दनिर्माणसौष्ठवम्।

**सारबोधिनी**—उपमाद्यलङ्काराणां चमत्कारप्रयोजकत्वे प्रामाणिकसंमतिमाह **तथा चोक्तमित्यादिना**।

ननु विप्रतिपत्त्यभावात् कथं प्रामाणिकादरणमित्याशङ्क्य वादिविप्रतिपत्तिमुद्भावयति **रूपकादीति**। विभाति विभावतां प्राप्नोति कुण्डलादिमत्त्वेनैव विभावनीयत्वात्। विभावादित्वेन प्राप्तानामर्थानामेव रसत्वमिति तेषां परिष्करणमुचितम्। अर्थ प्रत्याय्योपक्षीणानां शब्दानामलङ्कारस्यानादरणीयत्वात्। बाह्यम् आवर्जितसन्निधिम्। सुपां तिङां तदन्तानाम् विशिष्टोत्पत्तिरनुप्रासादिना निर्माणं, वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति। ईदृशी यथा शब्दव्युत्पत्तिः। सौशब्द्यं शब्दनिर्माणसौष्ठवम्।

अयमर्थः—शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपचायनम्। ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति तेन शब्दालङ्काराणामावश्यकत्वम् पश्चादर्थालङ्काराणामकिञ्चित्करता। तैर्विनापि शब्दालङ्कारैरभिव्यक्तेरिति तदाह **बाह्यमिति**। आस्वादोत्पत्तिदशायां तदनुपलम्भात्। **शब्देत्यादि**। अभिधेयः प्रतिपाद्यः। तेन लक्ष्यव्यङ्ग्ययोरपि ग्रहणम्। नः अस्माकम् द्वयोरपि आस्वादोपकारकत्वस्य सहृदयहृदयैकवेद्यत्वात् कविसंरंभगोचरत्वाच्च।

**काव्यप्रकाशदर्पणः**—तत्रैव तथा चोक्तमित्यादिना इष्टं द्वयं तु न इत्यन्तेन प्रामाणिकसङ्गतिं दर्शयति। उक्तं प्राचीनैः, रूपकादिरर्थाश्रयोऽलङ्कारो विभावादिरूपार्थोपस्कारकतया मुख्यस्य रसादेरेवोत्कर्षकत्वात् तस्य काव्यस्य बहुधा बहुप्रकारः। शब्दालङ्काराणां तु विभावाद्युपनयमात्रप्रयोजकशब्दधर्मतया बहिरङ्गत्वान्न मुख्यालङ्कारत्वमिति केचित्। अलङ्कारघटनया उपयोगस्य व्यतिरेकेण दृष्टान्तमाह **न कान्तमिति**। काव्यस्य शब्दविशेषरूपत्वादर्थस्य तद्व्यवच्छेदकमात्रेणामुख्यत्वाद् अर्थाश्रितानामलङ्काराणां बहिरङ्गतेत्यर्थः। **सुपां तिङामिति**। सुबन्तानां तिङन्तानां पदानां व्युत्पत्तिं विशेषेण माधुर्याद्यनुगुणवर्णविशेषार्थकत्वेन उत्पत्तिं वाचां वाक्यानाम् तदेतद् सुप्तिङ् व्युत्पत्तियोगित्वम्, सौशब्द्यं सुशब्दताम्, अर्थव्युत्पत्तिवः मानतादिना [?] योजनं नेदृशी शब्दकात्यभिप्राया [?]। अतश्च शब्दनेनेषिधिभूतेन [?] काव्यत्वमिति शब्दस्यैव मुख्यत्वमिति शब्दालङ्काराणामेव प्राधान्यमित्यपरे। **शब्देति**। अभिधेयोऽर्थः। द्वयं शब्दार्थालङ्कारयुगलम्। नः अस्माकं तु पुनरिष्टमिति मतम् द्वयोरप्यर्थोपस्कारत्वात् रसादिपरिपोषकत्वेन परस्परतो विशेष्यमानत्वादिति भावः।

शब्दचित्रं यथा

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः ।
उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥१३ ॥

**बालचित्तानुरञ्जनी**-शब्दचित्रमुदाहरति **प्रथमेति** । मृगलाञ्छनश्चन्द्रः । क्षणदामुखे रजनीप्रसरारम्भे । अत्र मकारयोस्तकाराणां ककारयोर्धकारयोः क्षकारयोः सकारच्छकारलकाराणामनुप्रासः शब्दालङ्कारः । अत्र रसादेः अविवक्षैव । तथा चोक्तम्—

"रसभावादिविहितविवक्षाविरहे सति ।
अलङ्कारविशेषो यः स चित्रविषयो मतः ॥
वस्त्वादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः ॥" इति

**सारबोधिनी--प्रथममिति** । मृगलाञ्छनः क्षणदामुखे उदयतीति सम्बन्धः । क्रमेण तत्तद्वर्णता स्वभावोक्तिः । अत्र तकाराणां ककारयोर्धकारयोःक्षकारयोश्छकारयोः सकारयोश्च साम्यमित्यनुप्रासप्रकर्षाच्छब्दचित्रता । अर्थालङ्कारस्योपमाया नोद्भटतेति भावः ।

अर्थचित्रं यथा

ते दृष्टिमात्रपतिता अपि कस्य नात्र
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च ।
नीचाः सदैव सविलासमलीकलग्ना
ये कालतां कुटिलतामिव न त्यजन्ति ॥१४०॥

यद्यपि सर्वत्र काव्येऽन्ततः, विभावादिरूपतयैव पर्यवसानं तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम् । अत्र च शब्दार्थालङ्कारभेदाद् बहवो भेदाः, ते चालङ्कारनिर्णये निर्णेष्यन्ते ।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम षष्ठ उल्लासः ॥६॥

**बालचित्तानुरञ्जनी**--ननूत्तममध्यमयोः काव्ययोर्बहवो भेदाः प्रदर्शिता अधमस्य तु किमिति न प्रदर्श्यन्त इत्याशङ्क्याह **अत्र चेति** । अत्र शब्दार्थचित्रकाव्ययोः दोषकथनानन्तरं गुणकथनानन्तरमलङ्कारकथनमिति नियमात् । अलङ्कारनिर्णये नवमे दशमे चोल्लासे एतद्भेदा वक्ष्यन्त इति भावः । न च शब्दचित्रं

वाच्यचित्रमिति प्रागेव निरूपितं [पुनः] किमत्र निरूपितमिति वाच्यम् । उक्तस्यैव गुणप्रधानभावस्यात्र निरूपितत्वात् तस्य च केवलार्थालङ्कारत्वम् उत केवलशब्दालङ्कारत्वम् उत निराकरणद्वारेणार्थालङ्कार-शब्दालङ्कारवैशिष्ट्यस्य संमिलितत्वेन प्रदर्शनार्थत्वादित्युल्लाससारं सप्रयोजनं द्रष्टव्यम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां षष्ठोल्लासः समाप्तः ॥

**सारबोधिनी**--अर्थचित्रमाह **ते दृष्टीत्यादि** । **पक्ष्मलेति** । भूम्नि लच्प्रत्ययः । क्षोभो धैर्य-विघातः, अस्वच्छता च । नीचाः ह्रस्वाः पापाशयाश्च । अलीकं मिथ्यावचनम् । लग्नाः संबद्धाः । कालता कृष्णता परपीडाकरत्वेन यमता च । कुटिलता वक्रता अनभिव्यक्तपरापचिकीर्षा च । अत्रानुप्रासस्संभवेऽपि श्लेषसंवलितोऽर्थालङ्कारः समुच्चयः प्रधानमित्यर्थचित्रता । आसमाप्ति कवेस्तत्रैव संरम्भात् । अत्र पूर्वापर-श्लोकद्वये उद्दीपनालम्बनविभावयो रसपर्यवसायित्वमिति तदुपकारकत्वेनालङ्कारता तयोः । किन्तु स्ववैचित्र्येण प्रथमतः स्वस्मिन् चित्तापकर्षणमिति चित्रतेति प्राक् प्रतिपादितमेव । तदाह **यद्यपीति** । **विभावादीत्यादि** । तेषामेव रसत्वेन पर्यवसानमित्यर्थः । स्फुटस्यान्यवैचित्र्यतिरोधानेन झटिति प्रतीय-मानस्येत्यर्थः ।

इति सारबोधिन्यां षष्ठ उल्लासः ।

**काव्यप्रकाशदर्पणः—प्रथममित्यादि** । यद्यपि क्रमप्रधानात् स्वभावोक्तरीत्याऽलङ्कारो दृष्टो-पमाश्च सन्ति तथाप्यन्वान [?] **सन्धिमन्तरेणाप्यनुप्रासमनुप्रासमहिम्ना** कश्चित् [?] प्रकर्षो हृदि निधीयत इत्यनुप्रासस्य प्राधान्याच्छब्दचित्रम् । क्षोभाय धैर्यविघाताय स्वास्थ्यविघाताय वा । नीचा नम्राः हीन-सत्त्वाश्च । अलीकं सभालं अप्रियञ्च । कालतां दारुणताम् कुटिलतां कुञ्चितां अनृजुताञ्च । अत्रानु-प्राससद्भावेऽपि अर्थालङ्कारस्यैव उद्भटप्रतीतिरिष्यत इति तत्प्रधानता, न तु स्वादरूपमेव वाक्यम् आस्वादश्च व्यङ्ग्य एव [?] अनयोश्च द्वयमित्यादि पक्षयोर्व्यङ्ग्यत्वात् । आस्वादरहिततया कथं काव्य-मित्याह **यद्यपीति** । अत्र महावाक्यार्थव्युत्पत्तेर्विभावादिरूपतया एवंविधस्य समग्रैकवाक्यस्य वर्णितस्य चन्द्रादेरित्यर्थः । रसपर्यवसानं प्रवणत्वं स्फुटस्य रसस्यानुपलम्भात् महाकाव्यपर्यालोचनाहेतुकं व्यङ्ग्य-रहितमेतत् । प्रथममित्यादि यद् द्वयमुक्तं प्राचीनानुरोधादिति भावः । तथाहि, यद्येवमादौ काव्येषूक्त-रीत्या रसपर्यवसानमस्ति तदा आस्वादस्य प्रकर्षाप्रकर्षाभावे ध्वनिगुणीभूतयोरेव अनुप्रासवर्णास्वादा-भावे तु काव्याभासतैवेत्युक्तमेव शब्दचित्रमित्यादि कारिकाव्याख्याने । विशेषमस्मत्साहित्यदर्पणेऽलङ्कार-निर्णये अन्तिमोल्लासद्वयव्यवस्थापिते निश्चेष्यन्ते ।

इति श्रीमहामात्य[पात्र ?]श्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे षष्ठ उल्लासः ।

———

# सप्तम उल्लासः

काव्यस्वरूपं निरूप्य दोषाणां सामान्यलक्षणमाह

**मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः ।**

**उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥४६॥**

हतिरपकर्षः । शब्दाद्या इत्याद्यग्रहणाद्वर्णरचने ।

**बालचित्तानुरञ्जनी**—अदोषौ शब्दार्थौ काव्यमित्युक्त्वा अवान्तरभेदसहितं काव्यस्वरूपं निरूप्य दोषस्वरूपपरिगणनाभावे तद्राहित्यस्य ज्ञातुमशक्यत्वात् दोषनिरूपणार्थमुत्तरोल्लास इति सङ्गतिं दर्शयन् उत्तरवाक्यमवतारयति **काव्येति** । **मुख्यश्चासावर्थश्च** तस्य हतिरपकर्षो दोषः । साक्षात्सङ्केतितस्यार्थस्य लक्ष्याद्यपेक्षया मुखमिव प्राग्भवतीति व्युत्पत्त्या मुख्यत्वम् तस्येह ग्रहणं नेत्याह रस इति । मुख्यतयोक्तरूपो रस एव काव्यवाक्यानामर्थः इति स एव मुख्य इत्यर्थः । वस्त्वर्थः तस्य वाच्यार्थे दोषो न स्यादित्यत आह **तदाश्रयादिति** । वाच्यो ह्यर्थः तदाश्रयाद्रसाधारत्वान्मुख्यः । उपचारादित्यर्थः । तर्हि शब्दादिविषयेषु कष्टतादिषु अव्याप्तिरित्यत आह **शब्दाद्या** इति । **उभयो** रसवाच्यार्थयोरुपयोगिनः व्यञ्जकवाचकत्वादिना उपकारकाः । तेन कारणेन तेषु शब्दादिषु स दोषः, रसस्यैव दोषः उपचारात् वाच्यार्थस्य शब्दादीनाञ्चेति भावः । पद्यगतो हतिशब्दो लाक्षणिको न मुख्य इत्याह **हतिरपकर्ष इति** । विशेषलक्षणं दोषाणामिति शेषः । शब्दस्य पदवाक्यरूपत्वात् वाक्यस्य पदसमूहत्वात्प्रथमतः पदस्य षोडश दोषा उक्ताः । तत्र श्रुतिकटुत्वादौ सर्वत्र दुष्टमिति सम्बन्धः । क्लिष्टाद्यास्त्रयः समासपदेष्वेव दुष्टाः स्युः नान्यत्र इत्यर्थः । न च पदस्य वर्णरचनात्वेन प्रथमतः वर्णदोषो वक्तव्य इति वाच्यम् । पददोषेष्वेव वर्णदोषाणां यथासम्भवमन्तर्भावादिति द्रष्टव्यम् ।

**सारबोधिनी**—**काव्यस्वरूपमिति** । काव्यस्वरूपं ध्वन्यादिकम् । तथा च धर्मिणि प्रदर्शित इत्यादि यदुक्तम्—अवसरो वृत्त इति ध्वनितम् । काव्यलक्षणे दोषाणां प्रागुपादानाद्दोषाणां गुणालङ्कारात्प्राङ्निरूपणम् । सामान्यतो ज्ञात एव विशेषाकाङ्क्षा भवतीत्यत आह **सामान्येति** । **मुख्यार्थेति** । हत्यपकर्षदोषशब्दाः करणव्युत्पन्ना भावव्युत्पन्ना वा । ते दुष्टलक्षणं दोषलक्षणञ्चेति बोध्यम् ।

**अत्र मिश्राः**, मुख्यायेदं मुख्यार्थमिति चतुर्थीसमासः । तच्च शब्दार्थयुगलम् तस्य हतिरन्यथात्वम् । यस्य येन रूपेण रसव्यञ्जकत्वं तस्य तद्रूपप्रच्यवः । फलं तु रसस्य सम्यगनवभासः । लोकेऽपि दृष्टो दीपादिव्यञ्जकवैगुण्येन घटादेः सम्यगनवभासः । अर्थशब्दयोर्मुख्यार्थत्वं दर्शयति **तदाश्रयादित्यादि** । इदन्त्वग्रे व्याख्यास्यते । न चात्र शब्दार्थयो रसव्यञ्जकतावच्छेदकरूपविरहो दोष इति पर्यवसितम्, तच्च न चारु, रूपान्तरविरहेण दोषाभावगुणालङ्काराणामेव रसव्यञ्जकतावच्छेदकतया दोषानुप्रवेशादात्माश्रयापत्तिरिति वाच्यम् । यतो दोषाभावस्य रसव्यञ्जकतावच्छेदकरूपस्य रसव्यञ्जकतावच्छेदकत्वरूपेण रूपान्तरेण प्रवेशोऽत्र कृतो न तु दोषाभाववत्त्वेनेति [न] क्वाप्यात्माश्रय इति । यद्वा श्रुतिकटुत्वादिनैव तत्तद्विशेषरूपेण प्रवेशः कर्तव्य इत्याहुः ।

अन्ये तु, मुख्यः इतरेच्छानधीनेच्छाविषयस्तच्च सुखं परमपुरुषार्थत्वात् । एवञ्च मुख्यत्वं सुखान्त-रेऽप्यतिप्रसक्तमिति तद्वारणायार्थपदम् । अर्थत्वन्तु शब्दजन्यसाक्षात्कारविषयत्वम् । काव्यादन्यतः शब्दान्न सुखस्य प्रत्यक्षता किन्तु शाब्दत्वमेव । शब्दे तज्जन्यसाक्षात्कारविषयतयातिव्याप्तिवारकं मुख्यपदमुक्तम् । मुख्यत्वस्य सुखादन्यत्वासम्भवात् । एतेनात्र समस्यमानपदार्थतावच्छेदकयोः परस्पर-व्यभिचाराभावान्न कर्मधारयोऽर्थपदवैयर्थ्यञ्चेति दूषणद्वयं निरस्तम् ।

हतिरपकर्षः । न प्रतिबन्धः, दुष्टेष्वपि रसानुभवात् । अपकर्षस्तु रसनिष्ठो धर्मविशेषस्तव्द्य-ञ्जकं दोषज्ञानम् । नन्वेवमभिधेयेऽर्थ मुख्यशब्दप्रयोगः शब्दार्थदोषविभागश्च न स्यात्, उक्तमुख्यत्वस्या-पकर्षकस्य च रसमात्रवृत्तित्वात् इत्यत आह **तदाश्रयादिति** । आश्रयणमाश्रयः उपायत्वेनापेक्षणम् । वाच्यो मुख्य इत्यन्वयः । एवञ्च वाच्ये विभावादौ भाक्तो मुख्यपदप्रयोगः । आस्वादोपायत्वञ्च दर्शितम् । रसो वाच्यश्च । उभयं शब्दाद्यास्तदुपयोगिनः विभावादिकं प्रत्याय्य रसप्रत्यायनात् । तेन रसोपायत्वेन तेष्वर्थ-शब्दादिषु स दोषः न केवलं रसे इत्यनयोरर्थः । गुणवद्दोषोऽपि साक्षात्सम्बन्धेन रसे व्यङ्ग्यव्यञ्जकभावेन त्वर्थशब्दादिष्विति व्याचक्षते ।

विशेषलक्षणमाह

**दुष्टं पदं श्रुतिकटु च्युतसंस्कृत्यप्रयुक्तमसमर्थम् ।**
**निहतार्थमनुचितार्थं निरर्थकमवाचकं त्रिधाऽश्लीलम् ॥५०॥**
**सन्दिग्धमप्रतीतं ग्राम्यं नेयार्थमथ भवेत् क्लिष्टम् ।**
**अविमृष्टविधेयांशं विरुद्धमतिकृत्समासगतमेव ॥५१॥**

**बालचित्तानुरञ्जनी**--तत्तत्संशयायाद्विविशेषलक्षणमूहनीयमित्यभिप्रायेणाह **श्रुतीति** । यश्च एवं विधकष्टव्यपदेशानन्तरं तदद्त्तिकृदित्यर्थः ।

**सारबोधिनी**--काव्यलक्षणे शब्दस्य प्राङ्निर्देशे तद्दोषे प्रथमं वक्तव्ये तत्रापि पदांशवाक्ययोः पदनिरूप्यत्वेन प्रथमं पददोषानाह **दुष्टं पदमिति** । श्रुतिकटु पदं दुष्टमिति सम्बन्धः । एवं सर्वत्र बोध्यम् । **परुषवर्णमिति** । तत्त्वञ्च मुख्यार्थापकर्षकत्वे सति ओजोव्यञ्जकवर्णत्वम् । वीरादिष्वदुष्टतया तदति-प्रसङ्गवारणाय सत्यन्तम् । वीरादिषु तु मुख्योत्कर्षकत्वाददोषत्वम् । न च प्रतिकूलवर्णनास्य सङ्करः । उपाधेयसङ्करेऽप्युपाध्यसङ्करात् । तथाहि अत्र प्रकृतरसव्यञ्जकवर्णाभावाद्रसोद्बोधरूपं कार्यं न जायते । प्रतिकूलवर्णे तु, प्रकृतरसप्रतिबन्धकैर्वर्णैः प्रतिबध्यत इत्यनयोरेकत्र व्यञ्जकाभावात् कारणाभाव-प्रयुक्तकार्याभाववत्त्वम् । अपरत्र प्रतिकूलवर्णसद्भावात् प्रतिबद्धकार्यकत्वमेव दूषकताबीजम् । इदं मधुररस एव दूषकम् । प्रतिकूलवर्णं तु सर्वत्रेति स्मर्तव्यम् । वर्णानां रसाद्बोधे प्रातिकूल्यं व्यञ्जकत्वञ्च वक्ष्यत इति दिक् ।

श्रुतिकटु परुषवर्णरूपं दुष्टम् । यथा

अनङ्गमङ्गलगृहापाङ्गभङ्गितरङ्गितैः ।
आलिङ्गितः स तन्वङ्ग्या कार्तार्थ्यं लभते कदा ॥१४१॥

अत्र कार्तार्थ्यमिति ।

**बालचित्तानुरञ्जनी**—तन्वङ्ग्या रमण्या कर्त्र्या अनङ्गस्य कामस्य मङ्गलगृहश्चासौ अपाङ्गश्च तस्य भङ्गिभिः तरङ्गितैः सञ्जाततरङ्गैरीक्षणैरित्यध्याहार्यं तत्करोतीति णिजन्तस्तन्निष्ठानां अपाङ्गभङ्गीनां तरङ्गीकरणैरिति वा। तरङ्गशब्दादाचारे क्विपि भावे निष्ठायां तरङ्गवदाचरणभूतैरुपलक्षितया तन्वङ्ग्या आलिङ्गितः सन् पुरुषः कार्तार्थ्यं कृतार्थत्वं कदा लभते प्राप्स्यति। अत्र कार्तार्थ्यमिति आदिवृद्धिप्रयुक्तं कष्टत्वमित्यर्थः। अत्राश्लीलप्रतीतिश्च।

**सारबोधिनी--अनङ्गेति**। तरंगितं उत्तरोत्तराविच्छेदः। तरङ्गितैरिति करणे तृतीया। **लभत इति**।

च्युतसंस्कृति व्याकरणलक्षणहीनम्। यथा—

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लभ्यते।
तत् पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना-
दीनं त्वामनुनाथते कुचयुगं पत्रावृतं मा कृथाः॥१४२॥

अत्रानुनाथते, इति। 'सर्पिषो नाथत' इत्यादाविवाशिष्येव नाथतेरात्मनेपदं विहितम्। "आशिषि नाथः" इति। अत्र तु याचनमर्थः। तस्मात् 'अनुनाथति स्तनयुगम्' इति पठनीयम्।

**बालचित्तानुरञ्जनी**—द्वितीयमुदाहरति **च्युतेति**। च्युता गलिता संस्कृतिः व्याकरणलक्षणा यस्मात्, अस्यैव व्याख्यानं **व्याकरणेति**। पल्ल्याः पतिः प्रभुःतस्य पुत्री तस्याः सम्बोधनं हे पल्लीपतिपुत्रि। तव मन्दविपक्वं किञ्चित्पक्वं तिन्दुकफलं स्फूर्जकफलं तद्वत् श्यामोदरं आपाण्डुरप्रान्तञ्च। पुलिन्दा भिल्ला एव सुन्दराः तत्करस्पर्शक्षमं तत्सुरतसंमर्दसहमित्यर्थः। यदेतत्कुचयुग्मं लक्ष्यते तत्पत्रैरावृतमाच्छन्नं मा कृथाः। मा कुरु इति कुचानां चाभयं तदभ्यर्थनया दीनं कुञ्जरकुलं कर्तृ। त्वामनुनाथते याचते। भिल्लास्तव स्तनदर्शनेन सञ्जातरागाः सन्तः त्वां सेवमानाः च्युतवीर्यतया कुञ्जरान्न भिन्दन्ति। अतस्तनावरणं न कर्तव्यमिति याचते गजकुलमित्यर्थः। अत्र व्याकरणलक्षणरहितः असाधुशब्दः क इत्याकाङ्क्षायामाह **अत्रेति**। आशिषि नाथ इत्युपसंख्यानादाशिष्येव अभिलषितवस्त्वाशंसिलक्षणायामात्मनेपदस्य नियतत्वात्। याच्ञ्यायामात्मनेपदप्रयोगः व्याकरणलक्षणरहित इत्यर्थः। **सर्पिष इति "आशिषि नाथ"** इत्यनेन सूत्रेण षष्ठी। अत्राप्याशिष्येवास्त्वित्यत आशङ्क्याह **अत्र चेति**। श्लोकस्य समीचीनत्वात्पाठमुपदिशति **तस्मादिति**।

**सारबोधिनी—व्याकरणेति**। लक्षणं सूत्रम् तद्धीनं तदविषयः, व्याकरणव्युत्पत्तिविरहवदित्यर्थः। संज्ञाशब्दानां डित्थादीनां लडहादीनां प्राकृतानाञ्च उणादयो बहुलं, दाढादयो बहुलमिति सामान्यतो व्युत्पादनान्न तत्र दोषः। अन्ये तु, व्याकरणेन लक्ष्यत इति तल्लक्षणं साधुत्वमित्याहुः।

अत्रासाधुत्वज्ञानाभावः साधुत्वज्ञानं वा शाब्दबोधकारणम्, तदभावात् शाब्दबोधस्थगनमेव दूषकताबीजम्। साधुशब्दान्तरस्मरणे शाब्दबोधेऽपि प्रतीतिमान्थर्यं दूषकताबीजमिति।

**एतदिति**। क्षमं योग्यं करस्य तद्व्यासङ्गेन धनुषस्त्यागादेव प्राणरक्षणमिति। यद्वा यत्रानावरणे अनयोः कतरः कुंभ इति हनने मौढ्यं भविष्यतीति। पल्लीपतिपुत्रीत्यनेन तव भीतत्राणमुचितम्। **अत्रेति**। न चाशीरर्थःइति वाच्यम् त्वामित्यस्य कर्मत्वानुपपत्तेः। इष्टार्थस्यैवाशंसनविषयत्वात्। तदाह **अत्र तु याचनमर्थ इति**।

अत्र केचित्–आत्मनेपदिगणपाठादेवात्मनेपदित्वे सिद्धे पुनस्तद्विधानं नियमाय। नाथतेराशीरर्थे आत्मनेपदमेव न परस्मैपदम्। अर्थान्तरे त्वनियमस्तथा च याचनेऽप्यात्मनेपदमविरुद्धमिति, ग्रामग्राम इत्युदाहार्यमित्याहुः।

अप्रयुक्तं तथा आम्नातमपि कविभिर्नादृतम्। यथा

यथायं दारुणाचारः सर्वदैव विभाव्यते।
तथा मन्ये दैवतोऽस्य पिशाचो राक्षसोऽथ वा ॥१४॥

अत्र दैवतशब्दो "दैवतानि पुंसि वा" इति पुंस्याम्नातोऽपि न केनचित्प्रयुज्यते।

**बालचित्तानुरञ्जनी**—तृतीयमुदाहरति **अप्रयुक्तमिति**। तस्यैवार्थमाह **तथेति**। तथा शास्त्रलक्षणायोगितया पतितमपीत्यर्थम् [?]। यथायं दारुणाचारः सन् सर्वदैव विभाव्यते तथा अस्य दैवतः अधिष्ठाता अधिष्ठात्री देवतेति यावत् पिशाचः अथ वा राक्षस इति मन्ये।

अत्र ,यथा [तथा] शब्दयोः ज्ञापकभावोऽर्थः [?]। अत्र दैवत इति पुंलिङ्गशब्दः "वृन्दारका दैवतानि पुंसि वे"त्याम्नातोऽपि कविभिर्न प्रयुक्तः।

**सारबोधिनी–अप्रयुक्तमित्यादि**। कविपदं पण्डितपरम्। **तथेति**। येन रूपेणाम्नातं अनुशिष्टं तेन रूपेण प्रयोगा भाववत्त्वमप्रयुक्तत्वम्। अन्यथा घटपदादावपि तत्त्वं स्यात् पुंस्त्वादिनानुशासनात्। नपुंसकत्वादिना चाप्रयोगात्। असमर्थस्य हन्तेरुपसन्दानेन उद्धतिपद्धतीत्यादौ प्रयोगसम्भवेन तत्सामान्याभावाभावान्न तत्र प्रसङ्गः। असाधौ नानुशासनम्। तेन न तत्रातिव्याप्तिः।

ननु यत्किञ्चित्कविनाऽप्रयुक्तं यावता वा। नाद्यः, एकस्य कवेः सर्वप्रयोगाक्षमत्वेन प्रयुक्तेष्वपि तत्प्रसङ्गात्। नैवम्, अलङ्कारव्याकरणाद्युक्तप्रयोगनिषेधस्य तन्त्रत्वात्। दैवतादीनां पुंस्त्वादेरलङ्कारेष्वप्रयोगात्। एतेन लडहादीनां देशीयानां संस्कृतकाव्ये निवेशे अप्रयुक्तत्वं दोषः। तदुक्तं रुद्रटेन—

प्रकृतिप्रत्ययमूला व्युत्पत्तिर्नास्ति यस्य देशस्य।
तल्लडहादि कथञ्चिन्निरूढिरिति संस्कृते रचयेत् ॥इति।

घृधातोः घृतघर्मघृणाभ्योऽन्यत्र, तथा वचधातोरन्तितसोः लोटः प्रथमपुरुषैकवचने, जिधातोः घसधातोश्च भाषायां अन्यत्र प्रयोगो व्याकरणे निषिद्ध इत्याद्युदाहरणीयम्। दूषकताबीजन्तु कविसमयोल्लङ्घनप्रयोजनानुसन्धानेन मुख्यार्थप्रतीतिमान्थर्यमिति। दैवतस्तदधिष्ठाता।

असमर्थं यत्तदर्थं पठ्यते न च तत्रास्य शक्तिः । यथा

तीर्थान्तिरेषु स्नानेन समुपार्जितसत्कृतिः ।
सुरस्रोतस्विनीमेष हन्ति सम्प्रति सादरम् ॥१४४॥

अत्र हन्तीति गमनार्थम् ।

**बालचित्तानुरञ्जनी**-चतुर्थमुदाहरति **असमर्थमिति** । तस्यैवार्थमाह **यदिति** । सोऽर्थोयस्य तदर्थं पठ्यते धातुपारायणादौ यत् तत्रार्थे अस्य शब्दस्य शक्तिः वाचकत्वरूपा नास्ति । तीर्थान्तिरेषु गङ्गाव्यतिरिक्तेषु समुपार्जिता सत्कृतिः संस्कारो येन स एष पुरुषः सम्प्रति सादरं यथा तथा सुरस्रोतस्विनीं गङ्गां हन्ति गच्छति । अत्र किमसमर्थं तत्राह **अत्रेति** । हन्तीति हनहिंसागत्योरिति हिंसायामेवास्य शक्तिः न गमने, सर्वत्र पद्धतिरित्यादावेव गमनार्थत्वादित्यर्थः ।

**सारबोधिनी**—**तीर्थेति** । असमर्थमिति ।उप सन्दानं विनानुशिष्टार्थाबोधकत्वमसामर्थ्यम् । हन्ति गच्छति । **अत्र हन्तीति** । हनहिंसागत्योरिति गमनार्थे परिपठितोऽपि हन्तेस्तत्प्रत्यायने स्वरूपायोग्यः । प्रहतोद्धतपद्धतिजङ्घादिषु उपसन्दानेन गतेः प्रत्यायकत्वेन न तत्पाठवैयर्थ्यम् । एवमध्ययने परिपठितस्यापीङ्धातोरधिं विना तत्र प्रयोगेऽसामर्थ्यमेव । गमनबोधं प्रति स्वरूपायोग्यत्वमेव दूषकताबीजम् ।

निहतार्थं यदुभयार्थमप्रसिद्धेऽर्थे प्रयुक्तम् । यथा

यावकरसार्द्रपादप्रहारशोणितकचेन दयितेन ।
मुग्धा साध्वसतरला विलोक्य परिचुम्बिता सहसा ॥१४५॥

अत्र शोणितशब्दस्य रुधिरलक्षणेनार्थेनोज्ज्वलीकृतत्वरूपोऽर्थो व्यवधीयते ।

**बालचित्तानुरञ्जनी**-–पञ्चममुदाहरति **निहतार्थमिति** । तदेव व्याकरोति **यदिति** । उभयार्थं प्रसिद्धाप्रसिद्धार्थद्वयवत् । असमर्थे दोषे एकस्मिन्नेवार्थे प्रसिद्धिः, अत्र चोभयत्रापि प्रसिद्धिरित्यनयोर्भेदः । यावकरसेन लाक्षारसेन आर्द्रो यः पादः तत्प्रहारेण शोणिताः वर्णान्तरापादनेन उज्ज्वलाः कान्तिमन्तः कचाः केशाः यस्य तेन दयितेन प्रियेण साध्वसेन भयेन तरला चञ्चला मुग्धा प्रिया विलोक्य परिरभ्य आलिङ्गय सहसा चुम्बिता । तत्र को वाऽर्थः केनार्थेन निहत इत्याह **अत्रेति** । पादहते शिरसि रुधिरस्यापि संभवात् पादप्रहारात् यच्छोणितं रक्तं तद्युक्ताः कचाः यस्येत्यनेनार्थेन उक्तोऽर्थो निहन्यत इत्यर्थः ।

**सारबोधिनी**-**उभयार्थमिति** । सामग्रीसाद्गुण्येन प्रागप्रसिद्धार्थस्य प्रतिपत्तौ नायं दोषः । प्रसिद्धार्थप्रतीतिव्यवधानेनेति विशेषणात् । शक्त्येति [?] विशेषणेनाप्रसिद्धशक्यव्यञ्जके नानार्थे नातिप्रसङ्गः । प्रसिद्धिश्च भूरिप्रयोगाहितपटुतरसंस्कारगोचरत्वम् । तेन तस्य शीघ्रोपस्थित्या तदितरतिरोधानम् । **यावकेत्यादि** । यावकरसे रुधिरभ्रमान्मुग्धा । सहसा तत्क्षणं, विलम्बेन नायिकाया भ्रमोच्छेदसंभावनात् । अत्र स्पष्टमेव प्रकृतार्थप्रतीतिमान्थर्यं दूषकताबीजम् ।

अनुचितार्थम् यथा

तपस्विभिर्या सुचिरेण लभ्यते प्रयत्नतः सत्त्रिभिरिष्यते च या ।
प्रयान्ति तामाशु गतिं यशस्विनो रणाश्वमेधे पशुतामुपागताः ॥१४६॥

अत्र पशुपदं कातरतामभिव्यनक्तीत्यनुचितार्थम् ।

**बालचित्तानुरञ्जनी**—षष्ठमुदाहरति **अनुचितेति** । तपस्विभिः प्रयत्नतः सुचिरेण या गतिः लभ्यते सत्त्रिभिः अग्निहोत्रिभिः या गतिः इष्यते प्राप्यते तां गतिं रण एवाश्वमेधे पशुतामुपागताः यशस्विनः प्रयान्ति गच्छन्ति । पशुपदात् कातर्यप्रतीतेः कातर्ये च सति गतेरभावात् । 'रणे वाऽभिमुखो हत' इति वचनात् । अतः पशुपदं प्रत्युत चमत्काराजनकत्वादनुचितार्थमित्याह **अत्रेति** ।

**सारबोधिनी**—उपश्लोक्यमानतिरस्कारव्यञ्जकार्थत्वमनुचितार्थत्वम् । **तपस्विभिरिति** । सत्त्रिभिर्याज्ञिकैः । अत्र पशुपदात्प्रकृष्टकार्याक्षमत्वं प्रतीयते । सैव कातरतेति उपश्लोक्यमानतिरस्कारोपस्थितिर्दूषकताबीजम् ।

निरर्थकम्, पादपूरणमात्रप्रयोजनं चादिपदम् । यथा

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि ।
अभिवाञ्छितं प्रसिद्ध्यतु भगवति युष्मत्प्रसादेन ॥१४७॥

अत्र हिशब्दः ।

**बालचित्तानुरञ्जनी**-सप्तममुदाहरति **निरर्थकमिति** । तदेव व्याकरोति **पूरणेति** । चादि, च वा, हि इत्यादिपदमित्यर्थः । उत्फुल्लं विकसितं यत्कमलं तस्य केसराणां परागो धूलिः, तद्वद्गौरा द्युतिः यस्याः सा तस्याः सम्बोधनं हे गौरि भगवति । युष्मत्प्रसादेन मम वाञ्छितं प्रसिद्ध्यतु । लटा निर्देशे हिशब्दस्य **अ**वधारणाद्यर्थत्वं कल्पयितुं शक्यते । अत्र तु लोटा निर्देशः । अतो हिशब्दः पूरणमात्रप्रयोजन इत्याह **अत्रेति** । निपाताः वक्तृगतशोकादिद्योतका द्योतनीयार्थे प्रयोक्तव्या इति भावः । भगवतीत्येकवचनेन सम्बोध्य युष्मत्प्रसादेनेति बहुवचनमनुचितमित्यपि द्रष्टव्यम् ।

**सारबोधिनी-उत्फुल्लेति** । 'युष्मदि'ति गौरवाय बहुवचनम् । तेनैकत्वेन सम्बोधनेऽपि नासङ्गतिः । न चाधिकपदता, चादीनां छन्दःपूरणेऽपि पाठेन निष्प्रयोजनत्वविरहात् तत्त्व एवाधिकपदत्वात् । **अत्र** तत्पदव्यतिरेकप्रयुक्तान्वयाबोधकत्वाभावान्निराकाङ्क्षत्वमेव दूषकताबीजम् ।

अवाचकम्, यथा

अवन्ध्यकोपस्य विहन्तुरापदां भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः ॥१४८॥

अत्र जन्तुपदमदातर्यर्थे विवक्षितम् तत्र च नाभिधायकम् ।

**बालचित्तानुरञ्जनी**—अष्टममुदाहरति **अवाचकमिति** । विद्विषादर इत्यत्र आदरः दर इति द्वयं श्वेतो धावतीतिवत्तन्त्रेणोपात्तम् । देहिनः शत्रुमित्रादयः प्राणिनः अवन्ध्यः अनिष्फलः कोपो यस्य, आपदां विहन्तुः राज्ञः स्वयमेव प्रयत्नं विना वश्या भवन्ति । आपदां विहन्तुरित्यनेन दातृत्वं विवक्षितम्, न हि दातृत्वमन्तरेण आपन्निराकर्तुं शक्यते । क्रोधादिसाफल्यं अन्वयमुखेनाभिधाय व्यतिरेकमुखेनाप्याह । जातं हार्दं स्नेहो यस्य तेन मित्रेण जन्तुना अदात्रा सता जनस्य आदरो न, विद्विषा शत्रुणा अमर्षशून्येन सता दरः भयं न । अवन्ध्यकोपस्येत्यत्र व्यतिरेकः । अमर्षशून्यत्वमापदां विहन्तुरित्यस्य व्यतिरेकः । अदातृत्वप्रतिपादनार्थं जन्तुपदमुपात्तम् । तत्तस्य वाचकं न भवति तत्रासङ्केतितत्वादित्याह **तत्रेति** ।

**सारबोधिनी—अवाचकमिति**, अत्र **मिश्राः**"सङ्केतविरहादबोधकमवाचकम् । असमर्थेनासङ्केतः लाक्षणिकेनावबोधकत्वमिति तयोर्न प्रसङ्ग"इत्याहुः । **अवन्ध्येति** । आपदा दारिद्र्यरूपाणां विहन्तुर्दातु-रित्यर्थः । जातहार्देन जातस्नेहेनापि जन्तुना । अत्रानादरः । अमर्षशून्येन विद्विषापि न दरो भयमित्यर्थः । **अत्र जन्तुपदमिति** । पूर्वार्द्धे आपद्विघातकत्वं दातरि प्रयुक्तं, तद्वैपरीत्यप्रदर्शकं जन्तुपदमदातरि प्रयुक्तम् । अदातृत्वे च सङ्केतविरहादवाचकम् । न च तात्पर्यानुपपत्त्या लक्षणया बोधकमिदमस्त्विति वाच्यम् । यदा प्रयोजनप्रतिपिपादयिषाविरहाल्लक्षणाया अनवसरस्तदा सुविभक्तावप्यस्य दूषणत्वात् ।

यथा वा

हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा
तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितम् ।
किं कुर्मः कुशले सदैव विधुरो धाता न चेत्तत्कथं
तादृग्यामवतीमयो भवति मे नो जीवलोकोऽधुना ॥१४९॥

अत्र दिनमिति प्रकाशमयमित्यर्थेऽवाचकम् ।

**बालचित्तानुरञ्जनी**-सङ्केताभासविषयत्वेन किञ्चिद्भेदमाश्रित्यात्रैवोदाहरणमाह **यथा वेति** । यत्र यस्यां रात्रौ सा शशिमुखी मया दृष्टा सा रात्रिः तामसी तमोमयी कल्पिता । यत्र दिने सा न दृष्टा । तस्याः शशिमुख्याः विच्छेदः विरहः तज्जातशोकेन दग्धम् । अत एव अन्धकारितदिन प्रकाशत्वेन कल्पितं किल । हा धिक् किं कुर्मः ? धाता ब्रह्मा कुशले सत्कर्तव्ये सदैव विधुरः विमुखः । अत्र दिनमित्यस्य प्रकाशमयमित्यत्रार्थे सङ्केताभासः । स्वविभावसंभावनया स्वकल्पनामात्रपरिकल्पितत्वात् [?] । न च तमोयोगाद्रात्रेस्तामसीत्ववत् प्रकाशवद्गुणत्वाद्दिनशब्देन प्रकाशो विवक्ष्यत इति वाच्यम् । शब्दशक्त्य-भावात् । अतः न शब्दः प्रकाशवाचक इत्याह **अत्रेति** ।

**सारबोधिनी—हा धिक् सेति** । अत्र निपातसमुदायेन निर्वेदातिशयो ध्वन्यते । तत्र हेतुमाह **तामसीति** । यत्र सा शशिमुखी दृष्टा सा किल तामसी तमोयुक्ता । शशिनः समुद्भवे तमसोऽयोग्यत्वादिति भावः । एवं तद्विश्लेषरुजान्धकारितमिदं दग्धं दिनं प्रकाशमयं कल्पितम् । अन्धकारितस्य प्रकाशमयत्वा

योग्यत्वादिति भावः। तस्मात् कुशले इष्टे विधुरो वैरी। न चेदित्यत्र विधुर इत्यस्यानुषङ्गः। अत्रापि दिनपदस्य प्रकाशमयमित्यर्थे सङ्केतविरहान्न वाचकत्वमिति।

यच्चोपसर्गसंसर्गादर्थान्तरगतम्। यथा

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्त्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी–
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः॥१५०॥

अत्र दधदित्यर्थे विदधदिति।

**बालचित्तानुरञ्जनी**—अवाचकान्तरमुदाहरति **यच्चेति**। यच्चोपसर्गयोगादर्थान्तरगतं पूर्वार्थे [?] प्रयुक्तं तदप्यवाचकमित्यर्थः। जङ्घाकाण्ड एवोरुः स्थूलो नालो दण्डो यस्य, नखकिरणा एव लसत्केसराः तेषामाल्या पंक्त्या करालः। प्रत्यग्रस्य नूतनस्य अलक्तकस्य लाक्षारसस्याभानां कान्तीनां प्रसरा एव किसलयानि यस्य। मञ्जुः मनोज्ञः मञ्जीरः नूपुर एव भृङ्गो यस्य। भर्तुः शिवस्य नृत्तस्य उद्धतताण्डवस्य अनुकारे अनुकरणे भवान्याः अभिनवः दण्डपादः ऊर्द्ध्वप्रसारितस्य दण्डसादृश्याद् दण्डपाद इत्युच्यते। निजतनोः स्वशरीरस्य स्वच्छं यल्लावण्यं तदेव वापी तस्याः सम्भूतं यदम्भोजं तस्य शोभां विदधत् बिभ्रत् सन् जयति सर्वोत्कर्षेण वर्तते। अत्र विपूर्वस्य धा दधातेः।

"धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते।
तमेव विशिनष्टयन्यदुपसर्गगतिस्त्रिधा"॥

इति न्यायात् अत्रोपसर्गस्य बाधकत्वेन करोत्यर्थत्वात् करोत्यर्थत्वे अन्यदीयां शोभां करोति न स्वयं भातीति स्यात्। अतः धारणार्थत्वं वक्तव्यम्। तद्धारणं प्रति विदधत्पदमवाचकमित्याह **अत्रेति**।

**सारबोधिनी-जङ्घाकाण्डेति**। "[प्रसह्योर्ध्वीकृतः] पादो दण्डपादोऽभिधीयते।" "नृत्यं पदार्थाभिनयं नृत्तंताललयाश्रितम्"। तदत्र नृत्यानुकारे नृत्तानुकार इति पाठः। जङ्घाकाण्ड एव उरुरतिशयितो नालो यत्र। यद्वा जङ्घाकाण्डश्च ऊरुश्चेत्यर्थः। करालो दन्तुरः। किसलयो नवदलम्। **अत्रेति**। विदधदिति धारणे सङ्केतविरहादवाचकः। उपसर्गेण नियमितशक्तिकत्वात्। अत एवोक्तम् **"यच्चोपसर्गसंसर्गादि"त्यादि**।

अपरे तु, असमर्थे धर्मधर्मिणोर्द्वयोरपि शक्तिविरहः अवाचके तु धर्ममात्रे। तथा च तात्पर्यविषयप्रकारानवच्छिन्नशक्तिमत्त्वमवाचकत्वम्। नन्वेवं विदधदित्यत्रास्याव्यापनं स्यादिति चेदुच्यते असमर्थभेदा एते अवाचकादय इति प्रदर्शनार्थम्। अत एव ग्रन्थकृतैव "यद्यप्यसमर्थस्यैवाप्रयुक्तादयः केचन भेदा" इत्यनेन कण्ठरवेण तथा प्रतिपादितम्। दूषकताबीजन्तु अतात्पर्यविषयीभूतप्रकारकप्रतीत्यजननमेव, न प्रतीत्यभावः, असमर्थेऽपि तस्य सत्त्वादिति वदन्ति।

अश्लील त्रिधेति व्रीडाजुगुप्सामङ्गलव्यञ्जकत्वात् । यथा

साधनं सुमहद्यस्य यन्नान्यस्य विलोक्यते ।
तस्य धीशालिनः कोऽन्यः सहेताराालितां भ्रुवम् ॥१५१॥

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित्केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन ददती वायुं स्थिता तत्र सा
भ्रान्त्या धूर्ततयाऽथ वा नतिमृते तेनानिशं चुम्बिता ॥१५२॥

मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्
घनरुचिरकलापो निःसपत्नोऽद्य जातः ।
रतिविगलितबन्धे केशपाशे सुकेश्याः
सति कुसुमसनाथे कं हरेदेष बर्हीं ॥१५३॥

एषु साधनवायुविनाशशब्दा व्रीडादिव्यञ्जकाः ।

**बालचित्तानुरञ्जनी**—नवमोदाहरणे त्रिधाशब्दार्थमाह **त्रिधेति** । तत्र व्रीडाव्यञ्जकमश्लीलमुदाहरति **यथेति** । यस्य पुरुषस्य सुमहत्साधनं विलोक्यते यदन्यस्य न । धीशालिनस्तस्य अरालितां कुटिलितां भ्रुवं अन्यः कः सहेत । अत्र साधनशब्देन सैन्यं बिवक्षितं पुंव्यञ्जनं तु प्रतीयते । अतो व्रीडाव्यञ्जकम् ।

जुगुप्साव्यञ्जकमुदाहरति **लीलेति** । लीलार्थं तामरसेन कमलेन आहतः अन्यवनितया सपत्न्या निःशङ्कं दष्टः अधरो यस्य, कश्चिन्नायकः केसरैर्दूषिते ईक्षणे यस्य स इव नेत्रे व्यामील्य निमील्य स्थितः । मुग्धा च कुड्मलितं मुकुलीकृतं यदाननं तेन तस्य नायकस्य वायुं ददती स्थिता सा मुग्धा च भ्रान्त्या मुग्धासम्बन्धिन्या । मुग्धत्वेन नतिं नमनं ऋते अन्तरेण तेन नायकेन अनिशं चुम्बिता । अथवा धूर्ततया नायकसम्बन्धिन्या चुम्बिता । मुग्धाया मुग्धत्वं चुम्बनहेतुः नायकस्य धूर्तत्व वेति न ज्ञायत इत्यर्थः । नतिमृत इति द्वितीया पुरुषाराधनमृत इत्यादिशिष्टप्रयोगाद्द्रष्टव्या । अत्र वायुशब्देन अधोवायुप्रतीत्या जुगुप्साव्यञ्जकमित्यर्थः ।

अमङ्गलव्यञ्जकमश्लीलमुदाहरति **मृद्विति** । मृदुपवनेन विभिन्नः विकसितः अस्य मयूरस्य घन निबिडश्चासौ रुचिरश्चासौ कलापः बर्हं च । मत्प्रियायाः विनाशात् अभावात् अदर्शनादिति यावत् । निःसपत्नो जातः । सुकेश्याः मत्प्रियायाः रतौ विलुलितः शिथिलितः बन्धो यस्य । कुसुमसनाथे पुष्पयुक्ते केशपाशे सति एष बर्हीं मयूरः क हरेत् कं चमत्कारयुक्तं कुर्यात्, न कमपि। मत्प्रियाकेशसपाशसन्निधावयं न

शोभत इति भावः। अत्र विनाशशब्देन मरणप्रतीतेः, अमङ्गलव्यञ्जकम्। एषु व्रीडादिव्यञ्जकं किमित्याकाङ्क्षायामाह **एष्विति**।

**सारबोधिनी—त्रिधेति**। त्रिप्रकारकत्वं न वस्तुत्रित्वम्। सम्यग्वशीकरणसंपत्तिः श्रीः, तां लाति गृह्णाति। रश्रुतेर्लश्रुतिरिति, न श्लीलमश्लीलम्। व्यञ्जकत्वादिति कारणलक्षणया व्रीडादिशब्दैस्तद्धेतुकथनम्, उदाहरणेषु व्रीडादिव्यञ्जकत्वासंभवात्। व्यञ्जकत्वादित्यन्यस्य बोधकत्वादित्यर्थः। अन्यथा

पर्दते हदते स्तन्यं वमत्येव स्तनन्धयः।
जृम्भते मुहुरासीना प्राप्तगर्भा पुनर्वधूः॥

इत्यत्राव्याप्तेः। जुगुप्साया हेत्वभिधानेनाव्यञ्जकत्वात्।

**साधनमिति**। साधनं सैन्यं पुंव्यञ्जनञ्च। अरालितां भ्रुकुटीवशेन कुटिलाम्। **लीलेति**। अन्यस्य वनिता अन्यवनिता न त्वन्या वनिता, तदैव क्रोधातिशयात्। भ्रान्त्या अथवा धूर्ततया वायुं ददती स्थितेत्यन्वयः। **मृदुपवन इति**। कं हरेद् जयेत् अपि तु नैवम्। अर्थान्माम्, काक्वा न कमपीत्यर्थः। बर्ही इत्यनेन चन्द्रकलापसाम्येन कुसुमसनाथतोक्तिः। बर्ही मयूरः। बर्हं इत्यपपाठः, "पिच्छबर्हं नपुंसके" इत्यनुशासनात्। दूषकताबीजमनुभवसिद्धरसापकर्षकार्थोपस्थितिरेव। यद्वा तादृशोपस्थित्या श्रोतुर्वैमुख्यम्।

संदिग्धम् यथा

आलिङ्गितस्तत्रभवान् संपराये जयश्रिया।
आशीःपरम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु॥१५४॥

अत्र वन्द्यां किं हठहृतमहिलायां किं वा नमस्यामिति सन्देहः।

**बालचित्तानुरञ्जनी**—दशममुदाहरति **सन्दिग्धमिति**। तत्र सम्पराये युद्धे जयश्रिया आलिङ्गितः सन् आशीःपरम्परां आशीर्वादपरम्परां कर्णे कृत्वा कृपां कुरु। अत्र वन्द्यामिति बवयोरभेदाद्वन्द्यां नमस्यां आशीःपरम्परां कर्णे कृत्वेति सम्बन्धः, आशीःपरम्परां कर्णे कृत्वा बन्द्यां बलात्कारगृहीतायां राजवनितायां कृपां कुर्विति सम्बन्धो वेति सन्देह इत्याह **अत्रेति**।

**सारबोधिनी—सन्दिग्धमिति**। तात्पर्यसन्देहास्पदीभूतार्थद्वयोपस्थापकं सन्दिग्धम्। यत्तु, अनिश्चितानुपूर्वीकत्वं सन्दिग्धत्वम्, तदसत्। वाक्यदोषे "सुरालयोल्लासे"त्यादौ मार्गणादिपदे आनुपूर्वीनिश्चयेनापि तदव्याप्तिः। **आलिङ्गित इति**। सम्पराये युद्धे। बन्दी वन्द्या वेत्यर्थानिश्चयादनिश्चयः। न चानुपूर्वीनिश्चयाभावात्तत्कथमर्थद्वयोपस्थितिरिति वाच्यम्। लाघवेनानुपूर्वीज्ञानमात्रस्यैव तन्त्रत्वात्संशयेऽप्युपपत्तेः श्वेतो धावतीत्यादौ तथैवोपगमात्। अत्रार्थानिश्चय एव दूषकताबीजम्।

अप्रतीतं यत्केवले शास्त्रे प्रसिद्धम्। यथा

सम्यग्ज्ञानमहाज्योतिर्दलिताशयताजुषः।
विधीयमानमप्येतन्न भवेत्कर्म बन्धनम्॥१५५॥

अत्राशयशब्दो वासनापर्यायो योगशास्त्रादावेव प्रयुक्तः।

**बालचित्तानुरञ्जनी**—एकादशमुदाहरति **अप्रतीतमिति**। तस्यैवार्थमाह **यदिति**। सम्यग्ज्ञानमेव महाज्योतिः तेन दलितः आशयः सुखदुःखादिवासना यस्य तस्य भावस्तत्ता तां जुषमाणस्य पुरुषस्य विधीयमानं क्रियमाणमप्येतत्प्रकृतं कर्म बन्धकं न भवेत्। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"ति वचनादित्यर्थः। "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति योगशास्त्रादावेव प्रसिद्धमाशयपदमित्याह **अत्रेति**।

**सारबोधिनी-अप्रतीतमिति**। प्रति प्रतिशास्त्रे इतं ज्ञातं प्रतीतं, न पतीतमप्रतीतम् यत्किञ्चिच्छास्त्रपरिभाषितमित्यर्थः। **सम्यगिति**। सम्यक् ज्ञानं तत्त्वज्ञानम्। बन्धनम् बन्धजनकमित्यर्थः। वासनायां प्रयुक्तस्याशयशब्दस्य योगशास्त्रमात्रपरिभाषितत्वात् विरलप्रयोगेन झटिति न संस्कारोद्बोधकता, किन्तु भावनयैवेति भावनाविलम्बात् प्रतीतिमान्थर्यमेव दूषकताबीजम्।

ग्राम्यम् यत्केवले लोके स्थितम्। यथा

राकाविभावरीकान्तसंक्रान्तद्युति ते मुखम्।
तपनीयशिलाशोभा कटिश्च हरते मनः ॥१५६॥

अत्र कटिरिति।

**बालचित्तानुरञ्जनी-**द्वादशमुदाहरति **ग्राम्येति**। तस्यार्थमाह **यदिति**। हे प्रिये राकायां पूर्णिमायां यो विभावरीकान्तश्चन्द्रः तत्सङ्क्रान्ता द्युतिरिव द्युतिर्यस्य तत्ते मुखं तपनीयशिला सुवर्णशिला तस्याः शोभेव शोभा यस्याः सा कटिश्च मे मनः हरति। अत्र नितम्बवाचि कटिपदं ग्राम्यम् अव्युत्पन्नत्वादित्याह **अत्र कटिरिति**।

**सारबोधिनी**— ग्रामे भवो ग्राम्योऽविदग्धो न तु सभ्यस्तत्प्रयुक्तत्वं ग्राम्यत्वम्। **राकेति**। अखण्डचन्द्रपूर्णिमा राका। तपनीयं काञ्चनम्। **कटिरिति**। श्रोणीनितम्बादिकमौपनागरिकं कटिपदन्त्वविदग्धमात्रप्रयोज्यम्। अत्र वक्तुरविदग्धतानुसन्धानं रसापकर्षकमनुभवसिद्धमेव दूषकताबीजम्। अत्र कटिपदेऽश्लीलत्वसंभवेऽपि उपाधेरसङ्करात् दोषपार्थक्यम्।

नेयार्थम्।

"निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः" ॥

इति यन्निषिद्धं लाक्षणिकम्। यथा

शरत्कालसमुल्लासिपूर्णिमाशर्वरीप्रियम्।
करोति ते मुखं तन्वि चपेटापातनातिथिम् ॥१५७॥

अत्र चपेटापातनेन निर्जितत्वं लक्ष्यते।

**बालचित्तानुरञ्जनी**--त्रयोदशमुदाहरति **नेयार्थमिति**। तस्यार्थमाह **काश्चिदिति**। "निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित्काश्चिन्नैव त्वशक्तितः"।। इति भाट्टवार्तिकम्। तत्र काश्चन लक्षणाः नैव क्रियन्ते। अशक्तितः प्रत्यायनसामर्थ्याभावादिति यन्निषिद्धं लाक्षणिकं तन्नेयार्थम्। नेयः बुद्धिबलादाक्षेप्तव्यः। नेतुः स्वारसिकलक्षणासंधुक्षितोऽर्थो यस्येति विग्रहः। हे तन्वि ते मुखं शरत्काले समुल्लासी असौ पूर्णिमायां शर्वरीप्रियश्च तं चपेटस्य हस्तविशेषस्य आपातनमर्पणं तस्य अतिथिं संभोक्तारं करोति। त्वन्मुखं शरत्कालपूर्णिमाचन्द्रमधःकरोतीत्यर्थः। अत्र साम्यमाधिक्यञ्चेति सन्देहात् असामर्थ्यान्निषिद्धं लाक्षणिकमित्याह **अत्रेति**।

**सारबोधिनी—काश्चिदिति**।

"निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत्।
क्रियन्ते साम्प्रतं काश्चित्"

इत्यन्यभागो द्रष्टव्यः। क्वचिदाकार एव तादृशः पाठः। **निषिद्धमिति**। रूढिप्रयोजनान्यतरशून्यमिति पर्यवसितोऽर्थः। **अत्रेति**। न्यायमते वृत्त्यभावेन शाब्दबोधाभावेपि गुरुमतेनेदम्। तन्मते वृत्त्यनुपस्थितस्यापि शाब्दबोधविषयत्वात्। न च लक्षणाविरहात् कथं पदार्थोपस्थितिरिति वाच्यम्, शक्यसम्बन्धमात्रेणापि तदुपपत्तेः। दूषकताबीजं कवेरव्युत्पत्तिप्रतिसन्धानेन वैरस्यापादकत्वम्। वस्तुतस्तु अस्य वक्ष्यमाणं वस्त्रवैदूर्यादिकमेवोदाहरणम् न तु शरत्कालेत्यादि। अत्र निर्जितत्वातिशयप्रयोजनस्य संभवात्। केचित्तु, उत्तमं प्रति अधमेन तथात्वे ब्रूते तदभावात्। प्रत्युताधमस्यैवेति अप्रवृत्तेरित्याहुः।

अथ समासगतमेव दुष्टमिति संबन्धः। अन्यत् केवलं समासगतञ्च।

क्लिष्टम् यतः अर्थप्रतिपत्तिर्व्यवहिता। यथा

अत्रिलोचनसम्भूतज्योतिरुद्गमभासिभिः।
सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम्।।१५८।।

अत्रात्रिलोचनसम्भूतस्य चन्द्रस्यज्योतिरुद्गमेन भासिभिः कुमुदैरित्यर्थः।

**बालचित्तानुरञ्जनी**–अथ भवेत् क्लिष्टम् इत्यत्राथशब्दः क्लिष्टादित्रयस्य समासगतत्वमवस्थापयतीत्याह **अथेति**। क्लिष्टादित्रयमिति शेषः। एवकारार्थमाह **अन्यदिति**। अन्यत् च्युतसंस्कृत्यादि। केवलं असमस्तम् वाक्यगते केवलपदं समासगतञ्च दुष्टम् न तथा क्लिष्टादित्रयं केवले पदे दूषणाभावादित्येवकारार्थः। न पुनरसमासे दोषाभाव इति विवक्षितम्। वाक्येऽपि दोषाः सन्तीति वक्ष्यमाणविरोधप्रसङ्गात्।

चतुर्दशमुदाहरति **क्लिष्टमिति**। तस्यैवार्थमाह **यत इति**। अर्थप्रतीतेर्व्यवधानादृते अन्यस्य क्लेशस्याभावात् व्यवधानमेव क्लेश इत्यर्थः। हे भूपाल तव चेष्टितं चरितं, अत्रिर्मुनिः तस्य लोचनात्संभूतं ज्योतिश्चन्द्रः, तस्य उद्गमेन उदयेन भासन्त इति भासीनि कुमुदानि। तैः सदृशं समानं यथा तथा। अत्यर्थं शोभते। अत्र [र्थ ?] प्रतीतेर्व्यवहितत्वमाह **अत्रेति**। कपदप्रत्याय्यस्य कुमुदस्य अत्रिलोचनेत्याद्यनेकपदार्थपर्यालोचनेन व्यवहितप्रतीतिकत्वे क्लिष्टत्वमित्यर्थः।

**सारबोधिनी—अथ समासेति**। क्लिष्टादित्रयं समासगतमेव। क्लिष्टत्वादीनां पदान्तरसाहित्येनैव दोषत्वम्। असमासे तु वाक्यदोषत्वमेव। इतरेषां पददोषत्वम्। समासे असमासे चेति भावः। क्लिष्टं **यतोऽर्थप्रतीतिरिति**। यतो विवक्षितस्य वाक्यार्थस्य प्रतीतिर्विलम्बेनेत्यर्थः। निहतार्थादौ पदार्थोपस्थिति-रेव विलम्बितेति ततऽस्य भेदः। विलम्बश्च "धम्मिल्ले"त्यादावनासन्नत्वेन, प्रकृते "अत्रिलोचने"त्यत्र तु सामान्यासन्नात् पदात् प्रकरणाद्यनवतारे झटिति विशेषानुपस्थितिरित्यन्यदेतत्। दूषकताबीजं तु प्रतीतिमान्थर्यम्।

अविमृष्टविधेयांशम् अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्। यथा

मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा—
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः ॥१५६॥

अत्र मिथ्यामहिमत्वं नानुवाद्यम् अपि तु विधेयम्।

**बालचित्तानुरञ्जनी**—पञ्चदशमुदाहरति। **अविमृष्ट इति**। तस्यार्थमाह **प्राधान्येनेति**। प्राधान्येन साध्यत्वेनेत्यर्थः। अत्र पद्ये एषां उद्धतं यथा तथा कृत्ते छिन्ने अस्या[?]अविरलं अनल्पं अन्योन्यसंसक्तेभ्यः गलेभ्यः कण्ठेभ्यः गलत् स्रवत् यद्रक्तं तस्य संसक्ताभिरविच्छिन्नाभिर्धाराभिः धौतौ ईशस्य शिवस्य अङ्घ्री चरणौ तयोः प्रसादेन उपनतात् प्राप्तात् जयात् जगति जातः मिथ्यामहिमा येषां मूर्ध्नाम्, कैलासस्य उल्लासने इच्छा तस्याः व्यतिकरः सम्पर्कः तत्पिशुनश्चासावुत्सर्पी वाऽसौ दर्पो मदश्च तेन उद्धुराणां दोष्णां भुजानां नगरीरक्षणे प्रयास इति यत् एतत् फलं किम्? अत्र किं विधेयम् यस्याविमर्शः? अत्राह **अत्रेति**। मिथ्यामहिमत्वस्यानुवाद्यत्वे लङ्कोपरोधात् पूर्वमपि तत्प्रसङ्गः। अतो लङ्कापरित्राणसामर्थ्यात् मिथ्यामहिमत्वं साध्यं तद्वाक्येनैव प्रतीयते, न समासेन गुणत्वप्रतीतेरविमृष्टविधेयत्वमिति भावः।

**सारबोधिनी—प्राधान्येनेति**। प्राधान्यं विधेयता प्रतीतियोग्यत्वम्। तदुक्तम्

"यच्छब्दयोगः प्राथम्यं सिद्धत्वं चाप्यनूद्यता।
तच्छब्दयोग औत्तर्यं साध्यत्वं च विधेयता" ॥

गलन्ती या रक्तसंसक्तधारा तया धौतौ यौ ईशाङ्घ्री तत्प्रसादोपनतो यो जयस्तेन जगति जातो मिथ्या-महिमा येषां तेषामिति मूर्द्धविशेषणम्। तादृशां दोष्णां च किमेतत्फलं जातम् यदिह नगरीरक्षणेऽपि प्रयासोऽसामर्थ्यमित्यर्थः।

**अत्रेति**। यद्यत्र मिथ्यामहिमत्वमनुवाद्यं स्यात्तदा तदनूद्य किञ्चिद्विधेयं स्यात्। प्रकृते तु यदि तदेव मिथ्यामहिमत्वं जातं तदेदानीं नगरीरक्षणे प्रयासो नानुचितः। यदि विधेयं स्यात्तदा तादृशेनापि कर्मणा यन्महत्वं तदाभूत्तदिदानीं मिथ्या बभूव। यतः स्वनगरीरक्षणेऽप्यसामर्थ्यमिति प्रतीतिः सिध्यति, अतो मिथ्यात्वस्यैवाप्राप्तत्वान्मिथ्यामहिमत्वमित्यस्य महिम्नो मिथ्यात्वमित्यर्थ एव करणीयः। तच्च

मिथ्यात्वं बहुव्रीहावन्यपदार्थप्रधाने गुणीभूतम् । किञ्च, उद्देश्यं विधेयं च यदि पृथक्पदाभ्यामुपतिष्टते तदा प्राप्तमुद्दिश्याप्राप्तं विधीयते, पर्वतो वह्निमानितिवत्, न तु समासे, अन्यथा वह्निमत्पर्वत इत्यभिधानापत्तेः ।

यथा वा

स्रस्तां नितम्बादवरोपयन्ती पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण द्वितीयमौर्वीमिव कार्मुकस्य ।।१६०।।

अत्र द्वितीयत्वमात्रमुत्प्रेक्ष्यम् । मौर्वीं द्वितीयामिति युक्तः पाठः ।

**बालचित्तानुरञ्जनी**–शिष्यशिक्षार्थमत्रैवान्यान्यप्युदाहरति **यथा वेत्यादिना** । स्थानविदा स्मरेण न्यासीकृतां निक्षेपीकृतां कार्मुकस्य द्वितीयमौर्वीमिव स्थितां नितम्बस्रस्तां केसरपुष्पैः बकुलपुष्पैर्निर्मितां काञ्चीं पुनः पुनरवलम्बमाना पार्वती **अदृश्यत** । **अत्र**ाविमृष्टविधेयत्वमाह **अत्रेति** । कार्मुकस्य मौर्वीमात्रे सिद्धे द्वितीयत्वमात्रं विधेयम्, तस्य समासकरणान्न प्रतीयत इति अविमृष्टविधेयत्वमित्यर्थः ।

**सारबोधिनी**––**स्रस्तामित्यादि** । स्थानविदा आधारसाद्गुण्येन गुणप्रकर्षविज्ञेन । **अत्रेति** । स्वीय-वस्तुन एव न्यासीकरणं न तत्सदृशस्येति नोपमा । तदाह **उत्प्रेक्ष्यमिति** । ननु द्वितीयमौर्वीत्वं विशिष्टमेव विधेयम्, अतो न दोष इति चेत् अत्र केचित्, बकुलमालाया मौर्व्याकारत्वेन मौर्वीत्वप्राप्तौ द्वितीयत्वस्यैव विधेयत्वमित्याहुः । ननु तर्हि द्वितीयत्वस्यापि प्राप्तत्वादुत्प्रेक्षाया एवासम्भवः स्यात् ।

यथा वा

वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद्बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ।।१६१।।

अत्रालक्षिता जनिः इति वाच्यम् ।

**बालचित्तानुरञ्जनी**–वपुः विरूपाक्षम् । अलक्ष्यं जन्म यस्य तस्य भावस्तत्ता । वसु धनं दिगम्बरत्वेन निवेदितम् । हे बालमृगाक्षि पार्वति ! वरेषु यन्मृग्यते अन्विष्यते कन्यकादिभिः तत्त्रिलोचने व्यस्तमपि किमस्ति ।

"कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ।।"

इति न्यायेन वरगुणेषु गवेषणीयेषु साकल्यं तावदास्ताम् तदेकदेशोऽप्यत्र नास्तीत्यभिप्रायेणोक्तं **व्यस्तमपीति** । यथा वपुरित्यनूद्य विरूपाक्षत्वं विधेयं, तत्र समासकरणान्न प्रतीयत इत्यविमृष्ट-विधेयत्वम् । तर्हि एतत्कथं पठनीयमित्याकाङ्क्षायां शिष्यशिक्षार्थमाह **अत्रेति** ।

**सारबोधिनी**-वस्तुतः पूर्वापरितोषात् उदाहरणान्तरमाह **वपुरिति** । तद्धितप्रत्ययार्थगुणीभूते बहुव्रीह्यर्थे गुणीभावाभिप्रायेण लक्ष्यभेद इति केचित् । **मिश्रास्तु** समासगतमेवेत्यत्र समासपदस्य युक्तार्थ-मात्रपरतया तद्धितार्थगुणीभूतत्वदर्शनायेदमुदाहरणमित्याहुः । अत्र जन्मनोऽलक्ष्यत्वं विधेयम्, तच्च गुणी-भूतम् । अलक्षिता जनिरिति पददोषोद्धारमात्राभिप्रायेण पाठकल्पनम् । अन्यथा, अलक्षितेत्यस्य प्रागुपादानेन वाक्यगतविधेयाविमर्शतादवस्थ्यात् । वस्तुतस्तु-त्रिलोचने जन्मनोऽप्यसिद्धतया अलक्षितेत्यस्य विशेषणस्य पूर्वोपादानमुचितमिति रचितः पाठः समीचीनः ।

यथा वा

आनन्दसिन्धुरतिचापलशालिचित्तसन्दाननैकसदनं क्षणमप्यमुक्ता ।
या सर्वदैव भवता तदुदन्तचिन्ता तान्तिं तनोति तव सम्प्रति धिग्धिगस्मान् ॥१६२॥

अत्र 'न मुक्ता' इति निषेधो विधेयः ।

**बालचित्तानुरञ्जनी**–अस्यैवोदाहरणान्तरमाह **यथा वेति** । अन्यस्त्रीविरहविह्वलं नायकं काचिदसूयाशालिनी उपालभते । हे नायक, भवता आनन्दस्य सिन्धुः, अतिचापलेन शालिचित्तस्य सन्दाननं बन्धनं तस्य एकसदनं स्थानभूता या स्त्री वल्लभात्वेन सर्वदा क्षणमपि न परित्यक्ता । सम्प्रति तस्याः वार्ता चिन्ता तव तान्तिं खेदं तनोति अस्मात् धिक् धिक् त्वद् [प्रतिषेध] दुःखनिवारणासमर्थत्वादिति भावः । अत्रासमासेन नञ् निषेधो विधातव्यः । न **मुक्तेति** । तदकरणादुपसर्जनत्वान्निषेधस्याविमृष्टविधेय-त्वमित्याह **अत्र न मुक्तेति** ।

**सारबोधिनी**-नञ्समासेऽप्युदाहरति **आनन्देति** । सन्दाननं निगडनम् । उदन्तो वार्ता । तान्तिं ग्लानिम् । निषेधो विधेय इति असमास एव नञः प्रसज्यम्[प्रतिबेध]वाचकत्वन्नात्र तथेति भावः । तथाहि, क्रियासम्बन्धेनैव नञोऽभावप्रतिपादकत्वेन तया सह नञः तत्र एकाधिकरणत्वविरहात् न समासः । ततश्च मुक्ता न भवतीत्यर्थो विवक्षितः । स च न प्रतीयत इति । तदुक्तम्–

अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ॥ इति

अब्राह्मण इत्यादौ इतरसम्बन्धिनो नञः समासे ब्राह्मणप्रतियोगिकान्योन्याभावाप्रतिपत्तावभावस्य विशेषणत्वेन विधेयत्वाप्रतिपत्तेः[17] । तथा चोक्तम्–

प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ इति ।

यथा

नवजलधरः संनद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥१६३॥

इत्यत्र । न त्वमुक्ततानुवादेनान्यदत्र किञ्चिद्विहितम् ।

**बालचित्तानुरञ्जनी**--समासराहित्येन निषेधो विधातव्य इत्यत्र दृष्टान्तमाह **यथेति** । विरहिणो वचनम् । अयं नवजलधरः संनद्धः दृप्तो निशाचरो नेत्यत्र काकुः । इदं सुरधनुः तस्य निशाचरस्य दूराकृष्टं शरासनं धनुर्नेति काकुः । पटुर्धारासारोऽपि बाणपरम्परा नेति काकुः । कनकनिकषस्निग्धा विद्युन्मम प्रिया उर्वशी नेति काकुः । अत्र विरहित्वाज्जलधरस्य राक्षसत्वमारोपितम्, विद्युतः उर्वशीत्वमारोपितम् । अत्र न दृप्तनिशाचरेत्यादौ समासराहित्येन निषेधस्य प्राधान्यात् न तथा तत्रेति दुष्टत्वमित्यर्थः। **नन्वमुक्ते**-त्यत्रानुवादोऽस्तु को दोषस्तत्राह **न त्विति** । यद्यनुवादस्तर्हि किञ्चिद्विधेयं स्यात् न च तदस्ति, अतो नानुवाद इत्यर्थः ।

**सारबोधिनी**—निषेधप्राधान्ये समासाभावं दृष्टान्तयति **यथेति** । सन्नद्धः कवची दृप्तनिशाचरो न भवतीति गम्यमानम् भवतीति क्रियान्वयिनो नञो न समासः । एवमुत्तरेष्वपि । निकषः प्रस्तरविशेषः । नन्वमुक्तत्वमत्रानुवाद्यं "जुगोपात्मानमत्रस्त" इत्यत्रात्रस्तत्ववदित्याशङ्क्य निराकरोति **न त्विति** ।

यथा

जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत् ।।१६४।।

इत्यत्र, अत्रस्तत्वाद्यनुवादेनात्मनो गोपनादि ।

**बालचित्तानुरञ्जनी**--अनूद्य किञ्चिद्विधेयमित्यत्र उदाहरणमाह **यथेति** । स दिलीपः भयरहितः सन् आत्मानं जुगोप रोगरहितः सन् धर्मं भेजे, लोभरहितः सन् अर्थान् आददे, आसक्तिरहितः सन् सुखमन्वभूत् । आत्मरक्षादिपुरःसरं त्रिवर्गमन्वभूदित्यर्थः । अत्र किमनूद्यं किं विधेयमित्याकाङ्क्षायामाह **अत्रेति** । अत्रस्तत्वाद्यनुवादपूर्वकं आत्मनो गोपनादि विहितम् । एवममुक्ततानुवादेन न कस्यचिदर्थस्यात्र विधानम्, किन्तु आनन्दसिन्धुत्वाद्यनुवादेनामुक्तत्वं विधेयम् । तत्र निषेधस्य प्राधान्यात् नञः प्रसज्य-प्रतिषेधोऽर्थो भवति, समासस्थस्य पर्युदासः । तथा चोक्तम्--

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ् ।।
प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्" ।।इति।

पर्युदासे समासः, यथा अत्रस्त इति । प्रसज्यप्रतिषेधेऽसमासो यथा न दृप्तनिशाचर इत्यादौ । तदुक्तम्--

"नञर्थस्य विधेयत्वे निषेधस्य विपर्यये ।
समासो नेष्यतेऽर्थस्य विपर्यासप्रसङ्गतः" ।।इति ।

तथा चात्रामुक्तेति समासकरणात् विधेयत्वाप्रतीतेर्दुष्टत्वमिति भावः ।

**सारबोधिनी**–गृध्नु[१८]राकाङ्क्षाशीलः । असक्तः अनासङ्गः । तत्रात्मगोपनादिवदत्र विधेयान्तराभावाद्विधेयत्वमेवेति भावः । ननु क्वचित्समासेऽपि नञर्थस्य प्राधान्यप्रतीतिर्दृश्यते । यथाऽलवणभोजी, अश्राद्धभोजीत्यत्रानयोरलवणाश्राद्धोपपदाद्भुजेर्व्रताभीक्ष्ण्ययोश्चेति विहितेन णिनिना श्राद्धं लवणं च न भुङ्क्ते इति श्राद्धलवणभोजनाभावरूपव्रताभिधानात् । यद्वा श्राद्धलवणपदाभ्यां नञः समासे श्राद्धलवणेतरभोजनस्य रागपरिप्राप्तत्वेन तद्व्रतस्य भोजननिषेधपर्यवसानमित्यभावप्राधान्यम् । एवमसूर्यंपश्या राजदारा इत्यत्र राजदाराणामेव गोपनपदपरिहार्यदर्शनम्, सूर्यमपि न पश्यन्तीत्यभावप्राधान्यम् । सूर्येतरदर्शित्वे च गोपनं न स्यात् । गोपन एव महाकविप्रयोगात् । अत एव दर्शिना सह सम्बद्धस्य नञः सूर्येण सह समासो गमकत्वादित्युक्तम् । गमकत्वादिति । दृशिसम्बन्धेनैव नञो गोपनस्य विधेयत्वादित्यर्थः । अभिधानादत्र समासो गोपनातिशयप्रतीतिरिति तत्त्वमिति चेन्न । तथात्र प्रकृतेऽनुशासनाभावात् । नन्वत्र नञ्भिन्नस्याकारस्य निषेधार्थत्वात् समासाभावेन नात्रायं दोषः इति चेन्न, एवमपि पर्युदाससन्देहानपायात् नञभिन्नस्याकारस्यासत्त्वाच्च । अनातुर इत्यस्य समासासमासभेदेन[१९] द्वैविध्यकथनपरत्वात् । दूषकताबीजन्तु विवक्षितविधेयतानुपपत्तिः ।

**विरुद्धमतिकृत् यथा**

सुधाकरकराकारविशारदविचेष्टितः ।
अकार्यमित्रमेकोऽसौ तस्य किं वर्णयामहे ।।१६५।।

अत्र 'कार्यं विना मित्रम्' इति विवक्षितम् 'अकार्ये मित्रम्' इति तु प्रतीतिः ।

**बालचित्तानुरञ्जनी**–षोडशमुदाहरति **विरुद्धेति** । सुधाकरश्चन्द्रः । तस्य किरणसदृशं विशारदं विचेष्टितं यस्य सोऽसावेकः कार्यं विना मित्रम् तस्य गुणान् किं वर्णयामहे । अत्र किं विवक्षितं का वा विरुद्धप्रतीतिस्तत्राह **अत्रेति** । कार्यं प्रयोजनं विना मित्रम् अकृत्रिमः सुहृदित्यर्थः । अकार्येषु अन्यान्येषु कर्मसु मित्रमिति तु विरुद्धप्रतीतिः ।

**सारबोधिनी**–**विरुद्धेति** । प्रकृतार्थधीप्रतिबन्धकीभूताप्रकृतार्थधीजनकं विरुद्धमतिकृत् । तेन विरुद्धस्य मतिर्विरुद्धा वेति समासे नास्था । विरुद्धत्वञ्च प्रकृतन्यक्कारप्रतीतिकारित्वम्[२०] । अनुचितार्थाश्लीलयोरर्थानां न परस्परप्रतिबन्धकता । अमतपरार्थे तु द्वयोरपि प्रकृतत्वम् निहतार्थे तु विलम्बेन प्रतीतिरिति भेदः ।

**सुधाकरेति** । विशारदं श्रेष्ठम् । **अत्रेति** । कार्यस्याभावोऽकार्यं तेन मित्रमकृत्रिममित्रमित्यस्याव्ययीभावे लक्षणानुसंधाने विलम्बेन तदपेक्षया शक्तिलक्षणयोरन्यतराभावात्कर्मधारये तज्झटिति कुकार्यप्रतीतिरित्याह **अकार्येषु मित्रमिति** । **प्रतीतिरिति** । कुकार्यमित्यत्र तस्य प्रतीतिरित्यर्थः, अत्रोपश्लोकनविरोधिनः समासावयवस्य नञो निन्दार्थत्वात् । यदुक्तम्

"तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता ।
अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः" ।। इति ।

यथा वा

चिरकालपरिप्राप्तलोचनानन्ददायिनः ।
कान्ता कान्तस्य सहसा विदधाति गलग्रहम् ॥१६६॥

अत्र 'कण्ठग्रहम्'इति वाच्यम् ।

**बालचित्तानुरञ्जनी**—अत्रैव शाब्दं विरोधमाह **यथा वेति**। कान्ता चिरकालाप्राप्त्या लोचनयोः सन्तोषदायिनः पुरुषस्य सहसा गलग्रहमालिङ्गनं करोति। गलग्रहस्य रोगविशेषत्वात् तत्प्रतीतिनिवृत्त्यर्थं कण्ठग्रहमिति वक्तव्यमित्याह **अत्रेति**।

**सारबोधिनी**--प्रपञ्चयति **यथा वेति**। गलग्रहो रोगविशेषः। तत्र च समुदाये शक्तिरालिङ्गने च योगः तत्र समुदायशक्तेर्बलवत्त्वात् रोगस्यैव प्रतीतिरिति विरुद्धस्य मतिः। न च रूढ्यर्थबाधेऽवयवशक्त्या परिरम्भप्रतीतौ निहतार्थत्वमेव स्यादिति वाच्यम्। विलम्बेनापि गलग्रहपदात्तदप्रतीतेः रूढ्या योगप्रतिबन्धात्। शोणितादौ त्वर्थद्वयस्य रूढिसाम्येऽपि भूरिप्रयोगादप्रकृतार्थस्य प्राक् प्रतीतिरिति।

यथा वा

न त्रस्तं यदि नाम भूतकरुणासन्तानशान्तात्मनः
तेन व्यारुजता धनुर्भगवतो देवाद् भवानीपतेः।
तत्पुत्रस्तु मदान्धतारकवधाद्विश्वस्य दत्तोत्सवः
स्कन्दः स्कन्द इव प्रियोऽहमथ वा शिष्यः कथं विस्मृतः ॥१६७॥

अत्र भवानीपतिशब्दो भवान्याः पत्यन्तरे प्रतीतिं करोति।

**बालचित्तानुरञ्जनी**--उदाहरणान्तरमाह **यथेति**। धनुर्व्यारुजता भग्नं कुर्वता तेन रामेण भूतेषु करुणा तस्याः सन्तानः तेन शान्त आत्मा यस्य ततो भगवतो भवानीपतेर्देवात् यदि नाम न त्रस्तं मा भूयतां त्रस्तेन[?]मदेन अन्धस्तारकः तस्य वधात् विश्वस्य दत्तोत्सवः ईश्वरपुत्रः स्कन्दस्तु कथं विस्मृतः। अथवा स्कन्द इव प्रियः ईश्वरस्य शिष्यः अहं कथं विस्मृत इति परशुरामवचनम्। "पुंयोगादाख्यायामि"ति ङीषि भवस्य पत्नी भवानी तस्याः पतिरित्युक्ते चैत्रपत्न्याः पतिरित्युक्त इव भवान्याः पत्यन्तरप्रतीतिरिति विरुद्धमतिकृदित्याह **अत्रेति**। न च भवानीपतिरित्यत्र पतिशब्देन भव एवोच्यत इति वाच्यम्। वैयर्थ्यप्रसङ्गात्। न च भवानी गौरीशब्दपर्याय इति वाच्यम्। भवस्य पत्नीति व्युत्पत्त्यभावप्रसङ्गादिति भावः।

**सारबोधिनी**--**न त्रस्तमिति**। **सन्तानं** समूहः। व्यारुजता भञ्जता। भवानीपतिशब्द इति योगरूढिन्यायेनावयवार्थप्रतीतौ भवाधिकोपादानस्वरसात्[२१] तथा प्रत्ययात्। अन्यथा भवादित्येव विदध्यात्। यद्वा भवस्य परिचायकतया गुणीभावेन पत्युः प्राधान्येनोपस्थित्या द्वयोर्भेदात् भवानीपतिशब्दस्य तथा प्रतीतिकारित्वमित्यर्थः। वस्तुतस्तु नैतत्साधीयः। भवानीशब्देन दुर्गात्वप्रकारक **एव बोधो** जन्यते, अन्यथा

भवान्यपर्णादुर्गादिशब्दानां पर्यायत्वं न स्यात्, योगस्तु साधुत्वार्थः । एवं पङ्कजादिशब्देष्वपि । आराध्यायाः परमदेवताया एवं प्रतीतिरातङ्काधर्मदायिनीति विरुद्धा ।

**यथा वा**

गोरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः ।
सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः ।।१६८।।

अत्राम्बिकारमण इति विरुद्धां धियमुत्पादयति ।

श्रुतिकटु समासगतम् यथा

सा दूरे च सुधासान्द्रतरङ्गितविलोचना ।
बर्हिनिर्ह्लादनार्होऽयं कालश्च समुपागतः ।।१६९।।

एवमन्यदपि ज्ञेयम् ।

**बालचित्तानुरञ्जनी**–अत्रैवोदाहरणान्तरमाह **यथेति** । यः हस्तिमेघादिकमवलोक्य संरंभं करोति सोऽपि दुर्गायाः वाहनभूतः सिंहः यस्य ईश्वरस्य वाहनतां प्राप्तवतः गोरपि वलीवर्दस्यापि सतः निकटे निरहङ्कारः संरम्भरहितः सः अम्बिकायाः पतिर्युष्मान् पायात् रक्षतु । अम्बिकाशब्दस्य मातरि प्रसिद्धत्वात् मातृरमण इति विरुद्धमतिकृदित्याह **अत्रेति** ।

अन्यत्तु केवलं समासगतञ्चेति यदुक्तं तत्र कैवल्येनोदाहृतम् । समासेनोदाहरति **श्रुतीति** । **विरहिवचनम्** । सुधया सान्द्रे तरङ्गिते विलोचने यस्याः सा स्त्री च दूरे वर्तते । मयूरशब्दयोग्यः समयश्च वर्षाकालः समुपागतः । अत्र मयूरकेकानुकूल इत्यत्रार्थे बर्हिनिर्ह्लादनार्ह इत्युक्तत्वात् समासगतं श्रुति-कटुत्वमित्यर्थः । च्युतसंस्कृत्यादिषु समासगतं दूषणमुदाहर्तव्यमित्याह **एवमिति** । तत्र च्युतसंस्कृति यथा-- **अन्यकारकवैयर्थ्यम्** । "अषष्ठचतृतीयास्थस्य"त्यादिना प्राप्तस्य दूषकः अन्यशब्दस्य कारकशब्दे परतः अकरणात् । एवमन्यदपि समासगतम् अन्यत्राप्येवमेवोह्यमित्यर्थः ।

**सारबोधिनी**--प्रपञ्चयति **यथा वेति** । **विरुद्धां धियमिति** । अम्बिकाशब्दस्य मातृवाचकत्वादिति शेषः । तदुक्तं नृसिंहपुराणे-"शक्तित्वाल्लोकमातृत्वादम्बिका त्वं भविष्यसीति" । स्पष्टमत्र दूषकताबीजम् ।

**अपास्य च्युतसंस्कारमसमर्थं निरर्थकम् ।**
**वाक्येऽपि दोषाः सन्त्येते पदस्यांशेऽपि केचन ।।५२।।**

केचन न पुनः सर्वे ।

**बालचित्तानुरञ्जनी**--उक्ताः दोषाः च्युतसंस्कारमसमर्थं निरर्थकञ्च परित्यज्य अन्ये वाक्येऽपि भवन्तीत्याह **अपास्येति** । वाक्यस्य च्युतसंस्कारत्वं न दोषः । पदद्वयस्य युगपत् असाधुत्वासंभवात्, संभवे वा पदद्वयस्य दुष्टत्वात् । वाक्यस्यासमर्थत्वं न, विवक्षितार्थासिद्धिप्रसङ्गात् । नापि निरर्थकत्वम् उन्मत्तो-क्तित्वप्रसङ्गात् । **केचनेति** । विशेषणकृत्यमाह **केचनेति** ।

**सारबोधिनी**–पददोषानेव वाक्ये निर्दिशति **अथास्येति**। साकाङ्क्षनानापदवृत्तिर्दोषो वाक्यदोषः। च्युतसंस्कारादित्रयाणां स्वभावादेवान्वयबोधस्वरूपायोग्यानामन्वयबोधने पदान्तरविरहप्रयुक्तत्वविरहेण साकाङ्क्षत्वाभावान्न वाक्यदोषत्वमिति तेषां वर्जनम्।

क्रमेणोदाहरणम्

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनतार्प्सीत्सममंस्त बन्धून्।
व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥१७०॥

स रातु वो दुश्च्यवनो भावुकानां परम्पराम्।
अनेडमूकताद्यैश्च द्यतु दोषैरसंमतान् ॥१७१॥

अत्र दुश्च्यवन इन्द्रः, अनेडमूको मूकबधिरः।

**बालचित्तानुरञ्जनी–क्रमेण** श्रुतिकट्वादिना। सः दशरथः वेदानधीतवान् देवान् पूजितवान् पितॄन् तर्पितवान् बन्धून् सम्मानितवान् कामक्रोधादिषड्वर्गं जितवान् नीतावरंस्त नीत्या व्यवहृतवानित्यर्थः। शत्रून् समूलघातं हतवान्। क्रियाकारकव्याप्तत्वात् श्रुतिकटुत्वं वाक्यदोषः। स दुश्च्यवनः इन्द्रः युष्मभ्यं कल्याणानां सन्ततिं रातु ददातु। अनेडमूकताद्यैः दोषैः शत्रून् द्यतु खण्डयतु। अत्र दुश्च्यवनादिशब्दानामिन्द्रादिपर्यायत्वेऽपि महाकविभिरुपेक्षितत्वात् अप्रयुक्तत्वं वाक्यदोष इत्याह **अत्रेति**।

**सारबोधिनी–सोऽध्यैष्टेति**। कामक्रोधलोभमोहद्वेषमात्सर्याणि[२३] षड्वर्गः। नन्वाख्यातवाक्यानां परस्परनिराकाङ्क्षत्वेन प्रत्येकं श्रुतिकटुत्वे कथं वाक्यदोषतेत्यत्र टीकाकृतः "व्यजेष्ट षड्वर्गमि"त्यत्रैव वाक्यदोषता, एकान्वयबोधकयोरिह सत्त्वात्। तत्प्रसङ्गेन सर्वपद्याभिधानमित्याहुः। वस्तुतस्तु–चकारबलादेकवाक्यत्वमस्त्येव। न चैवं "यस्य मित्राणि मित्राणी"त्यत्र चकारे सत्येकवाक्यत्वे कथं पदप्रकाश्यतेति वाच्यम्। एकवाक्यत्वे सत्यपि पदानां प्रत्येकं व्यञ्जकत्वानपायात्। अत्र वैयाकरणे वक्तरि कष्टत्वं गुण इत्यस्य स्वयं ग्रन्थकृता वक्ष्यमाणत्वेन भट्टिकाव्यस्य व्याकरणार्थनिरूपणैकतात्पर्यस्य पद्यमिदं श्रुतिकटुत्वे कथमुदाहृतमिति **न** जानीम इति **विद्यासागरोक्तं** दूषणं चिन्त्यम्। अप्रयुक्तमुदाहरति **स रात्विति**। रातु ददातु। द्यतु खण्डयतु। दुश्च्यवनपदमिन्द्रे अनेडमूकपदं मूकबधिरे पठितमपि कविभिरप्रयुक्तम्।

सायकसहायबाहोर्मकरध्वजनियमितक्षमाधिपतेः।
अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः ॥१७२॥

अत्र सायकादयः शब्दाः खड्गाब्धिभूचन्द्रयशःपर्यायाः शराद्यर्थतया प्रसिद्धाः।

**बालचित्तानुरञ्जनी**–हे अवनिप राजन् सायकः खड्गः सहायो यस्य तादृशो बाहुः यस्य, मकरध्वजेन समुद्रेण नियमितायाः क्षमायाः भूमेः अधिपतेस्ते श्लोको यशः, अब्जस्य चन्द्रस्य रुचिवत् भास्वरः सन् नितरां भाति। अत्र खड्गाद्यर्थाः शर-काम-क्षान्तिपङ्कजार्थैर्निहतार्था इति निहतार्थत्वं वाक्यदोष इत्याह **अत्रेति**।

**सारबोधिनी**—निहतार्थमाह **सायकेति**। सायकः शरः खड्गश्च। मकरध्वजः समुद्रः कामश्च क्षमाधिपतिः क्षमाधारी क्षान्तिश्च। अञ्जश्चन्द्रः, अब्जं पद्मम्। श्लोको यशः पद्यञ्च।

कुविन्दस्त्वं तावत्पटयसि गुणग्राममभितो
यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो।
शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा
तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥१७३॥

अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन्नुपश्लोक्यमानस्य तिरस्कारं व्यनक्तीत्यनुचितार्थः।

**बालचित्तानुरञ्जनी**—हे प्रभो, त्वं कुं पृथिवीं विन्दति लभत इति कुविन्दः। अभितः गुणानां समूहं पटुं करोषि। एते नग्नाः वन्दिनश्च प्रतिदिशं यशो गायन्ति। वनस्था इति पाठे किन्नराः। वनस्थौ किन्नरधीरावित्यभिधानात्। तथापि एवंविधवैभवे सत्यपि त्वत्कीर्तिस्त्वदङ्गनाभूता शरदि ज्योत्स्नावत् गौराणि स्फुटानि सर्वाङ्गाणि स्वरूपाणि तैः सुभगा सती विगतस्खलनं यथा स्यात् भ्रमति। अत्र कुविन्दपदात् तन्तुवायस्य, गुणग्रामपदात् तन्तुसमूहस्य, पटयसीति पदात् पटं करोषीत्यस्य, नग्नपदात् दिगम्बरत्वस्य, वनस्था इति पाठे कौपीनदानादिशीलत्वस्य, त्वत्कीर्तिर्भ्रमेत्यादिपदात् वराङ्गपर्यन्तमनाच्छादनस्य च प्रतीतेः वर्ण्यमानस्य राज्ञः पराभवप्रतिपादनात् वाक्यपर्यवसायित्वं दोष इत्याह **अत्रेति**।

**सारबोधिनी**—अनुचितार्थमाह **कुविन्देति**। कुं पृथ्वीं विन्दतीति कुविन्दो राजा, जातिविशेषस्तन्तुवायश्च। पटयसि पटुं पटं च करोषि। गुणग्रामो विद्यादानदामादयः सूत्रसमूहश्च। नग्नास्तव विवसनाश्चाच्छादनमावरणम्, वासश्च। **अत्रेति**। तथापीत्यनेन तन्तुवायत्वारोपात्तिरस्काराभिव्यक्तिः। न चात्र कुविन्दपदात्प्रथमं जातिविशेषोपस्थितौ निहतार्थत्व[२४]मिति प्रकरणवशादाशु यौगिकप्रतीतिः योगश्च "वाजिनामिक्षया योगाद्विश्वे देवा हि वाजिनः। प्रकृतांस्तुतान्वदेत्[२५]" श्रुत्या वाजिशब्दो हि यौगिक इत्यत्र श्रुत्या श्रवणमात्रेण वदेत् बोधयेत्। तन्न। तथा सति शोणितपदे निहतार्थत्वं न स्यात्। प्रकरणेनाशु यौगिकोपस्थितेः। वस्तुतस्तु जलदभुजगेत्यादौ गरलस्येवात्राप्यप्रकृतस्य जातिविशेषस्य व्यङ्ग्यत्वमेव।

प्राभ्रभ्राड्विष्णुधामाप्य विषमाश्वः करोत्ययम्।
निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥१७४॥

अत्र प्राभ्रभ्राड्विष्णुधामविषमाश्वनिद्रापर्णशब्दाः प्रकृष्टजलदगगनसप्ताश्वसंकोचदलानामवाचकाः।

**बालचित्तानुरञ्जनी**—अवाचकमुदाहरति **प्राभ्रेति**। अयं विषमाः सप्त अश्वाः यस्य सः सूर्यः, अभ्रैर्मेघैः भ्राजते शोभत इति प्राभ्राट् विष्णोः धाम पदं आकाशं यस्य एवंविधोऽपि सहस्राणि पाणयः

येषां तेषां कमलानां निद्रां सङ्कोचं पलायनपरां करोति, पद्मानि विकासयतीत्यर्थः। प्राभ्रेत्यादि पयोदरूपार्थस्यावाचकम्। धामपदमपि [विष्णु-] पदावाचकं तथाऽप्रतीतेः। सप्तसङ्कोचशब्दवाच्ययोः विषमनिद्राशब्दौ लाक्षणिकौ नेयार्थत्वात्। पर्णशब्दो जीर्णपत्रे रूढत्वेन वाक्यस्यावाचक इति सर्वेषामवाचकत्वादत्राह **अत्रेति**। पदकदम्बकस्य वाक्यत्वात् बहूनां पदानां दुष्टत्वे वाक्यदोषः, एकैकपदस्य दुष्टत्वे पददोष इति तत्राह **प्राभ्रभ्राडिति**। श्रुतिकटुत्वञ्च द्रष्टव्यम्।

**सारबोधिनी**—अवाचकमाह **प्राभ्रेति**। अत्र प्राभ्रविष्णुधामविषमाश्वनिद्रासहस्रपर्णपदानां सजलनिर्जलमेघसामान्यगगनभूतलपातालस्थानत्रयायुग्मसंख्यावच्छिन्नेन्द्रियवृत्तिनिरोधपत्रसहस्रवद्वाचकानां सजलमेघगगनसप्ताश्वसङ्कोचपद्मपरत्वादवाचकत्वम्। एते शब्दाः एष्वर्थेषु न सङ्केतितायत्ता इति। विषमाश्वः सूर्यः। विष्णुधाम विष्णुस्थानमाकाशं प्राप्य। आङ् पूर्वस्य आप्-धातोः रूपमिदम्। निद्रां मुद्रण पलायनपरायणां करोति नाशयति। किम्भूतं विष्णुधाम प्राभ्रभ्राट् प्रकृष्टजलदसदृशम्।

भूपतेरुपसर्पन्ती कम्पना वामलोचना।
तत्तत्प्रहरणोत्साहवती मोहनमादधौ ॥१७५॥

अत्रोपसर्पणप्रहरणमोहनशब्दा व्रीडादायित्वादश्लीलाः।

**बालचित्तानुरञ्जनी**—व्रीडालक्षणमश्लीलमुदाहरति **भूपतेरिति**। उपसर्पन्ती अभिगच्छन्ती शत्रुहननार्थं प्रतिकूलं लोचनं यस्याः तैस्तैः खड्गादिभिः प्रहरणं प्रहारः तदुत्साहवती भूपतेः व्यामोहनं शत्रूणामादधे चकार। अत्र उपसर्पणं रतार्थिन्या गमनं प्रस्थानं संभोगारंभेन एतेन व्यामोहनं पुरत इत्याद्यर्थप्रतीतेरश्लीलत्वमित्याह। एतदुपलक्षणं कम्पना कम्पमानात् [त्वात् ?] वामलोचना कान्ता वा।

**सारबोधिनी**—अश्लीलमाह **भूपतेरिति**। उपसर्पन्ती समीपमागच्छन्ती रतोद्यता च। कम्पना सेना कम्पयुक्ता च। वामं विरुद्धं शत्रुं प्रति कान्तञ्च, प्रहरणं मारणम् कामप्रसिद्धं स्त्रीपुरुषजघनताडनञ्च। मोहनं विपक्षसंमोहः निधुवनञ्च।

तेऽन्यैर्वान्तं समश्नन्ति परोत्सर्गञ्च भुञ्जते।
इतरार्थग्रहे येषां कवीनां स्यात्प्रवर्तनम् ॥१७६॥

अत्र वान्तोत्सर्गप्रवर्तनशब्दा जुगुप्सादायिनः।

**बालचित्तानुरञ्जनी**—जुगुप्सालक्षणमश्लीलमुदाहरति **त इति**। येषां कवीनां इतरैरुक्तस्यार्थस्य स्वीकारे प्रवर्तनं प्रवृत्तिः स्यात् ते कवयः अन्यैर्वान्तमन्नं अश्नन्ति, परोत्सर्गं पुरीषञ्च भुञ्जते। अत्र प्रवर्तनशब्दः अपानवायुनिर्गमे गूढः अतोऽश्लीलम्। वान्तोत्सर्गशब्दौ तु उच्चारणादेवाश्लीलावित्याह **अत्रेति**।

**सारबोधिनी**—**तेन्यैरिति**। प्रवर्तनं पूतिः पुरीषोत्सर्गश्च।

पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे।
भवति सपदि पावकान्वये हृदयमशेषितशोकशल्यकम् ॥१७७॥

अत्र पितृगृहमित्यादौ विवक्षिते श्मशानादिप्रतीतावमङ्गलार्थत्वम्।

**बालचित्तानुरञ्जनी**—अमङ्गललक्षणमश्लीलमुदाहरति । **पितृवसतिमिति** । कस्याश्चन स्नुषाया उक्तिः । अहं परिवारजनेन सह तां पितृवसतिं गृहं गच्छामि । यत्र वसतौ पावकैः शुद्धैरिष्टैरन्वये योगे सति सपदि मे हृदयं, अशेषितं निःशेषीकृतं नाशितं शोकरूपं श्वश्रूपारतन्त्र्यादिरूपं शल्यं यस्य तादृशं भवति । अत्र पितृवसतिं ...भूमिम् पावकान्वये चिताग्निस्पर्शे सति अशेषित निरवशेषीकृतं गृहकर्मादि-दुःखग्रन्थिर्यस्येत्यम...ार्थत्वमित्याह **अत्रेति** ।

**सा...बोधिनी**—पितृवसतिः पितृगृहं श्मशानञ्च पावकः शुद्धिकारको वह्निश्च । ननु पावक-शब्दस्य कथममङ्गलार्थत्वं व...ह्निशब्दस्येवातथात्वादिति चेन्न, यत्रेत्यनेन श्मशानाकृष्टया तत्सम्बन्धिनो वह्नेश्चिताग्नित्वप्रतीतेः ।

सुरालयोल्लासपरः प्राप्तपर्याप्तकम्पनः ।

मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ।।१७८।।

अत्र किं सुरादिशब्दाः देवसेनाशरविभूत्यर्थाः किं मदिराद्यर्था इति सन्देहः ।

**बालचित्तानुरञ्जनी**—सन्दिग्धमुदाहरति **सुरेति** । रणभुवि स्थितो भूपः वर्ण्यते । सुरालयोल्लासपरः स्वर्गोद्धावनतात्पर्यवान् प्राप्तपर्याप्तकम्पनः अधिगतपूर्णसेनः मार्गणप्रवणः शरेष्वनुरक्तः भास्वद्भूतिः उद्धतैश्वर्यः एष राजा विलोक्यताम् । अत्र मदिरागृहोत्साहवान् प्राप्तपर्याप्तवलनः धनान्वेषणपरः उज्ज्वलभस्मेत्याद्यर्थान्तरसंभवात् सन्देहमाह **अत्रेति** ।

**सारबोधिनी**—सन्दिग्धमाह **सुरेति** । सुरालयो देवगृहं मदिरागृहञ्च । कम्पना सेना कम्पनं कम्पश्च मार्गणो बाणो याचनञ्च, भूतिः सम्पत्तिर्भस्म च । अत्र प्रकरणाद्यभावात् स्तुतिर्निन्दा वेति संशयः ।

तस्याधिमात्रोपायस्य तीव्रसंवेगताजुषः ।

दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ।।१७९।।

अत्राधिमात्रोपायादयः शब्दा योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः ।

**बालचित्तानुरञ्जनी**—अप्रतीतमुदाहरति **तस्येति** । अत्र कस्यचिन्नायकस्य नायिकया सह संयोजने कृतप्रयत्नं मित्रं प्रति मित्रस्योक्तिः । हे सखे अधिमात्रोपायस्याधिकपरिमाणप्रयत्नस्य अधिमात्रोपायस्य दृढः उत्तमो वा उपायो यस्य तीव्रसंवेगताजुषः प्रबलवैराग्यसेविनस्तस्य नायकस्य प्रियप्राप्तौ स्त्रीरूप-प्रियप्राप्तौ दृढभूमिः सर्वात्मना निश्चलो यत्नः उत्साहः सफलीकृतः । अत्राधिमात्रतीव्रसंवेगदृढभूमीत्येते शब्दाः योगशास्त्र एव प्रसिद्धा[-द्धत्वा-]दप्रतीता इत्याह **अत्रेति** ।

**सारबोधिनी**—अप्रतीतमाह **तस्येति** । सखे तस्य स यत्नः फलितः । प्रियप्राप्तौ आत्मसाक्षात्कारे सति । तस्य कीदृशस्य अधिमात्रोपायस्य । योगिनस्तावत् त्रिविधा भवन्ति—मृदूपायो मध्योपायो अधि-मात्रोपायश्च । ते च प्रत्येकं मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेगश्चेति त्रिविधाः । एवं नव भेदा भवन्ति । तेष्वधिमात्रोपायस्तीव्रसंवेगः [योगी] सिद्ध इत्युच्यते । अधिमात्रत्वञ्च सन्निहितसमाधिलाभत्वम् । तीव्रत्वं परमत्वं संवेगो वैराग्यं उपायो यमनियमादिः । दृढभूमिर्दृढसंस्कारः । काभिरपि चित्तवृत्तिभिरभिभवितुं न शक्यत इत्यर्थः । दोषबीजमाह **अत्रेति** ।

ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः ।
करोति खादनं पानं सदैव तु यथा तथा ।।१८०।।

अत्र गल्लादयः शब्दा ग्राम्याः ।

**बालचित्तानुरञ्जनी**—ग्राम्यमुदाहरति **ताम्बूलेति** । ताम्बूलेन भृतः पूर्णः गल्लः कपोलो यस्य स अयं मानवः भल्लं शोभनं जल्पति । सदैव तु यथा तथा खादनं पानं च करोति । अत्र गल्लादयः शब्दाः केवलं लोकोपलालितत्वाद् ग्राम्या इत्याह **अत्रेति** ।

**सारबोधिनी**—ग्राम्यमाह **ताम्बूलेति** ।

वस्त्रवैदूर्यचरणैः क्षतसत्त्वरजःपरा ।
निष्कम्पा रचिता नेत्रयुद्धं वेदय साम्प्रतम् ।।१८१।।

अत्राम्बररत्नपादैः क्षततमा, अचला भूः कृता नेत्रद्वन्द्वं बोधयेति नेयार्थता ।

**बालचित्तानुरञ्जनी**—नेयार्थमुदाहरति **वस्त्रवैदूर्येति** । कश्चन नायकः नायिकां बोधयति । हे बाले साम्प्रतं निष्कम्पा अचला, भूरित्यर्थः । वस्त्रस्य अम्बरस्य, आकाशस्येत्यर्थः, तस्य वैदूर्यं रत्नविशेषः, आदित्य इत्यर्थः, तस्य चरणाः पादाःकिरणा इत्यर्थ, तैः क्षतं सत्त्वरजसोः गुणयोः परं तमोगुणो यस्याः सा अन्धकाररहिता रचिता कृता । अतः नेत्रयुगं अक्षियुग्मं वेदय बोधय, विसारयेत्यर्थः । रात्रिर्गता उत्तिष्ठतेति भावः । अत्र वस्त्रादिशब्दानां एकार्थवाचकत्वादिसम्बन्धेन आकाशादिबोधकत्वेन नेयार्थता इत्याह **अत्राम्बरेति** ।

**सारबोधिनी**—नेयार्थमाह **वस्त्रेति** । अत्र वस्त्रवैदूर्यादिपदैरेव रत्नादिशब्दा लक्ष्यन्ते । रूढिप्रयोजनाभावाच्च नेयार्थता ।

धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ।।१८२।।

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति सम्बन्धे क्लिष्टत्वम् ।

**बालचित्तानुरञ्जनी**—क्लिष्टमुदाहरति **धम्मिल्लस्येति** । कुरङ्गशावाक्ष्याः हरिणपोतनेत्रनिभनेत्रायाः कस्याश्चित् अपूर्वा अद्भुता बन्ध व्युत्पत्तिः बन्धरचना यत्र तस्य, पूर्वमविद्यमाना बन्धस्य ग्रथनस्य व्युत्पत्तिश्चातुर्यं यत्रेति वा । एवंविधस्य धम्मिल्लस्य केशपाशस्य शोभां कान्तिं प्रेक्ष्य कस्य पुरुषस्य मानसं निकामं अत्यर्थं न रज्यति अनुरक्तं भवति । अपि तु सर्वस्येत्यर्थः । क्लिष्टतां प्रकाशयितुं कविविवक्षितमन्वयमाह **अत्रेति** । यथानिर्दिष्टस्य वाक्यस्य एवं दूरान्वयत्वेन क्लिष्टत्वमित्यर्थः ।

**सारबोधिनी**—क्लिष्टमाह **धम्मिल्लस्येति** । अत्रासत्तिज्ञानविलम्बादन्वयबोधविलम्बो दूषकताबीजमिति प्रागुक्तमेव ।

न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः ।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥१८३॥

अत्रायमेव न्यक्कार इति वाच्यम् । उच्छूनत्वमात्रं चानुवाद्यम्, न वृथात्वविशेषितम् । अत्र च शब्दरचना विपरीता कृतेति वाक्यस्यैव दोषो न वाक्यार्थस्य ।

**बालचित्तानुरञ्जनी**—अविमृष्टविधेयांशमुदाहरति **न्यक्कार इति** । रावणस्य स्वपत्नीं प्रति वचनम् । अयमेव न्यक्कारः तिरस्कारः यदरय इति । अरयः सन्तीति यत् तत्रापि अरिष्वपि असौ रामः तापसः सोऽपि तापसोऽपि अत्रैव सन्निकट एव राक्षसकुलं निहन्ति । अहो आश्चर्य, तथापि रावणः जीवति । । शक्रजितं धिक् धिक् ।

तेनापि किं प्रयोजनं प्रबोधितं प्रबोधनं तद्विद्यते यस्य तेन प्रबोधकर्मीकृतेनेत्यर्थः । कुम्भकर्णेन वा किम् ? न किमपि प्रयोजनमित्यर्थः । स्वर्ग एव ग्रामटिका स्वल्पग्रामः तस्य लुण्ठनेन वृथोच्छूनाः तैरेभिर्मम भुजैर्न [किमपि प्रयोजनमित्यर्थः ।] । अरातिसद्भावमनूद्य स्वस्य न्यक्कारता विधेया । अत्र एतद्विपरीतवाक्यवृत्तिरिति अविमृष्टविधेयांशत्वम् । तथा चोक्तम्

अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् ।
न ह्यलब्धास्पदं किञ्चित्कुत्रचित्प्रतितिष्ठति ॥

इत्याशयेनाह **अत्रेति** । पदेष्वविमृष्टविधेयांशमाह **उच्छूनतामात्रमिति** । अत्रोच्छूनत्वमुद्दिश्य वृथात्वं विधेयम् । तस्यैवोद्देश्यविशेषणत्वेन प्रक्षेपादविमृष्टविधेयत्वम् । ननूद्देश्यविधेयभावस्यार्थदोषत्वान्न वाक्यदोषत्वमित्यत आह **अत्र त्विति** । शब्दरचनावैपरीत्येऽपि अर्थस्य तावदवष्टम्भाद्वाक्यदोष एवेति भावः ।

**सारबोधिनी**—विधेयाविमर्शमाह **न्यक्कार इति** । **प्रबोधितवतेति** । अत्र णिजन्ताद्भावे क्तः, ततो मतुप् । न तु क्तवतुः । कर्मणि तस्यासाधुत्वात् । ग्रामटिका स्वल्पो ग्रामस्तद्वेदितुं [?]जीवतीति काक्वा न जीवतीत्यर्थः । अयं रिपुसम्बन्धः न्यक्कारो निन्दा अन्येषां तु पराभवादिर्मम तु रिपुसम्बन्ध एव न्यक्कारः । अरय इति नैको द्वौ वा । पूर्वमेकोऽपि नासीत्सम्प्रति युगपदेव बहवो जाताः । तापस इति शस्त्रानभिज्ञत्वं व्यज्यते । तेनातिन्यक्कारः । अत्रैव मत्समीप एव । ततोऽपि न तदाधिक्यं कुलं बालवृद्धस्त्रीषु नैकमपि त्यजेत् । धिग्धिगिति वीप्सायां निन्दातिशयः । शत्रोर्भुजद्वयं मम बहवो भुजास्तत्रापि वैपुल्यमित्यादि च व्यज्यते । **अत्रेति** । अयं रिपुसम्बन्धस्तत्र न्यक्कारत्वं विधीयते । तत्रानूद्यविधेययोः पौर्वापर्योपादानेनैव तथा प्रतिपत्तिः । तदुक्तम्

"यच्छब्दयोगः प्राथम्यं सिद्धत्वञ्चाप्यनूद्यता ।
तच्छब्दयोग औत्तर्यं साध्यत्वञ्च विधेयता" ॥ इति । [भट्टवार्तिकम्]

अनूद्यविधेयभावः संसर्गो विशेषणविशेष्य इवापदार्थोऽपि वाक्यार्थप्रतीतौ भासते। वस्तुतस्तु विशेषणादिकं स्वरूपतः प्रतीतिविषयो भवति न तु विशेषणविशेष्यत्वादिनेति। **उच्छूनत्वमात्रञ्चेति**। अयं तु समासगतत्वेन पददोष एव प्रसङ्गादुक्तो न वाक्यदोषः। मिथ्यामहिमत्ववदिति टीकाकृतः। नन्वनूद्यविधेयभावानापत्तिरर्थयोरेवेति कथं वाक्यदोषतेत्यत आह **शब्दरचनेत्यादि**। रचनाया वाक्यधर्मत्वेन तदन्वयव्यतिरेकानुविधानात् दोषतैवेत्यर्थः।

यथा वा

अपाङ्गसंसर्गि तरङ्गितं दृशोर्भ्रुवोररालान्तविलासि वेल्लितम्।
विसारि रोमाञ्चनकञ्चुकं तनोस्तनोति योऽसौ सुभगे तवागतः ॥१८४॥

अत्र योऽसाविति पदद्वयमनुवाद्यमात्रप्रतीतिकृत्।

**बालचित्तानुरञ्जनी**—अत्रैव व्यक्तिविवेककाररीत्या यत्तच्छब्दयोः स्थितिनिरूपणार्थमुदाहरणान्तरमाह **अपाङ्गेति**। भो सुभगे यस्तव दृशोः अपाङ्गसंसर्गि नेत्रान्तसंस्पर्शतरङ्गितं तरङ्गणं तनोति भ्रुवोः अरालान्तविलासि वक्रान्तशोभि वेल्लनं विलासं तनोति तनोः विसारि प्रसरणशीलं रोमाञ्चनकञ्चुकं रोमाञ्चनमेव कञ्चुकं तनोति असावागत इत्यर्थः। अत्र यच्छब्दः अनुवाद्यार्थः अदःशब्दो विधेयार्थश्च विवक्षितः, तदुभयं न सिद्ध्यति। **योऽसाविति**। सहोच्चारणेन अनुवाद्यमात्रप्रतीतिजनकत्वाद्विधेयांशप्रतिपादकतदादिशब्दानुपादानेन साकांक्षत्वादविमृष्टविधेयांशत्वमित्याह **अत्रेति**।

**सारबोधिनी**—सत्यामपि साध्व्यां पदरचनायां क्वचिद्विधेयत्वानुपस्थित्याऽपि तद्दोषत्वम्। तदुदाहरति **यथा वेति**। **कञ्चुकमिति**। सर्वाङ्गव्यापनाद्विसारि। अत्र हि यस्तरङ्गितादिकं तनोति, असौ समागत इत्यनूद्यविधेयभावो विवक्षितः। न च तथा प्रतिपत्तिः। यतो यच्छब्दसमीपोपात्ता अदसादयः प्रसिद्धिमात्रपरामर्शकास्तदाह **अनूद्यमात्रप्रतीतिकृदिति**।

तथाहि—प्रक्रान्तप्रसिद्धानुभूतार्थविषयस्तच्छब्दो यच्छब्दोपादानं नापेक्षते। क्रमेणोदाहरणम्—

कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्।
अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः ॥१८५॥

द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥१८६॥

उत्कम्पिनी भयपरिस्खलितांशुकान्ता ते लोचने प्रतिदिशं विधुरे क्षिपन्ती।
क्रूरेण दारुणतया सहसैव दग्धा धूमान्धितेन दहनेन न वीक्षितासि ॥१८७॥

यच्छब्दस्तूत्तरवाक्यानुगतत्वेनोपात्तः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते। यथा

साधु चन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके ।
उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनः ॥१८८॥

प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः । यथा अत्रैव श्लोके आद्यपादयोर्व्यत्यासे । द्वयोरुपादाने तु निराकाङ्क्षत्वं प्रसिद्धम् । अनुपादानेऽपि सामर्थ्यात्कुत्रचिद् द्वयमपि गम्यते । यथा

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां जानन्ति ते किमपि तान् प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥१८९॥

अत्र य उत्पत्स्यते तं प्रतीति ।

**बालचित्तानुरञ्जनी**--ननु यत्तच्छब्दयोर्नैरपेक्ष्यस्यापि दर्शनात्कथं तदभावेनाविमृष्टविधेयांशत्वमित्याशङ्क्य नैरपेक्ष्यविषयविशेषो न सर्वत्रेति प्रतिपादयितुमाह **तथा हीति** । प्रक्रान्तार्थः प्रसिद्धार्थो वा अनुभूतार्थो वा वाच्यत्वेन विषयो यस्येति विग्रहः । तत्र प्रक्रान्तार्थमुदाहरति **कातर्यमिति** । केवला शौर्यरहिता नीतिः कातर्यं केवलं नीतिरहितं शौर्यं श्वापदचेष्टितम् । अतः कारणात् सोऽतिथिः समेताभ्यां सिद्धिं कार्यसिद्धिमन्वियेष । अत्रापि अतिथिनाम्नो राज्ञः प्रक्रान्तत्वात्तद्वाचकस्तच्छब्दो यच्छब्दं नापेक्षते ।

प्रसिद्धार्थमुदाहरति **द्वयमिति** । कपालिनः ईश्वरस्य प्रार्थनया याचनया संप्रति इदानीं द्वयं शोचनीयतां शोच्यत्वं गतम् चन्द्रस्य कान्तिमती सा कला अस्य लोकस्य नेत्रकौमुदी त्वं च । अत्र सेति तच्छब्दः शशिकलायाः प्रसिद्धत्वात् यच्छब्दोपादानं नापेक्षते ।

अनुभूतार्थमुदाहरति **उत्कम्पिनीति** । वासवदत्तादाहाद्याकर्णनप्रवृद्धशोकस्य वत्सराजस्योक्तिः । हे वासवदत्ते ! उत्कम्पिनी सकम्पा भयपरिस्खलितांशुकांता भयेन परिस्खलितः अंशुकान्तो यस्याः सा, विधुरे मयि सन्निहिते ते अनुभूते लोचने प्रतिदिशं क्षिपन्ती धूमान्धितेन क्रूरेण दहनेन न दारुणतया सहसैव दग्धासि । अत्र ते अनुभूते इति अनुभूतलोचनविषयस्तच्छब्दो यच्छब्दं नापेक्षते, तच्छब्दस्य यच्छब्दानपेक्षामभिधाय यच्छब्दस्यापि विषयविशेषे तच्छब्दानपेक्षायामाह **यच्छब्दस्त्विति** । **यथेति** । चन्द्रमसि विषये पद्मैरुचितं कृतं इति पूर्वो वाक्यार्थः । अभिरामताधिके शोभाधिके सति यन्मीलितं सङ्कुचितं जयशालिकामिनीमुखे विद्यमाने उद्यता उदयं कुर्वता तेन चन्द्रमसा पुनः साहसमनुष्ठितम्, अत्र यन्मीलितमिति उत्तरवाक्यस्थो यच्छब्दः तच्छब्दं नापेक्षते । कुत इत्यपेक्षायां तस्य हेतुमात्रकथनप्रवृत्तत्वात्तत्सापेक्षस्थलमाह **प्रागिति** । पूर्ववाक्यवर्ती यच्छब्दः तच्छब्दोपादानमन्तरेण साकाङ्क्षः, न वाक्यार्थपर्यवसायीत्यर्थः । उदाहरति **यथात्रैवेति** । प्रथमद्वितीयपादयोः । कविमुखोद्गते पाठे निरपेक्षत्वमाह **द्वयोरिति** । द्वयोर्यत्तच्छब्दयोरित्यर्थः । **कुत्रचिदुभयोरनुपादानेऽपि** तत्प्रतीतिमाह **अनुपादान इति** । तदुदाहरति **ये नामेति** । प्रारंभे विनयप्रदर्शनमन्ततः कठिनत्वं गर्वोद्धत्यञ्च दर्शयितुमिदं पद्यम् । **ये**

केचिन्नाम विद्वांसः नः अवज्ञां प्रथयन्ति ते योगिनः मूर्खा द्वन्द्वं किमपि न जानन्ति अद्वयाख्यं वस्तु जानन्ति [इति] सोल्लुण्ठवचनं, तान्प्रति एष यत्नः प्रकरणारम्भलक्षणो न भवति किन्तु मम समानधर्मा कोऽपि उत्पत्स्यते। हि यस्मात् अयं कालः निरवधिः पृथ्वी च विपुला। यत्र साधर्म्यशाली य उद्भविष्यति तं प्रति प्रकरणारम्भ इति सामर्थ्याद् गम्यत इत्याह **अत्रे**ति।

**सारबोधिनी**—ननु यत्तदोरेकतरोपादानेऽपि निराकाङ्क्षा प्रतीतिः स्यादेवेत्यत्रापि केवलयत्पदात्तथाऽस्त्विति हृदि कृत्वाऽऽह **तथा होति**। यत्तदोश्च परस्परनैरपेक्ष्यं प्रतिनियतस्थान एव, न सर्वत्रेति दर्शयन् प्रकृते विधेयतानुपपत्तिं द्रढयति **प्रक्रान्तेति**। प्रक्रान्तः पूर्वप्रतीतिविषयः। प्रक्रान्तमुदाहरति **कातर्यमिति**। केवला नीतिः कातर्यमित्यन्वयः। शौर्येऽपि केवलत्वसंबन्धः। सोऽतिथिर्नाम राजा। प्रसिद्धमुदाहरति **द्वयमिति**। अनुभूतमुदाहरति **उत्कम्पिनीति**। ते मदनुभूतशोभाविशेषे। तथा यच्छब्देऽपि तच्छब्दनैरपेक्ष्यं प्रतिनियतस्थान एव, प्रकृते तु न तथेति दर्शयति **यच्छब्द इति**। उत्तरवाक्यार्थगतत्वेन तदन्वयप्रतियोग्युपस्थापकत्वेन। उत्तरवाक्यगतत्वेनेति सुगमः पाठः। **प्रसिद्धमिति**। "यदुवाच न तन्मिथ्ये"त्यादौ। **ये नामेति** ते किमपि जानन्ति। अपि तु किमपि न जानन्तीत्यर्थः। उत्पत्स्यत इत्यत्र मानमाह **काल इति**। अस्तीत्यत्र मानमाह **विपुलेति**।

एवं च तच्छब्दानुपादानेऽत्र साकाङ्क्षत्वम्। न चासाविति तच्छब्दार्थमाह।

असौ मरुच्चुम्बितचारुकेसरः प्रसन्नताराधिपमण्डलाग्रणीः।
वियुक्तरामातुरदृष्टिवीक्षितो वसन्तकालो हनुमानिवागतः॥१९०॥

अत्र हि न तच्छब्दार्थप्रतीतिः।

**बालचित्तानुरञ्जनी**—हृच्छं यच्छब्दविधां [?] कृत्वा 'योऽसौ सुभगे तवागत'इति प्रश्रुतेन तदभावमाह **एवञ्चेत्यादि**। अत्र योऽसौ सुभग इत्यत्र यच्छब्दस्य पूर्ववाच्यत्वात् यच्छब्दसन्निहितस्य अदःशब्दस्य प्रसिद्धार्थत्वात्तच्छब्दानुपादाने साकांक्षत्वादविमृष्टविधेयांशतेत्यर्थः। ननु योऽसावित्यत्र यच्छब्दानन्तरमसाविति योऽयमदःशब्दः संनिहितोऽपि स एव तच्छब्दार्थो भविष्यति को दोष इत्यत आह **न चेति**। असाविति शब्दस्य रूपं तच्छब्दार्थेनाहेति सम्बन्धः। अदःशब्दस्य तच्छब्दार्थत्वाभावे उदाहरणमाह **असाविति**। असौ वसन्तकालः हनुमानिव आगतः। विशेषणद्वारा उभयोः साम्यमाह, मरुता वायुना चुम्बिताः स्पृष्टाः चारवः केसरा बकुलवृक्षा यस्मिन्, पक्षे मरुता हनुमत्पित्रा चुम्बिताः आघ्राताः केसराः सटाः यस्य। प्रसन्नताराधिपमण्डलं चन्द्रबिम्बं यस्मिन्, पक्षे प्रसन्नः बालिवधेन सुमुखः यत्ताराधिपः सुग्रीवः तस्य मण्डले राष्ट्रे अग्रणीः मुख्यः। वियुक्ताः रामाः ताभिः आतुरदृष्ट्या व्याकुलदृष्ट्या वीक्षितः, पक्षे सीतया वियुक्तो यो रामचन्द्रः तेन आतुरदृष्ट्योत्सुकदृष्ट्या वीक्षितः। हनुमानिवासावागत इति प्रत्यक्षेण निर्दिश्यमानत्वात्कथं तच्छब्दार्थप्रतीतिः? तस्मात् अदसः तदभिधानार्थानुपपत्तिरित्याह **अत्रे**ति।

**सारबोधिनी**—**एवञ्चेति**। यच्छब्दस्योत्तरवाक्यगतत्वं विना द्वयोरुपादानमनुपादानं च साकाङ्क्षत्वमेवेत्यर्थः। नन्वत्र तच्छब्दपर्यायस्यादसः प्रयोगान्निराकाङ्क्षत्वमेवेत्याशङ्क्य निराकरोति **न चासाविति**। **असाविति**। मरुद्दक्षिणानिलः हनुमत्पिता च केसरो बकुलः स्कन्धलोमापि, तारा नक्षत्राणि वानराधिप-

महिषी च, अधिपश्चन्द्रः सुग्रीवश्च, रामा स्त्रियो रामो राघवश्च । अत्र होति । तथा च पुरोवर्तित्वमात्र-मदःशब्दार्थं इति भावः ।

प्रतीतौ वा -

करवालकरालदोःसहायो युधि योऽसौ विजयार्जुनैकमल्लः ।
यदि भूपतिना स तत्र कार्ये विनियुज्येत ततः कृतं कृतं स्यात् ॥१६१॥

अत्र स इत्यस्यानर्थक्यं स्यात् ।

अथ

योविकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
आत्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥१६२॥

इतीदंशब्दवददःशब्दस्तच्छब्दार्थमभिधत्ते, इति उच्यते ।

**बालचित्तानुरञ्जनी**-यदि च तामपह्नुत्य गतानुगतिकत्वादनयोरेकार्थत्वभ्रमः तदभ्युपगम्यापि ब्रूम इत्याह **प्रतीताविति**। करवालेन खड्गेन करालः भयङ्करो यः दोः बाहुः स एव सहायो यस्य एवंविधो योऽसौ युधि विजयस्य अर्जने सम्पादने एकमल्लः प्राधान्येन समर्थः स तत्र कार्ये भूपतिना यदि नियुज्येत, तदा कार्यं कृतं स्यात्, सम्यक्कृतं स्यात् । अदःशब्दस्य तच्छब्दार्थत्वे स इत्यस्यानर्थक्यं स्यात् । अदःशब्देनैव तत्कार्यसिद्धेः, इत्याह **अत्रेति** । नन्विदंशब्दस्य तच्छब्दसादृश्यात् अभियुक्तसंयोगोऽस्ति तद्वत् अदः शब्दस्यापि भवतु तच्छब्दार्थत्वं, नार्थान्तरत्वम्, इदमेतददःसमानयोगक्षेमत्वादिति शङ्कते **अथेति**। भो ईश अविकल्पं निःसंशयं यथा तथा निखिलं अर्थमण्डलं संपूर्णं प्रमेयजातं भवद्वपुस्त्वेन अद्वितीयत्वेन पश्यति । नित्यसुखिनोऽस्य तस्येत्यर्थः । योगिनः आत्मपक्ष ऐक्यं तेन परितः पूरिते जगति कुतो भयम् न कुतोऽपीत्यर्थः । 'द्वितीयाद्वै भयं भवती'ति श्रुतेः । अत्र यथा अस्येति इदंशब्दः तच्छब्दार्थ-मभिधत्ते तथा योऽसावित्यत्रापि अदःशब्दः तच्छब्दार्थमभिधत्तां इत्याह **इतीदमिति**।

**सारबोधिनी**—अदःशब्दस्य तच्छब्दपर्यायत्वे बाधकमाह **प्रतीतौ वेति**। **करवालेति**। विजयो-ऽर्जुनः पाण्डवभेदोऽर्जुनः कार्तवीर्यश्च । यद्वा विजय इति सप्तम्यन्तम् । ननु न वयमदःशब्दस्यार्थान्तरं निरस्यामः, किंत्विदंशब्दवत्तच्छब्दार्थताप्यस्तीत्याह **अथेति**। य इदमर्थमण्डलं प्रमेयजातं विकल्पं नानाकल्प-नायोगि भवद्वपुरिति पश्यतीत्यभेदेन सम्बन्धः, यद्वा अविकल्पं भेदशून्यं यद्वा निःसन्देहम् । स्वात्मेति । ऐकात्म्यदर्शन इति भावः ।

तर्ह्यत्रैव वाक्यान्तरे उपादानमर्हति न तत्रैव । यच्छब्दस्य हि निकटे स्थितः प्रसिद्धिं परामृशति । यथा

यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥१६३॥

इत्यत्र तच्छब्दः ।

**बालचित्तानुरञ्जनी**-अदःशब्द इत्युपलक्षणम् । एतच्छब्दस्यापि दूषयति **तर्हीति** अत्रैव योऽविकल्पमित्यादाविव, अपाङ्गसंसर्गीत्यादिवाक्यान्तरेऽपि तच्छब्दाद् व्यवधानेनोपादानमर्हत्यदःशब्दः, न तत्रैव यत्र तच्छब्दस्तत्समीपे उपादानं नार्हतीत्यर्थः । ननु तत्समीपे उपादानमस्तु को दोषः, तत्राह **यदिति** । स्थितः अदःशब्द इति शेषः । यच्छब्दनिकटे अदसः उपादाने अनूद्यत्वमेव स्यात्, प्रसिद्धिपरामर्शान्न विधेयत्वमिति न दोष इत्यर्थः । यच्छब्दनिकटे पठितस्य तच्छब्दस्यापि प्रसिद्धार्थत्वं किं पुनरदःशब्दस्येति कैमुतिकन्यायमभिप्रेत्य उदाहरति **यथेति** । अस्य राज्ञः तत्प्रसिद्धं यदूर्जितं अत्युग्रं क्षात्रं तेजोऽस्ति तदा अक्षैर्दीव्यता क्रीडां कुर्वता अनेन राज्ञा नूनं राज्यवत् तदपि तेजो हारितम् । अत्र यत्तदिति यच्छब्दनिकटस्तच्छब्दः प्रसिद्धिपरामर्शकः अन्यथा पुनस्तच्छब्दोपादानमनर्थकं स्यादित्यभिप्रेत्याह **इत्यत्रेति** । न चैवं सति 'यः स पापभाक्' इत्यत्रापि तच्छब्दः प्रसिद्धार्थः स्यादिति वाच्यम् । 'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभागि'त्यत्र यच्छब्दसंनिधाने पठितस्यापि तच्छब्दस्य पूर्ववाक्यगतयच्छब्दसंबन्धित्वेनोपादानात्प्रसिद्धय परपरामर्शकत्वात् ।

**सारबोधिनी--तर्हीति** । अयमभिसन्धिः-न सार्वत्रिकमिदमेतददःशब्दानां तच्छब्दसमानार्थत्वम् किन्तु यच्छब्दनिर्दिष्टवाक्यार्थपरामर्श एव । सोऽपि यच्छब्दस्य विहितनिर्देशे भिन्नविभक्तिनिर्देशे च भवति नान्यत्रेति । अत एव यच्छब्दनिकटवर्तित्वेन तच्छब्दस्य परामर्शकत्वं दर्शयति **यच्छब्दस्येति । तच्छब्द** इति । यद्यत्र तच्छब्दः प्रसिद्धिं न परामृशेत् तदा द्वितीयं तच्छब्दोपादानं निरर्थकं स्यादिति भावः । एवमदःशब्दादीनामपि तथात्वे प्रकृते विधेयत्वानुपपत्तिः सिद्धैव । निकटे स्थितिः समानलिङ्गविभक्तिभेदान्न प्रसिद्धिं बोधयति किन्तु विधेयत्वम् । एवं विच्छेदोऽपीति । परदारापहर्ता यः स स्वर्गं नाधिगच्छतीत्यत्र यत्पदविच्छेदात् । किं च एकत्र विधेयत्वबोधकस्य नान्यत्र प्रसिद्धिपरामर्शकता । यथा-

न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ।

अत्र हि स इत्यस्य पूर्ववत्पदार्थविधेयत्वावगमकस्य उत्तरत्रापि तथेति न प्रसिद्धिपरामर्शकता । अत एव तच्छब्दान्तरानुपादानेऽपि निराकांक्षा प्रतीतिरिति ।

ननु कथं

कल्याणानां त्वमसि महसां भाजनं विश्वमूर्ते
धुर्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद ।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय ॥१६॥

अत्र यद्यदित्युक्त्वा तन्मे, इत्युक्तम् । उच्यते—यद्यदिति येन केनचिद्रूपेण स्थितं सर्वात्मकं वस्त्वाक्षिप्तं तथाभूतमेव तच्छब्देन परामृश्यते । यथा वा

किं लोभेन विलङ्घितः स भरतो येनैतदेवं कृतं
मात्रा स्त्रीलघुतां गता किमथ वा मातैव मे मध्यमा ।
मिथ्यैतन्मम चिन्तितं द्वितयमप्यार्यानुजोऽसौ गुरु–
र्माता तातकलत्रमित्यनुचितं मन्ये विधात्रा कृतम् ।।१९५।।

अत्रार्यस्येति तातस्येति च वाच्यम् न त्वनयोः समासे गुणीभावः कार्यः । एवं समासान्तरेऽप्युदाहार्यम् ।

**बालचित्तानुरञ्जनी**—ननु यत्तदोर्नित्यसम्बन्ध इति न्यायात् प्रागुपात्तो यच्छब्दः तच्छब्दोपादानं विना साकांक्ष इति यदुक्तं तस्य व्यभिचारं भवभूतिप्रयोग आशङ्कते **नन्विति** । हे भगवन् ईश ! इह लोके त्वं महतां कल्याणानां ईशिषे । "अधीगर्थदयेशां कर्मणी"ति कर्मणि षष्ठी । कल्याणानि त्वदधीनानीत्यर्थः । अत एव त्वं पुण्यां लक्ष्मीं विधत्से ददासि भक्तेभ्यः । अतः प्रथमं नमस्कारानन्तरं हे देव मयि दृशं कृपादृष्टिं देहि प्रसीद । नम्रस्य मे यद्यत्पापमस्ति तत्प्रतिजहि स्फोटय । हे जगन्नाथ ! भूयसे मङ्गलाय भद्रं भद्रं वितर । अत्र यद्यत्पापमिति वीप्सया यच्छब्दस्य द्विरुपादानम् । तन्मे, इति तच्छब्दस्य सकृदुपादानं च, अतोऽन्यतरस्य यच्छब्दस्य संबन्धित्वेन तच्छब्दान्तरानुपादानाद् व्यभिचार इत्याशयेनाह **अत्रेति** । यद्यत्पापमित्यत्र पापजातीयमेकमेव गृह्यते, वीप्सा तु अवान्तरप्रकारविषया, अतस्तन्म इत्यत्र एकस्य तच्छब्दस्योपादानमुचितमिति न व्यभिचार इति परिहरति **उच्यत इति** । यदा तु व्यक्तिविवक्षा तदा तन्म इत्येव भवतीति द्रष्टव्यम् । एवञ्च यत्तदौ विचार्य अविमृष्टविधेयांशस्योदाहरणान्तरमाह **यथेति** । स भरतः लोभेन विलङ्घितः आक्रान्तः किम् ? स इति येन भरतेन कर्त्रा मात्रा करणभूतया एतदेवं एतद्राज्याभिषेकप्रत्यूहरूपं कृतं स प्रख्यातसौशील्यो भरतः लोभेन राज्यश्रद्धया आक्रान्तः किम् ? येन पुत्रलोभरूपेण हेतुना मात्रा कैकेय्या एतत्कृतमिति वा अथवा मध्यमा माता कैकेय्येव स्त्रीलघुतां स्त्रीणां क्रूरं हृदयमिति प्रसिद्धा या लघुता तां गता ? किमेवं कृतवतीति तर्कः । मया विचारितमेव द्वयं मिथ्यैव । आर्यस्य सुगृहीतनाम्नोऽस्य अनुजोऽसौ मद्गुरुर्यो भरत इत्यनेन भरतेन एतत्कृतमित्यसंगतमित्युक्तम् । माता कैकेयी, तातस्य दशरथस्य कलत्रमित्यनेन मात्रा कृतमनुचितमिति दर्शितम् तर्हि कथमेतत्कृतं तत्राह मन्य इति । उभाभ्यामेतन्न कृतम्, किन्तु ब्रह्मणैव कृतमित्यर्थः । अत्रानुजकलत्रयोस्तत्सम्बन्धित्वविधानात्प्राधान्यम्, तद्द्योतनार्थमार्यस्य तातस्येति वक्तव्यम् तदकरणादविमृष्टविधेयांशमित्याह **अत्रेति** । न चायमपि पददोषः पदद्वये वर्तत इत्येतावान्विशेष इति वाच्यम्, प्राधान्यस्य वाक्यपर्यालोचनायत्तत्वेन वाक्यदोषस्यापि विद्यमानत्वात् । न च वाच्यता तयोः विशेषणत्वेनाप्राधान्यमिति वाच्यम् । शब्दतोऽप्राधान्येऽप्यर्थतः प्राधान्यात् । उक्तप्रकारं समासान्तरेऽप्यतिदिशति **एवमिति** । विशेषणविशेष्यभावोचितशरीरत्वं समासानां सामान्यलक्षणम् अन्यथा सामर्थ्यानुपपत्तेः । तत्पुरुषे कर्तुर्यथा । "यस्यावमत्य गुरुदत्तमिदं कुठारं डिम्भोऽपि राम इति नाम पदस्य हर्ता" इति । गुरुणा दत्त मिति वाच्यम् । एवं "यथाकामार्चितार्थिनामि"त्यादि । कर्मणो यथा–"प्रदक्षिणक्रियातीतस्तस्याः कोपमजीजनत्" इति । अत्र प्रदक्षिणक्रियामतीत इति वाच्यम् ।

करणस्य यथा "धात्रा स्वहस्तलिखितानि ललाटपट्टे को वाक्षराणि परिमार्जयितुंसमर्थः" । इत्यत्र हस्तेनेति वाच्यम् । अपादानस्य यथा

आसमुद्रक्षितीशानामि''ति । अत्र आसमुद्रादिति वक्तव्यम् ।

अधिकरणस्य यथा–

"अन्यसंक्रान्तसौभाग्ये"ति । अन्यसंक्रान्तसौभाग्यमिति वाच्यम् [?] ।

बहुव्रीहौ यथा–

"यः स्थलीकृतविन्ध्याद्रिराचान्तापरवारिधिः ।
यश्च तापितवातापिः स मुनिः श्रेयसेऽस्तु वः" ।।इति ।

येन स्थलीकृतो विन्ध्यः, येनाचान्तः पयोनिधिः, वातापिस्तापितो येनेति वाच्यम् । न खल्वत्र किञ्चिदन्तरं प्रतिविपश्याम इति चेत्सत्यम् । कत्रीनामेवैष यत्नश्चण्डिकोपाध्यायानाम् । अव्ययीभावे यथा "निष्प्रत्यूहमुपास्महे भगवत" इति । अत्र प्रत्यूहाभावायेति वाच्यम् । द्वन्द्वे यथा "सीताया ऊर्मिलायाश्च सदृशौ रामलक्ष्मणावि"ति । अत्र रामश्च लक्ष्मणश्चेति वाच्यम् । द्विगौ यथा "ब्रह्मा विष्णुश्च रुद्रश्च त्रिलोकीमधिकुर्वत" इति । त्रीन् लोकानिति वाच्यम् । अन्यथा संख्यायाः संख्येयेषु लोकेषु निरवद्यता न प्रकाशेत, इत्यादि द्रष्टव्यमित्यर्थः ।

**सारबोधिनी**–ननु यत्तदोरन्यतरानुपादाने चेदविमृष्टविधेयांशत्वं तदा कल्याणानामित्यत्र यद्यदुक्त्वा तन्मे इत्युक्तं कथं न तस्य शक्तिः द्वितीययच्छब्दस्य साकांक्षत्वादित्याह **नन्विति । कल्याणानामिति** । भाजनमाश्रयः । धुर्या भारक्षमाम् । प्रतिजहि बाधस्व । भद्रं भद्रं उचितोचितम् यद्वा भद्रं मत्यन्ताभीष्टम् । वितर देहि । मङ्गलमाशंसनीयरूपम् । तस्मै भूयसे बहुतराय । **तथाभूतमेवेति** । तथा च यत्पदार्थस्तत्पदेन परामृश्यते इत्येव नियमो न तु यावन्तो यच्छब्दास्तावन्तस्तच्छब्दा इति । ननु तथापि यत्पदवीप्सायां तत्पदवीप्सा दृश्यते इत्यत्र किं विनिगमकम् । यथाऽत्रैव पद्ये न दृश्यते । दृश्यते च यथा––

"सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः" ।।

इति चेदुच्यते । यत्र प्रकृतक्रियान्वयस्तत्पदार्थे एकदा भवितुमर्हति तत्र प्रायेण न वीप्सा । यत्र च न तथा तत्र वीप्सेति निष्कर्षः । तथाहि । एकदा सकलपापहननान्वयसंभवात् न तत्र वीप्सा प्रायेणेति करणात्तत्रापि क्वचिद्वीप्सेति । यथा––

"यां यां प्रियः प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव" इत्यत्र ।

स स भूमिपाल इत्यत्र तु नरेन्द्रकन्यया क्रमेण व्यतीतानां क्रमेण वैवर्ण्यप्राप्तिरिति तत्र वीप्सैव । लक्ष्यान्तरमाह **किं लोभेनेति** । लक्ष्मणस्योक्तिरियम् । मात्रा मातृद्वारा । **अत्रार्यस्येति** । सम्बन्धस्योत्कर्षहेतुत्वेन विधित्सितस्य प्राधान्यौचित्यादिति भावः । ननु समासासमासयोरर्थभेदाभावात्कथमेवमिति चेन्न । अर्थभेदाभावेऽपि समासनिबन्धनगुणीभावस्यावश्यकत्वात् अन्यथा मिथ्यामहिमत्वेऽपि गत्यभावात् । समास-

गतत्वेन पददोषतया सिंहगुहावलोकनन्यायेनास्य वाक्यदोषान्तर्निवेश इत्यभिधानमसत् । वाक्यदोषत्वस्यैव संभवात्। तथाहि । अनुजे आर्यसंबन्धं विधाय अनौचित्यकारित्वाभावो विधीयते । यत्रायं संबन्धस्तत्र नानौचित्यमिति विहितविधेयत्वं विवक्षितम् । संबन्धस्य गुणीभावेन न तत्प्रतीतिः । तथा च आर्येत्यादिमिथ्येत्याद्यनेकपदावलम्बनाद्वाक्यदोषता । आर्येत्यादितातेत्यादिपदद्वयनिष्ठत्वेन वाक्यदोषतेति कश्चित्, तन्न । अनयोः परस्परमाकाङ्क्षाविरहात्साकांक्षनानापदवृत्तिदोषस्यैव तत्त्वात् । वस्तुतस्तु अनयोरपि यथाकथञ्चिदाकाङ्क्षाऽस्तीति दिक् ।

विरुद्धमतिकृद् यथा

श्रितक्षमा रक्तभुवः शिवालिङ्गितमूर्तयः ।
विग्रहक्षपणेनाद्य शेरते ते गतासुखाः ॥१९६॥

अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते हता इति विरुद्धा प्रतीतिः ।

**बालचित्तानुरञ्जनी**—विरुद्धमतिकृदुदाहरति **श्रितक्षमा इति** । अत्र केचिदनुरक्तमण्डला राजानो वर्ण्यन्ते । श्रिता क्षमा सहिष्णुता यैः, अनुरक्ताः भुवः भूगतलोका येषाम् शिवैः कल्याणैः आलिङ्गिताः मूर्तयः शरीराणि येषां ते राजानः, अद्य विग्रहो युद्धं तस्य क्षपणं नाशनं तेन गतं असुखं येषां एवंविधाः सन्तः शेरत इति प्रकृतोऽर्थः । अत्र राजानो हता इति विरुद्धा मतिः । श्रितक्षमाः प्राप्तभूमयः रक्तभुवः रक्तधराः, शिवाभिः शृगालीभिः आलिङ्गितमूर्तयः, विग्रहस्य क्षपणेन नाशनेन गतासुखाः गताः असवः प्राणाः खानि च येषामिति । न चायं प्रकाशितविरुद्ध इति वाक्यार्थदेवमिति वाच्यम् । विरुद्धशब्दमहिम्नैव विरोधस्फुरणात् ।

**सारबोधिनी**—विरुद्धमतिकृदुदाहरति **श्रितेति** । क्षमा क्षान्तिः भूमिश्च । रक्ताऽनुरक्ता रुधिरवती च । भूस्तत्स्थजनो भूमिश्च । शिवं कल्याणम् **शिवः** शृगालः शृगाली च । विग्रहो युद्धं शरीरञ्च । असुखं दुःखं असवः प्राणाः खमिन्द्रियं च । अत्र पृथक्सिद्धयोरागन्तुकः संबन्धः श्रयणम् तस्य क्षान्तौ गुणविशेषे बाधात् । तथा रक्तत्वस्य रुधिरत्वस्य भूस्थजने बाधात् । एवमालिङ्गनकर्तृत्वस्य शिवे शुभदृष्टौ बाधात्। तद्वत् क्षपणस्य नोदनस्य युद्धे बाधात्, लक्षणातः प्रागेव झटिति धरण्याद्युपस्थितया उपश्लोक्यमानस्यानुचितशुभविरोध्यशुभप्रतिपादनया विरुद्धमतिकारिता । न चामङ्गलप्रतीत्याऽश्लीलत्वमिति वाच्यम् उपाध्योरसङ्करत्वेन दोषद्वयेऽप्यक्षतेः ।

पदैकदेशे यथासम्भवं क्रमेणोदाहरणम्

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥१९७॥

अत्र त्वादिति । यथा वा

तद्गच्छ सिद्धचै कुरु देवकार्यमर्थोऽयमर्थान्तरलभ्य एव ।

अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१९८॥

अत्र द्धचै ब्ध्यै, इति कटु ।

**बालचित्तानुरञ्जनी**--एवं तावद्वाक्येऽपि दोषाः सन्तीत्येतत्समर्थ्य पदस्यांशेऽपि केचनेत्येतद् व्याचष्टे **पदेति**। कस्यचित् कामुकस्य वचनम्। स्वप्नः चित्तवृत्तिमात्रपरिकल्पिता सृष्टिः। मन्त्रादिना अविद्यमानार्थप्रकाशनं माया। अतिचपलत्वात् स्वप्नमायोपमत्वात् परिणतिविरसत्वादङ्गनायाः सङ्गमेनालम्। यदि यद्यपि शतकृत्वः अनेकधा इति तत्त्वं विचारयामः तदपि तथापि अन्तरात्मा हरिणाक्षीं न विस्मरति। अत्र त्वादिति प्रयोगः श्रुतिकटुः। असकृदावृत्त्या दोषोल्बणत्वमित्याह **अत्रेति**। अत्रैवोदाहरणान्तरमाह **यथा वेति**। तत्तस्मात् कारणात्। अङ्ग भोः सिद्धचै गच्छ, देवकार्यं कुरु। अर्थान्तरेण पार्वतीपरमेश्वरसंघट्टरूपेणलभ्यः लघुसत्ताक एवायमर्थः देवकार्यकरणलक्षणलब्धरूपलाभाय त्वां प्रत्ययं कारणत्वेनापेक्षते बीजाङ्कुरोदयात् उच्छूनतारूपात् प्राक् अम्भ इव। अत्रापि श्रुतिकटुत्वमित्याह **अत्रेति**।

**सारबोधिनी**—पदैकदेशे श्रुतिकटुत्वमाह **अलमिति**। अङ्गनायाः सङ्गमेनालमिति संबन्धः। अत्र विरोधिनं शान्तमुपक्रम्य स्वविश्रान्तस्य शृङ्गारस्यात्यन्तमधुरत्वेन क्षुद्रापचारस्याप्यसहतया पदैकदेशश्रुतिकटुत्वस्याप्यपकर्षतेत्याह **त्वादिति**। **यथा वेति**। अत्र देवकार्यं शिवे पार्वतीवशतापादानम्। तथा चात्रापि नायकनायिकावृत्तान्तरूपरसस्य सम्भवेन तद्व्यञ्जकवर्णवैधुर्येणास्य दूषकतेति ध्येयम्। तदिति प्रत्ययः करणम्। अङ्गलब्धिरुत्पत्तिः। यद्वा अङ्गेति सम्बोधने लब्धिरुपलब्धिः। उत्तमं त्वामिति क्वचित् पाठः।

यश्चाप्सरोविभ्रममण्डनानां संपादयित्रीं शिखरैर्बिभर्ति ।

बलाहकच्छेदविभक्तरागामकालसन्ध्यामिव धातुमत्ताम् ॥१९९॥

अत्र मत्ताशब्दः क्षीबार्थे निहतार्थः ।

आदावञ्जनपुञ्जलिप्तवपुषां श्वासानिलोल्लासित-

प्रोत्सर्पद्विरहानलेन च ततः सन्तापितानां दृशाम् ।

सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो

भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥२००॥

अत्र दृशामिति बहुवचनं निरर्थकम् कुरङ्गेक्षणाया एकस्या एवोपादानात्। न चालसवलितैरित्यादिवत् व्यापारभेदाद् बहुत्वम् व्यापाराणामनुपात्तत्वात्। न च व्यापारेऽत्र दृक्-

शब्दो वर्तते । अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम् । प्रधानक्रियाफलस्य कर्त्रसम्बन्धे कर्त्र-भिप्रायक्रियाफलाभावात् ।

**बालचित्तानुरञ्जनी**—निहतार्थमुदाहरति **यश्चेति** । यश्च पर्वतः देवाङ्गनाविलासालङ्काराणा-मुत्पादयित्रीं मेघखण्डविभिन्नलौहित्यां असमयसन्ध्यावस्थितां धातुमत्तां शिखरैर्बिभर्ति । धातुमतो भावो धातुमत्ता इत्ययमर्थः । क्षीबवाचकत्वेन निहतार्थ इत्याह **अत्रेति** ।

निरर्थकमुदाहरति **आदाविति** । लोहकारसमाधिनोक्तिः । हरिणाक्षी प्रथमतः कज्जलसमूहलिप्त-रूपाणां अनन्तरं निश्वासानिलोल्लासितेन अत एव प्रसरद्विरहाग्निना सन्तापितानां दृशां अश्रुजलेन सेचनं कुरुते । लोहकारः कन्दर्पस्य भल्लानामायुधविशेषाणां लिप्तदग्धानां पातकः । अत्र कुरङ्गेक्षणाया एकत्वेन दृशोरिति द्विवचनेन वक्तव्ये दृशामिति बहुवचनं निरर्थकमित्याह **अत्रेति** । अलसवलितैः प्रेमा-र्द्रार्द्रै रित्यादावीक्षणैरिति यथा वचनं व्यापारभेदात् एवमत्रापीत्यत आह **न चेति** । अलसवलितैरित्यादौ भावाकूतादिव्यापारभेदवत्प्रकृते अभावान्न बहुवचनं सार्थकमिति पूर्ववच्छब्दस्य व्यापारवाचित्वमङ्गी-कृत्य दूषणमुक्तम् । इदानीं तदेव न संभवतीत्याह **न चेति** । वीक्षणशब्दस्य दृग्व्यापारे प्रयोगवत् दृक्शब्दस्य प्रयोगाभावात् अञ्जनाद्यघटनास्वव्यापारवाची न संभवत्येव दृक्शब्द इति भावः । अस्मिन्नेव श्लोके पदान्तरे निरर्थकत्वमाह **अत्रैवेति** । दृङ् निषेधलक्षणायाः दृक्संबन्धमात्रपरत्वात् कुरङ्गेक्षणया संबन्धाभावे कर्त्रभिप्रायक्रियाफलाभावात् "स्वरितञितः कर्त्रभिप्राये क्रियाफल"इत्यत्रोक्तनिमित्ताभावादात्मनेपदं निर-र्थकमित्यर्थः ।

**सारबोधिनी-यश्चेति** । **धातुमत्तामिति** । मतुबुत्तरतल्प्रत्ययेन संबन्धाभिधानं तदपेक्षया क्षीबार्थः प्रसिद्धः । वलाहको मेघः । वलाहकच्छेदेन खण्डखण्डीभावेन विभक्तोऽवच्छेदभेदेनोपस्थितो रागो यस्याः ।

**आदाविति** । कुरङ्गेक्षणा दृशामश्रुपयसाभिषेकं चेतोभुवो भल्लीनामिव पानकर्म कुरुत इत्युत्प्रेक्षा । नायिका चेयं भविष्यत्प्रोषितपतिका, अञ्जनसत्त्वात् । शस्त्रस्य पङ्कलेपादिपूर्वकं पानकर्म इति दृशः कामशास्त्रत्वेनाध्यवसायादियमुक्तिः । अनर्थकमिति बहुत्वासंभवात् हेतुमाह **एकस्या इति** । ननु दृशोर्भावे क्विपा व्यापाराभिधानम् व्यापाराश्च बहव एवेत्याशङ्क्य निषेधयति **न चेति** । अञ्जनलेपादीनां क्रियायामसंभवादिति शेषः । कर्त्रभिप्रायेति कर्तारमभिप्रैति क्रियाफलमभिसंबध्नातीति कर्त्रभिप्रायं क्रियाफलम् । अथ दृशामितिवत् कुरुत इतिवच्च नाथते इत्यपि पदैकदेशदोषः स्यात् । अथवा नाथत इति-वत् एतावपि पददोषौ स्यातामविशेषादिति चेन्न । प्रकृत्यर्थासंभवाहितप्रत्ययासंभवो यत्र तत्र पददो-षता । नाथते इत्यत्राशीरूपप्रकृत्यर्थस्यासंभववशेनात्मनेपदासंभवात् । इह तु प्रकृत्यर्थाविबाधितावेव । किन्तु प्रत्ययार्थाविति विशेषात् । ननु तथापि बहुषु बहुवचनमित्यनुशासनोल्लङ्घनान्नाथत इतिवदसाध्वेवेति चेदुच्यते । "आशिषि नाथ" इत्यनेनाशिषि आत्मनेपदं नियम्यते, ततो याचने युक्तमसाधुत्वम् । प्रकृते तु कर्त्रभिप्रायक्रियाफलविवक्षायां तन्नियमयता पराभिमतसम्बन्धिक्रियाफलेन तन्निषेधः प्रतिपाद्यते इति तत्रैवासाधुत्वम् । न तु कर्त्रभिप्रायफलाभावे । अत एव कर्त्रभिप्राय इति किं पराभिप्रेते मा भूदित्युक्तं तथा च कर्त्रभिप्रायफलाभावादनर्थकमेवात्मनेपदम् न त्वसाधुत्वम् । एवं बहुषु बहुवचनमिति सूत्रं बहुषु बहुवचनं नियमयत् द्वयेकयोस्तु तन्निषेधयति न तु बहुत्वाविवक्षामात्रेण । न च दृशामित्यत्र द्वित्वैकत्वे विवक्षिते यतोऽसाधुत्वं स्यात् । किन्तु बहुत्वाविवक्षामात्रमित्यन्वितमेवैतदिति ।

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥२०१॥

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः ।

अतिपेलवमतिपरिमितवर्णं लघुतरमुदाहरति शठः ।
परमार्थत. स हृदयं वहति पुनः कालकूटघटितमिव ॥२०२॥

अत्र पेलवशब्दः ।

**बालचित्तानुरञ्जनी**—अवाचकमुदाहरति **चापेति** । रामचन्द्रस्य परशुरामं प्रति वचनम् । शिवस्तव धनुर्विद्यायां गुरुः षडास्यस्त्वया जितः, बाणविक्षिप्तः समुद्रस्तव गृहम्, इयं भूः हन्तकारकं पूर्णभिक्षा । एतत्तव महत्त्वमस्त्येव । किमु किन्तु मे चन्द्रहासः खड्गो मातृकण्ठच्छेदं कृतवता परशुना आयुधेन [बद्धस्पर्धो] लज्जते । अत्र विजेय इत्यस्य विजित इत्यत्रार्थे सङ्केताभावादवाचकत्वमित्याह **अत्रेति** ।

व्रीडाश्लीलमुदाहरति **अतीति** । शठः खलः अतिसुन्दरं स्वल्पाक्षरं अतिकोमलं वचः कथयति । स दुष्टः परमार्थतः पुनः हृदयं कालकूटघटितमिव वहति । अत्र पेलवशब्दैकदेशशब्दस्य पेलशब्दस्य लाटभाषायां वृषणवाचित्वेन व्रीडाश्लीलमित्याह **अत्रेति** ।

**सारबोधिनी—चापाचार्य इति** । व्यस्तः क्षिप्तः । उदधिः सदनमित्यन्वयः, हन्तकारोऽतिथिसत्कारः । किमु किन्तु । क्तप्रत्ययार्थेऽतीतत्वेऽवाचक इति, तत्र संकेतविरहात् । **अतीति** । पेलवं कोमलम्, अत्र पेलवशब्दस्याद्यक्षरद्वयं पुंव्यञ्जनबोधकम् ।

यः पूयते सुरसरिन्मुखतीर्थसार्थस्नानेन शास्त्रपरिशीलनकीलनेन ।
सौजन्यमान्यजनिरूर्जितमूर्जितानां सोऽयं दृशोः पतति कस्यचिदेव पुंसः ॥२०३॥

अत्र पूयशब्दः ।

विनयप्रणयैककेतनं सततं योऽभवदङ्ग तादृशः ।
कथमद्य स तद्वदीक्ष्यतां तदभिप्रेतपदं समागतः ॥२०४॥

अत्र प्रेतशब्दः ।

**बालचित्तानुरञ्जनी**—जुगुप्साश्लीलमुदाहरति **यः पूयत इति** । यः पुरुषः गङ्गादितीर्थसमूहस्नानेन शास्त्राभ्यासदृढीकरणेन च पवित्रो भवति, सौजन्यमानोत्पत्तिस्थानं तेजस्वी सोऽयं पुरुषः कस्यचिदेव भाग्यवतः पुरुषस्य नेत्रग्राह्यो भवति । अत्र पूयशब्दस्य शीर्णरुधिरवाचकत्वेन जुगुप्साव्यञ्जकत्वेनाश्लीलत्वमित्याह **अत्रेति** ।

अमङ्गलाश्लीलमुदाहरति **विनयेति**। काचित् स्वकान्तमन्यासक्तं दृष्ट्वा सखीं प्रत्याह। अङ्ग हे सखि **यो** नाथः सर्वदा विनयप्रीतिस्थानमभवत्, तादृशः स इदानीं सपत्न्यभिलषितस्थानं गतः सन् पूर्वं इव कथं विलोक्यतामिति। मयेति शेषः। अत्र प्रेतशब्दस्य शववाचकत्वेनामङ्गलाश्लीलत्वमित्याह **अत्रेति**।

**सारबोधिनी—य इति**। मुखमादिः। परिशीलनमभ्यासः। कीलनं संस्कारदार्ढ्यम्। **ऊर्जितानां** बलवतां ऊर्जितं बलम्। अत्र पूयशब्दो व्रणाच्छेदबोधकः।

**विनयेति**। अङ्गपदं सम्बोधने। अभिप्रेतमभिलिषितम्। अत्र प्रेतशब्दो मृतबोधकः।

कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम्।
अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥२०५॥

अत्र किं पूर्वं साधुः, उत साधुषु चरतीति सन्देहः।

किमुच्यतेऽस्य भूपालमौलिमालामहामणेः।
सुदुर्लभं वचोबाणैस्तेजो यस्य विभाव्यते ॥२०६॥

अत्र वचःशब्देन गीःशब्दो लक्ष्यते। अत्र खलु न केवलं पूर्वपदम्, यावदुत्तरपदमपि **पर्यायपरिवर्तनं न क्षमते**। जलध्यादावुत्तरपदमेव वडवानलादौ पूर्वपदमेव।

यद्यप्यसमर्थस्यैवाप्रयुक्तत्वादयः केचन भेदाः, तथाप्यन्यैरालङ्कारिकैर्विभागेन **प्रदर्शिता** इति भेदप्रदर्शनेनोदाहर्तव्या इति च विभज्योक्ताः।

**बालचित्तानुरञ्जनी**—संदिग्धमुदाहरति **कस्मिन् इति**। अस्य पुरुषस्य सामर्थ्यं कस्मिन् कर्मणि नोत्तपतेतराम् अतिशयेन प्रभवति। अयं साधुषु चरति, वसति। तस्मात् इह अस्मिन् अञ्जलिर्बध्यताम् स्वकार्यादिसिद्धये अयं प्रार्थ्यतामित्यर्थः। अत्र साधुचर इति भूतपूर्वे चरट् [अ० ५-३-५३] इति पूर्वं साधुरिति वा, "चरेष्ट" [३-२-१५] इति साधुषु चरतीति वेति संदेह इत्याह **अत्रेति**।

नेयार्थमुदाहरति **किमिति**। भूपालमौलिमालामहामणेः अस्य राज्ञः किं वस्तु **उच्यते, वर्ण्यते**। यस्य तेजः वचोबाणैः गीर्वाणैर्देवैरपि सुदुर्लभं सुदुःप्राप्यत्वेन विभाव्यते ज्ञायते। अत्र वचःशब्दस्य प्रसिद्धिवाचित्वात् संज्ञावयवत्वसम्बन्धेन वचसा गीःशब्दो लक्ष्यते इति वचोबाणत्वं गीर्वाणार्थेन नेयार्थमित्याह **अत्रेति**। प्रसङ्गात्प्रमेयान्तरं शिक्षयति। गीर्वाणशब्दे पूर्वपदं गीःपदं न केवलं वचोरूपं पर्यायपरिवर्तनं न क्षमते न सहते यावत् किन्तु उत्तरपदं बाणपदमपि न सहते। तेन वचोबाणशब्द इव गीःसायकशब्दोऽपि नेयार्थं इत्यर्थः। कुत्रोत्तरपदं तादृक् कुत्र वा पूर्वपदमेव तादृगित्याकाङ्क्षायामाह **जलधीति**। जलधि-दिनकरादीनां जलधरदिनवहेत्याद्युत्तरपदपर्यायपरिवर्तने नेयार्थत्वम्, तद्वाचकत्वाप्रतीतेः। पूर्वपदं उत्तरपदपर्यायपरिवर्तनं सहते। उदधि-दिवसकरशब्दे न तत्प्रतीतेः। वडवानलमलयोद्भवादीनां पूर्वपदपर्यायपरिवर्तने नेयार्थता। न तूत्तरपरिवर्तनमित्यर्थः। नन्वप्रयुक्तत्वात् स्वजनकत्वात् असमर्थप्रपञ्चत्वं निहतार्थ-

स्यापि, प्रसिद्धार्थेनाप्रसिद्धार्थतिरोधानात्, अप्रसिद्धार्थत्वस्य विवक्षितत्वात्, तत्प्रतीतेरभावादसमर्थप्रपञ्च-त्वमवाचकत्वस्य । समर्थप्रपञ्चत्वं स्पष्टमेव । **यद्यपीति** । तथापि अन्यैः पृथक्त्वेन वर्णितत्वात् अवान्तर-भेदेनोदाहर्तव्यत्वात् न पृथगुपादानमित्यर्थः ।

**सारबोधिनी-कस्मिन् इति** । उत्तपते उज्ज्वलति । भूतपूर्वार्थश्चरट् प्रत्ययः । चरतीति चर इति वा । प्रकरणाद्यभावात्सन्देहः । नेयार्थमाह **किमुच्यत इति** । गीःशब्दो लक्ष्यत इति । तदैव गीर्वाणस्य देवस्य प्रतीतिः । **यावदुत्तरपदमिति** । गीःशब्देनापि देवतायामप्रतीतेः । **जलध्याद्याविति** । जलधरजलपात्रादिना जलधेरप्रत्यायनात् । **वाडवेत्यादि** । अश्वानलेत्यादिना वडवाग्नेरबोधनात् । नन्वसमर्थत्वं विवक्षितार्थ-प्रतीतिशून्यत्वमेवोच्यताम् तत्कथमप्रयुक्तादीनां पृथङ् निर्देश इत्यत आह **यद्यपीति** । भेदा विशेषाः ।

**प्रतिकूलवर्णमुपहतलुप्तविसर्गं विसन्धि हतवृत्तम् ।**
**न्यूनाधिककथितपदं पतत्प्रकर्षं समाप्तपुनरात्तम् ॥५३॥**

**अर्थान्तरैकवाचकमभवन्मतयोगमनभिहितवाच्यम् ।**
**अपदस्थपदसमासं संकीर्णं गर्भितं प्रसिद्धिहतम् ॥५४॥**

**भग्नप्रक्रममक्रममतपरार्थं च वाक्यमेव तथा ।**

रसानुगुणत्वं वर्णानां वक्ष्यते तद्विपरीतं प्रतिकूलवर्णम् । यथा **शृङ्गारे**

अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥२०७॥

**बालचित्तानुरञ्जनी**--इत्थं पदवाक्ययोः पदैकदेशानाञ्च साधारणान् दोषानभिधायेदानीं वाक्यमात्रदोषानुद्दिशति **प्रतिकूलेत्यादि** । एवंविधवाक्यमेव तथा दुष्टमित्यर्थः प्रातिकूल्यं वक्तुं तत्प्रति-योग्यानुकूल्यं लक्षयति **रसेति** । वक्ष्यते उत्तरोल्लास इत्यर्थः । प्रतिकूलत्वमाह **तदिति** । उदाहरति **यथेति** । नायिकासम्बन्धेच्छुः कश्चिद् दूतीं प्रत्याह, हे मधुरस्वरे ! आकण्ठं कण्ठपर्यन्तं अधिकोत्कण्ठया पूर्णं मां क्षणं कम्बुकण्ठ्याः कण्ठे कुरु कण्ठसंसक्तं कुरु, कण्ठार्तिं नाशय । अत्र शृङ्गाररसानुसारेण "अटवर्गा रणौ लघू" इति टवर्गस्य निषेधात् कोमलवर्णोच्चारणे कर्तव्ये तद्विपरीतटवर्गस्यैवोच्चारणात् प्रतिकूलवर्णत्वं वाक्य-दोष इत्यर्थः ।

**सारबोधिनी**--वाक्यमात्रगामिदोषानाह **प्रतिकूलेत्यादि** । वाक्यमेव, न तु पदम् । **तथेति** । दुष्ट-मित्यर्थः । तद्विपरीतत्वमास्वादोद्बोधप्रतिबन्धकत्वम् । न च श्रुतिकटुत्वेन सहास्य साङ्कर्यमिति वाच्यम् । उपाधेरसाङ्कर्यस्य प्रागेव प्रदर्शितत्वात् । तत्र परुषवर्णमात्रं दुष्टम् इह तु सुकुमारा अपि वर्णा रौद्रादौ द्रुह्यन्तीति ततोऽस्य भेद इति केचित् ।

**अकुण्ठेति** । अकुण्ठा सातिशया । तया आकण्ठं पूर्णमित्यन्वयः । कलकण्ठीति सखीसंबोधनम् । कोकिलाया वा । अत्र शृङ्गारपरिपन्थिनां ओजोव्यञ्जकवर्णानां शृङ्गारव्यञ्जने प्रतिबन्धकता ।

रौद्रे यथा

देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिताः
क्षत्रादेव तथाविधः परिभवस्तातस्य केशग्रहः ।
तान्येवाहितहेतिघस्मरगुरूण्यस्त्राणि भास्वन्ति मे
यद्रामेण कृतं तदेव कुरुते द्रोणात्मजः क्रोधनः ॥२०८॥

अत्र हि विकटवर्णत्वं दीर्घसमासत्वं चोचितम् । यथा

प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वेधाविधाविर्भवत्-
क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् ।
उज्ज्वालः परशुर्भवत्वशिथिलस्त्वत्कण्ठपीठातिथि-
र्येनानेन जगत्सु खण्डपरशुर्देवो हरः ख्याप्यते ॥२०९॥

यत्र तु न क्रोधस्तत्र चतुर्थपादाभिधाने तथैव शब्दप्रयोगः ।

**बालचित्तानुरञ्जनी**—रौद्रेऽपि प्रातिकूल्यमाह **रौद्रेति** । यस्मिन् देशे सहस्रार्जुनः परशुरामजनकस्य जमदग्नेः केशग्रहणं कृतवान् तस्मिन्नेव देशे द्रोणपुत्रः अश्वत्थामा पाण्डवैः केशेषु गृहीतं स्वं पितरं दृष्ट्वा इदमाह । यस्मिन् देशे परशुरामेण शत्रुरुधिरोदकैः ह्रदाः पूरिताः सोऽयं देशः तवैकक्षत्रादेव सहस्रार्जुनात् जमदग्नेरिव पितुः केशग्रहरूपः परिभवोऽभूत् । अहितैः शत्रुभिः क्षिप्तानि यानि शस्त्राणि तेषां घस्मराणि भक्षकाणि गुरूणि गरिष्ठानि तानि परशुरामात् प्राप्तानि कान्तियुक्तानि अस्त्राणि आयुधानि मम सन्ति । तस्माद्यत्परशुरामेण कृतं क्रोधनः द्रोणात्मजः मल्लक्षणो जनस्तदेव कुरुते । अत्र "टवर्गादिसषौ वृत्तिदैर्घ्यमि"ति वक्ष्यमाणलक्षणमिति रौद्ररसानुसारिविकटवर्णत्वाद्यभावात् प्रातिकूल्यमित्याह **अत्रेति** । उचित तदभावात्प्रातिकूल्यमिति शेषः । प्रातिकूल्यप्रकटनार्थमेवानुकूलस्थलमुदाहरति **यथेति** । परशुरामस्य श्रीरामचन्द्रं प्रति वचनम् । पूर्वमलब्धः निशुंभः भङ्गो येन एवंविधं यत् ईश्वरधनुः तस्य च द्वेधाविधा द्वेधाकरणम् तया प्रकटीभवन । यः क्रोधस्तेन प्रेरितः भयङ्करो यः परशुरामः तस्य भुजस्तम्भेन अपविद्धो मुक्तः, उद्गता ज्वाला यस्य स दृढः परशुः वेगात् हे राम भवत्कण्ठपीठातिथिर्भवतु, येन परशुना हरो देवः खण्डपरशुः ख्याप्यते ज्ञाप्यते । नन्वत्रापि चतुर्थपादे उक्तलक्षणाभावात् सदोषत्वमित्याह **यत्रेति** । चतुर्थपादे गुरुसम्बन्धेन परशुस्तुतिप्रतिपादनान्न क्रोधस्तत्र तथैव विकटवर्णव्यतिरेकेणैव शब्दप्रयोगो युक्त इत्यर्थः ।

**सारबोधिनी**—**रौद्रेति** । प्रतिकूलवर्णं यथेत्यन्वयः । **देश इत्यादि** । सोऽयं कुरुक्षेत्ररूपः । जलपदं बाहुल्यद्योतकम् । अहिता वैरिणः । घस्मराणि भोक्तॄणि । रामेण भार्गवेण । विकटा ओजोव्यञ्जकाः ।

समुचितरचनानिदर्शनमाह **यथेति** । निशुंभो नमनं, द्वैधाविधा द्वैधीकरणं अपविद्धश्चालितः उज्ज्वाल उद्गतज्वालः । अतिथेः पीठारोहणमुचितमिति **पीठत्वनिरूपणम्**। खण्डयतीति खण्डस्तथाकृतः परशुर्यस्य तेन । यद्वनुस्त्वया खण्डितं तत्परशुना त्वमपि खण्डयिष्यसे इति ध्वनिः । ननु चतुर्थपादेऽत्रापि मसृणवर्णा इत्यत आह **यत्र त्विति** । चतुर्थपादे गुरुस्मरणेन भावोद्रेकात् क्रोधस्य तिरस्कृतेरुचितमेव मसृणवर्णरचन-मिति भावः ।

उपहत उत्वं प्राप्तो लुप्तो वा विसर्गो यत्र तत् । यथा

धीरो विनीतो निपुणो वराकारो नृपोऽत्र सः ।
यस्य भृत्या बलोत्सिक्ता भक्ता बुद्धिप्रभाविताः ॥२१०॥

विसन्धि सन्धेर्वैरूप्यम् विश्लेषोऽश्लीलत्वं कष्टत्वञ्च । तत्राद्यं यथा

राजन्विभान्ति भवतश्चरितानि तानि इन्दोर्द्युतिं दधति यानि रसातलेऽन्तः ।
धीदोर्बले अतितते उचितानुवृत्ती आतन्वती विजयसंपदमेत्य भातः ॥२११॥

यथा वा

तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः ।
निजवंश उदात्तकान्तकान्तिर्बत मुक्तामणिवच्चकास्त्यनर्घः ॥२१२॥

संहितां न करोमीति स्वेच्छया सकृदपि दोषः, प्रगृह्यादिहेतुकत्वे त्वसकृत् ।

वेगादुड्डीय गगने चलण्डामरचेष्टितः ।
अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु ॥२१३॥

अत्र संधावश्लीलता ।

**बालचित्तानुरञ्जनी**--उपहतलुप्तविसर्गमुदाहर्तुं शब्दार्थमाह **उपहत उत्वमिति** । उदाहरति **धीर इति** । अत्र सभायामेवंविधाः पत्न्यः [?]यस्य नृपस्य सेवका एवंविधाः । अत्र पूर्वार्धे धीर इत्यादौ संधि-वशादोत्वप्राप्त्या उपहतविसर्गत्वम् उत्तरार्धे यत्र भृत्यादौ लुप्तविसर्गत्वं तदुभयं दोषः ।

विसंधिपदं त्रेधा व्याचष्टे **विसंधीत्यादि** । संधिः परः सन्निकर्षः संहिता । उपसर्गार्थत्वं वैरूप्यम् । क्रमेणोदाहरति **आद्यमिति** । हे राजन् तव तानि चरितानि विभान्ति यानि पाताले अन्तः मध्ये चन्द्रस्य कान्ति विदधति उचितार्थवृत्ती योग्यार्थवृत्ती, एषु चरितेषु विजयसंपत्ति वाऽऽतन्वतीति भावः । अत्र तानि इन्दोरित्यत्र संध्यकरणाद् दोषः ।

उदाहरणान्तरमाह **यथा वेति** । स्थूलहारेण मनोहारिणी द्युतिर्यस्य सः महत उदयाद्रेरिन्दुरिव महतस्तस्मात् वंशादुदितः । बत हर्षे । निजवंशे अधिकमनोहारिणी कान्तिर्यस्य । मूल्यरहितः मुक्तामणि-

तुल्यः शोभते। मुक्तामणिरपि निजवंश उदात्तकान्तिरनर्घ्यश्च भवति । अत्र निजवंश उदात्त इत्यत्र सन्ध्यकरणाद्दोषः। प्रसङ्गात्प्रथमश्लोके संन्ध्यसंभावनायामपि दूषणं वक्तुं तत्संभवताया दूषणं प्रयुनक्ति **संहितामिति**। प्राप्तिस्थले बुद्धिपूर्वकं सकृदप्यसंधिकरणे दोषः। प्लुतप्रगृह्या अचीत्यादिना निषिद्धस्थलेऽसकृदेव तदुच्चारणे दोषः, सकृत्तु न दोषः। यथा

"समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे" इति। [कु० सं० ७. ४२.]

अश्लीलविसन्ध्युदाहरति **वेगादिति**। काचिद् दूती नायकाधिष्ठितं सङ्केतस्थलं बोधयन्ती नायिकामाह—हे नायिके! वेगात् उड्डीय डामरचेष्टितः। डामर इति वाद्यविशेषः, भाषया डमरू इति प्रसिद्धः तस्येव चेष्टा यस्य। आकाशे चलन् अयं पक्षी उत्तपते शोभते। तस्मादत्रैव स्थले रुचिं कुरु। अत्र लण्डाचिङ्कुपदयोर्भाषया शिश्नयोन्यङ्कुरवाचकत्वादश्लीलत्वम्। संधिरत्र पदयोर्मिथः संश्लेषमात्रं न तु शास्त्रीया संहितेति द्रष्टव्यम्।

**सारबोधिनी—उपहतेत्यादि। धीरेति**। अत्र नैरन्तर्येणानेकस्थानस्योपहतविसर्गत्वेनैव दूषकता। एवं लुप्तविसर्गोऽपि। अन्यथा अतिप्रसङ्गात्। प्रतिकूलेत्यादिषु पञ्चसु पतत्प्रकर्षे च बन्धशैथिल्यकारित्वमेव दूषकताबीजम्। बन्धस्य गाढत्वे यथा चमत्कारो न तथा शैथिल्ये इति सहृदयानामनुभवात्। **राजन्नित्यादि**। तानि इन्दोरित्यत्र विवक्षाविरहात्समानलक्षणदीर्घाभावः। नासाधुत्वम् विकल्पानुशासनात्। तदुक्तम्

"संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
सूत्रेष्वपि तथा नित्या सैवान्यत्र विभाषया ॥" इति

'नित्या समासे वाक्ये तु सा विवक्षामपेक्षते।' इत्यपि पाठः

उचितयोः कर्मणोरनुवृत्ती इत्यातन्वती इत्यस्य कर्मणी। धीदोर्बले इत्यस्य विशेषणत्वे नुमागमः स्यात्। विजयसंपदमेत्य भात इत्यन्वयः। संधिनिषेधात् चरणयोर्विश्लेषः।

प्रपञ्चयति **यथा वेति**। तत उदित इति विसर्गलोपे पुनः संधिनिषेध एव। निजवंश उदात्त इत्यत्र संधिनिषेधाद्विश्लेषणम्। **तेनेदं** विश्लेषोदाहरणमेव, न तु विलुप्तविसर्गस्य प्रपञ्चोऽयमिति कस्यचिद्वचनमादरणीयमिति। स्वेच्छया, न तु संहितानिषेधकसूत्रपारतन्त्र्येण। **प्रगृह्यचेत्यादि**। ईदूदेद्द्विवचनं प्रगृह्यमित्यधिकारे प्लुतप्रगृह्या अचीति संधिनिषेधः। आदिशब्दादन्येषां संधिनिषेधकसूत्राणां परिग्रहः। **असकृदिति**। तथैव कविसमयसिद्धत्वात्। तदैव बन्धशैथिल्योदयाच्च। अत एव प्रतिकूलवर्णादीनां बहुव्यापकतयैव दूषकता। वेगादित्यादौ लण्डाचिङ्कुशब्दौ पुंव्यञ्जनस्त्रीवराङ्गबोधकौ। तयोः संधानेनैव निष्पत्तेः। चलन्निति डामरेति रुचिमिति कुर्विति बहुपदावलम्बनाद् वाक्यदोषता।

उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।
नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक् ॥२१४॥

हतं लक्षणानुसरणेऽप्यश्रव्यम् अप्राप्तगुरुभावान्तलघु रसाननुगुणञ्च वृत्तं यत्र तत् हतवृत्तम्। क्रमेणोदाहरणम्

अमृतममृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन् रसान्तरविज्जनो
वदतु यदिहान्यत्स्वादु स्यात् प्रियादशनच्छदात् ॥२१५॥

अत्र 'यदिहान्यत् स्वादु स्यात्' इत्यश्रव्यम् । यथा वा

जं परिहरिउं तीरइ मणअं पि ण सुन्दरत्तणगुणेण ।
अह णवरँ जस्स दोसो पडिपक्खेहिं पि पडिवण्णो ॥२१६॥

अत्र द्वितीयतृतीयगणौ सकारभकारौ ।

विकसितसहकारतारहारिपरिमलगुञ्जितपुञ्जितद्विरेफः ।
नवकिसलयचारुचामरश्रीर्हरति मुनेरपि मानसं वसन्तः ॥२१७॥

अत्र हारिशब्दः । हारिप्रमुदितसौरभेति पाठो युक्तः । यथा वा

अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलाद्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च ॥२१८॥

अत्र 'वस्त्राण्यपि' इति पाठे लघुरपि गुरुतां भजते ।

हा नृप हा बुध हा कविबन्धो विप्रसहस्रसमाश्रय देव ।
मुग्धविदग्धसभान्तररत्न क्वासि गतः क्व वयं च तवैते ॥२१९॥

हास्यरसव्यञ्जकमेतद्वृत्तम् ।

**बालचित्तानुरञ्जनी**—कष्टविसंधि वाक्यमुदाहरति **उर्वीति** । कश्चित्कञ्चिदुपदिशति। असौ उर्वी मही, अत्र तरुणामाली पङ्क्तिः मरोः मरुस्थलस्य अन्ते चार्वी अवस्थितिर्यस्याश्च अत्र देशे ऋजु सरलं यथा स्यात्तथा गन्तुं न शक्यते । तस्मात् मनाक् शिरो नमय । अत्र उर्व्यसावित्यादौ संधिकरणात् श्रुतिकटुत्वमित्यर्थः ।

हतवृत्तमित्यत्रापि त्रैविध्यं वदन् समासमाह **हतमिति** । हतं वृत्तं यत्रेति संबन्धः । वृत्तं छन्दोलक्षणानुसरणेऽप्यश्रव्यं वृत्तं यत्र तदेकम् अन्तश्चासौ लघुश्चेत्यन्तलघुः अप्राप्तो गुरुभावो गुरुत्वं येन

तादृक् अन्तलघुर्यत्र तद्द्वितीयम् । पादान्तर्वर्तिनां लघूनां "वा पादान्त" इति नीत्या गुरुत्वं विभाषितम्, तथापि यत्र तेषां गुरुत्वं नास्ति तद्दुष्टं रसाननुगुणं वृत्तं यत्रेति तृतीयम् ।

आद्यमुदाहरति **अमृतमिति** । अमृतं अमृतमेव कः संदेहः, मधून्यपि मधुराण्येव, अन्यथा न । चूतस्यापि प्रसन्नरसं फलम् अधिकं मधुरम् । तथापि रसान्तरविज्जनः मध्यस्थः सन् सकृदपि पुनस्तद्वदतु । इह लोके प्रियादशनच्छदात् अन्यद्यदि स्वादु स्यात् । अत्र वृत्तलक्षणलक्षितत्वेऽपि यदिहान्यदित्यत्र सवर्णदीर्घे कृते यतिभङ्गादश्रव्यत्वमित्याह **अत्रेति** ।

उदाहरणान्तरमाह **यथा वेति** । अस्य कामस्य सुन्दरत्वगुणेन सौन्दर्यगुणेन जं यं मणअंपि मनागपि, परिहरिउं परिहर्तुं, ण तीरइ न शक्यते मया न शक्तमित्यर्थः । अह अथ, णवरं केवलं, जस्स यस्य कामस्य स एव दोषत्वेन पडिपक्खेहिं पि प्रतिपक्षैरपि पडिवण्णो प्रतिपन्नः । कामः परिहर्तुं न शक्यत इति ब्रह्मचारिभिरपि ज्ञायत इत्यर्थः । अत्र हरिउमित्यत्रान्तगुरुत्वात् सगणः । तीरइ इति आदिगुरुत्वात् भगणः । अनयोः शास्त्रसिद्धत्वेऽपि एकतरस्य गुरुत्वापत्तौ श्रव्यत्वसंभवात् तदकरणादश्रव्यत्वमित्याह **अत्रेति** । द्वितीयमुदाहरति **विकसितेति** । विकसिताः ये सहकाराः चूतवृक्षाः तेषां तारः अधिकः हारो मनोहरश्च यः परिमलः तेन गुञ्जिताः पुञ्जिताश्च द्विरेफाः भ्रमराः यत्र । नवानि यानि किसलयानि तान्येव चारुचामराणि तेषां श्रीर्यत्र ईदृशो वसन्तः मुनेरपि मानं संहरति । हारीत्यत्र पादान्तलघोरेकस्य गुरुत्वेन भाव्यम् । तन्नार्हति । हारिप्रमुदितेति पाठे तु "संयोगे गुरुरि"ति गुरुत्वलाभान्न दोष इत्याह **अत्रेति** ।

उदाहरणान्तरमाह **यथा वेति** । विधिना स एष युवा यैः सृष्टः ते संभाराः अन्य एव खलु । के ते संभारा इत्याकाङ्क्षायामाह सा कुमारीति मृत्तिका कैरपि न स्पृष्टेत्यर्थः । सा कन्या मृत् उपादानकारणभूता अन्यैव । ताः गुणरत्नरोहणभुवः अन्याः लोकविलक्षणाः । यत्र यस्मिन् यूनि दृष्टे श्रीमत्कान्तिजुषां विमूढमनसां द्विषां स्त्रीणां च करतलात् अस्त्राणि स्त्रीणां नितम्बस्थलात् वस्त्राणि च पतन्ति । वस्त्राणि चेत्यत्राप्राप्तगुरुत्वात् लघुत्वदोषः । वस्त्राण्यपीति पाठे ण्येति पूर्वाक्षरस्य संयुक्तत्वात्तत्समीपस्थः पिशब्दो लघुरपि गुरुत्वेन प्रतीयत इति न दोष इत्याह **अत्रेति** ।

रसाननुगुणं हतवृत्तमुदाहरति **हा नृपेति** । कस्मिंश्चिन्नृपे मृते सेवकानां विलापवचनम् । हा इति कष्टम् । हे नृप बुधकविबन्धो विप्रसहस्रसमाश्रय देव । सुन्दरचतुरसभामध्यरत्न । क्व गतोऽसि । बतेति खेदे । एते वयं च क्व । करुणरसोचितं वृत्तं परित्यज्य हास्यरसोचितवृत्तकरणाद्दोष इत्याह **हास्येति** ।

**सारबोधिनी**--उर्वी महती । आली पङ्क्तिः । अन्ते समीपे । ऋजु यथा स्यात् । तरुश्रेण्या विशेषणविशेष्यभावेनान्वयाद्वाक्यदोषता । **लक्षणानुसरण** इति । लक्षणं छन्दः । वृत्तं छन्दः । **अप्राप्तेति** । "वा पादान्तेत्यनेन लघोरपि पादान्ते गुरुत्वमतिदिश्यते" तन्न । प्राप्नोति, तत्कार्यकारि न भवतीत्यर्थः ।

**अमृतममृतमिति** । द्वितीयममृतपदमास्वादातिशयपरम् । मध्यस्थः सर्वत्र समः । रसानामन्तरं तारतम्यम् । अत्र हरिणीवृत्ते प्रतिपादं षष्ठे वर्णे यतिरुचिता । चतुर्थपादे यदिह इत्यत्र परपदसंधानेन यतिभङ्गादश्रव्यत्वम् । मात्रावृत्तेऽप्याह **यथा वेति** । **जमिति** । यः परिहर्तुं न तीर्यते मनागपि न सुन्दरत्वगुणेन अथ केवलं तस्य दोषः । प्रतिपक्षैरपि प्रतिपन्नः । **सगणभगणवत्** गुर्वादिगुरू तौ चाव्यवधानेन **प्रथमार्द्धे**

प्रयुक्तौ, न च तथा छन्दःशास्त्रमिति। पादान्तलब्धगुरुकार्याक्षमत्वमुदाहरति **विकसितेति**। परिमलेन पुञ्जित एकत्र समवेत इत्यर्थः । वा पादान्तेत्यस्य वसन्ततिलकेन्द्रवज्रादिविषयत्वादिति भावः।

लक्ष्यान्तरमाह **यथा वेति**। **अन्या इति**। मृदिति समवायिकारणरूपः पार्थिवो भागः। रोहणो रत्नोत्पत्तिहेतुभूतः पर्वतभेदः। संभारा उपकरणानि। **मूढेति**। **मोहः**प्रतिपत्तिलोपः, स च भयात्मकाच्च। अत्र चकारस्य लघुप्रयत्नोच्चार्यतया गौरवाभावः। पाठान्तरे ण्यकारस्य संयुक्तस्य गुरुप्रयत्नोच्चार्यमाणतया अनन्तरस्थो लघुरपि गुरुकार्यकारी भवति। वस्तुतो ण्यतोऽपीति पाठे बन्धदार्ढ्यमपीति न दोषः। **हा नृपेति**। असीति त्वमित्यर्थे। **हास्येति**। इदं वृत्तं प्रकृतकरुणरसाननुगुणमिति भावः।

न्यूनपदं यथा

तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां
वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः।
विराटस्यावासे स्थितमनुचितारम्भनिभृतं
गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥२२०॥

अत्रास्माभिरिति "खिन्ने" इत्यस्मात् पूर्वमित्थमिति च।

अधिकं यथा

स्फटिकाकृतिनिर्मलः प्रकामं प्रतिसंक्रान्तनिशातशास्त्रतत्त्वः।
अविरुद्धसमन्वितोक्तियुक्तिः प्रतिमल्लास्तमयोदयः स कोऽपि ॥२२१॥

अत्र आकृतिशब्दः, यथा वा

इदमनुचितमक्रमश्च पुंसां यदिह जरास्वपि मान्मथा विकाराः।
यदपि च न कृतं नितम्बिनीनां स्तनपतनावधि जीवितं रतं वा ॥२२२॥

अत्र कृतमिति। कृतं प्रत्युत प्रक्रमभङ्गमावहति। तथा च 'यदपि च न कुरङ्गलोचनानाम्' इति पाठे निराकाङ्क्षैव प्रतीतिः।

कथितपदं यथा

अधिकरतलतल्पं कल्पितस्वापलीलापरिमिलननिमीलत्पाण्डिमा गण्डपाली।
सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव स्मरनरपतिलीलायौवराज्याभिषेकम् ॥२२३॥

अत्र लीलेति।

पतत्प्रकर्षं यथा

क: क: कुत्र न घुर्घुरायितघुरीघोरो घुरेत्सूकरः
क: क: कं कमलाकरं विकमलं कर्तुं करी नोद्यतः ।
के के कानि वनान्यरण्यमहिषा नोन्मूलयेयुर्यतः
सिंहीस्नेहविलासबद्धवसतिः पञ्चाननो वर्तते ॥२२४॥

**बालचित्तानुरञ्जनी**—न्यूनाधिककथितपदमित्यत्र न्यूनमुदाहरति **न्यूनेति** । युधिष्ठिरः द्रौपदीं सभायां नग्नां वने वल्कलधरैः व्याधैः समं चिरकालं स्थितं विराटस्यावासे अयोग्यकार्यारम्भेण छन्नं यथा तथा स्थितं च दृष्ट्वा मयि खिन्ने अद्यापि कुरुषु खेदं न भजते कोपं न करोतीत्यर्थः । अत्र उषितं स्थितमित्यत्रास्माभिरिति कर्त्तृपदं खिन्न इत्यत्र इत्थं खिन्न इति वक्तव्यम् । तदकरणान्न्यूनपदत्वमित्याह **अत्रेति** ।

अधिकपदमुदाहरति **अधिकमिति** । स्फटिकाकृतिनिर्मलः । अत्यर्थं शास्त्रज्ञः । अविरुद्धाः परस्परान्वययुक्ताः उक्तयः वचनानि यत्र तस्याम् । शत्रोर्नाशो यस्मात् तादृश उदयो यस्य स कोऽपि प्रसिद्धः कविर्वर्तते । अत्र स्फटिकनिर्मल इत्येतावतैव वाक्ये पूर्णे आकृतिपदमधिकमित्याह **अत्रेति** । अत्रैवोदाहरणान्तरमाह **यथा वेति** । इह यत् पुरुषाणां वृद्धावस्थास्वपि कन्दर्पविकाराः, इदमयुक्तं अक्रमश्च लोकविरुद्धञ्च । यदपि च स्त्रीणां जीवनं रतं वा स्तनपतनपर्यन्तं न कृतं तदप्यनुचितं लोकविरुद्धञ्च । स्तनपतनावधीत्येतावतैव वाक्यपरिपूर्तेः कृतमित्यधिकमित्याह **अत्रेति** । पूर्वार्द्धे कृतपदाभावे उत्तरार्द्धे तत्करणं क्रमभङ्गपरमपि वक्ष्यमाणं दूषणमित्याह **प्रत्युतेति** । एवं दोषे सति किं कर्तव्यमित्याकाङ्क्षायामाह **तथा चेति** । पूर्वत्र तु प्रतीतिः साकाङ्क्षा अत्र तु पाठे न तथेत्यर्थः ।

तृतीयमुदाहरति **कथितमिति** । एकत्र वृत्ते यदेकं पदं द्विः प्रयुज्यते तत्कथितं कथितपदमित्यर्थः । काचित्सखी काञ्चित्प्रत्याह, हे सुतनु ! तव करतलशयने विरचितशयनलीलापरिमिलनेन निमीलत्पाण्डिमा यत्र एतादृशी गण्डपाली कपोलस्थली कस्य नृपस्य कामनृपक्रीडायौवराज्याभिषेकं अञ्जसैव सम्यगेव व्यञ्जयति, कथय । अत्र लीलेतिपदं द्विः प्रयुक्तम् अतो दोषः । "नैकं पदं द्विः प्रयोज्यमिति" **वचनात्** । स्मरनरपतिलक्ष्मीति पाठे नायं दोष इत्याशयेनाह अत्रेति ।

पतन् पादात्पादमवरोहन् प्रकर्षो बन्धच्छायाकृतो यत्र तत्पतत्प्रकर्षम् । तदुदाहरति **पतदिति** । घुर्घुरायिता घुर्घुरशब्दं कुर्वती या घुरी पोत्रं तया घोरः कः कः सूकरः कुत्र न घुरेत् ? शब्दं **कुर्यात्** । कःकः करी कं कमलाकरं विकमलं कमलरहितं कर्त्तुं नोद्यतः ? के के अरण्यमहिषाः कानि वनानि नोन्मूलयेयुः ? यतः पञ्चाननः सिंहीस्नेहविलासेन बद्धा वसतिर्येन एवंविधो वर्तते । अत्र सूकराद्यभिधाने विकटवर्णरूपः प्रकर्षः कृतः । सिंहाभिधाने न कृत इति पतत्प्रकर्षत्वमित्यर्थः ।

**सारबोधिनी—न्यूनपदमिति** । न्यूनपदमधिकपदं कथितपदमिति पदपदस्य प्रत्येकमन्वयः । न्यूनपदमित्यत्र पदपदं वाचकपरम् । तथा च द्योतकन्यूनत्वे अनभिहितमिति वाच्यं बोद्धव्यम् । अनुपात्तविवक्षितान्वयप्रतियोग्युपस्थापकं न्यूनपदम् । **अत्रेत्यादि** । वल्कलधरत्वविशेषणस्य विशेष्यसाकाङ्क्षत्व-

मावश्यकमित्याह **अस्माभिरिति** । **इत्थमित्यादि** । तदैव मात्सर्यानौचित्यम् । इत्थं तथाभूतपाञ्चालतनया-दर्शनादिभिः ।

अधिकमन्वयाप्रतियोगिन उपस्थापकम् । **स्फटिकेति** । **प्रतिमल्लेति** । प्रतिमल्लास्तमयस्य उदयो यतस्तन्मय उदयो वा यत्रेत्यर्थः । **अत्राकृतिशब्द** इति । अधिक इति संबन्धः । निर्मलतायाः स्फटिकपदेनैव प्राप्तत्वात् ।

**इदमिति** । अनुचितं लोकविरूद्धम् । अक्रमः शास्त्रविरोधः । शैशवयौवनजरासु विद्यासेवन-विषयोपभोगधर्मा इति हि शास्त्रम् । अवधिः सीमा । **कृतमितीति** । अधिकमित्यनुषज्यते । तेन कृतमधिकं कृतमित्यर्थः । तद्विनापि निराकांक्षप्रतिपत्तेः सम्भवात् । यद्वा कृतमित्यस्य प्रत्युतेत्यादिनान्वयः । दोषान्तरमाह **कृतं प्रत्युतेत्यादि** । पूर्वार्द्धे क्रियापदं विनैवारम्भात् । यद्वा स्त्रीपुरुषयोरनौचित्याभिधानं हि प्रस्तुतम्, विधेरनौचित्याभिधाने तद्भङ्गः । तेनास्य विवक्षितान्वयप्रतियोगित्वं नास्तीति ध्वनितम् अधिकत्वे त्वाकाङ्क्षाविरहः स्फुट एव दूषकताबीजम् ।

कथितपदमाह **अधीत्यादि** । परिमिलनं हठबन्धः । निमीलन् तिरोभवन् । करस्य हठबन्धनेन रक्तिमोदयात् विरहपाण्डिमतिरोधानम् । पाली स्थली । अञ्जसा तत्त्वतः कथयेति संबन्धः । नरपतिलीला नृपतिचातुर्यम् । अवशयस्य वश्यतापादान तत्र युवराजत्वम् । वृद्धस्मरस्य तत्र कर्मण्यक्षमतया यूना तन्निर्वाहणम् । नृपतिचातुर्ये स्मरकर्तृके यौवराज्याभिषेकं व्यञ्जयतीत्यन्वयः । एतेन स्मरादपि वशी-करणकर्तृत्वावगमः । **अत्रेति** । लीलेति कथितपदमिति संबन्धः । द्विःप्रयुक्तमेकं पदमुद्देश्यप्रतिनिर्द्देश्य-विधयार्ऽथयोरभेदप्रत्यभिज्ञानजननैयत्येन या स्वापलीला तत्रैव यौवराज्यमिति प्रत्ययमुत्पादयति, प्रकृते तु न तद्विवक्षितमिति । दूषकताबीजं तु सत्यप्यर्थभेदतात्पर्ये पदैकत्वदोषादर्थैक्यप्रतिभासः । केचित्तु, एकस्यैव पदस्य द्वितीयवारोपादानं पिष्टपेषणवदचमत्कारीत्याहुः । तन्न, अनवीकृतत्व-साङ्कर्यापत्तेः ।

पतत्प्रकर्षमाह**कः क इत्यादि** । कः कः कुत्र न? अपि तु सर्वत्र । घुर्घुरः शब्दभेदः । घुरी घोणा । अत्रानुप्रासकृतस्य प्रकर्षस्य पतनं व्यक्तमेव । अत्र पूर्वापेक्षयोत्तरत्र बन्धशैथिल्यमेव दूषकताबीजमिति ।

समाप्तपुनरात्तं यथा

क्रेङ्कारः स्मरकार्मुकस्य सुरतक्रीडापिकीनां रवः
झङ्कारो रतिमञ्जरीमधुलिहां लीलाचकोरीध्वनिः ।
तन्व्याः कञ्चुलिकापसारणभुजाक्षेपस्खलत्कङ्कण–
क्वाणः प्रेम तनोतु वो नववयोलास्याय वेणुस्वनः ॥२२५॥

**बालचित्तानुरञ्जनी**—समाप्तं संपूर्णं वाक्यं भूयः आत्तं स्वीकृतं तद्दूषणम् । तदुदाहरति । कामचापस्य क्रेङ्कारः शब्दविशेषः । सुरतक्रीडा एव कोकिलाः तासां रवः । रतिरेव मञ्जरी तस्यां मधुलिहां झाङ्कारः । लीलैव चकोरी तस्याः ध्वनिः । वयः तारुण्यं तस्य लास्याय वेणुशब्दः । एवंविध-**स्तन्व्याः** कान्तायाः कञ्चुलिकापसारणे यद्भुजलताचालनं तेन स्खलत्कङ्कणानां शब्दः युष्माकं प्रीतिं करोतु । अत्र तनोतु व इत्यन्ते वाक्ये परिसमाप्ते पुनः नवं वय इत्यादिरूपकान्तरोपादानं दूषणम् । तावतैव श्रोतृणां चित्तविश्रान्तेः । नवं वय इत्यादेश्चमत्कारकारित्वाभावादित्यर्थः ।

**सारबोधिनी—समाप्तपुनरात्तमिति** । अत्र केचित्, समाप्तं वाक्यं पुनरात्तमित्यर्थ इति वदन्ति । तन्न । सर्वत्र वाक्यावयवस्यावर्त्तने वाक्यावृत्तेरसंभवात् । अन्ये तु वाक्ये समाप्ते जनितान्वयबोधे तदन्वये शब्दान्तरोपादानं अत्रेत्यर्थः । वस्तुतस्तु—विशेष्यं समाप्तं जनितान्वयबोधमनुत्कर्षकोपादानं विना पुनरात्त यत्रेति बोद्धव्यम् । तेन नववयोलास्याय गीतं तथेत्यनुत्कर्षकपदोपादानेनास्य दोषस्य प्रसङ्गः । तथाहि "विमलं जलं नद्याः कच्छे महिषश्चरती"त्यत्र सत्यपि कच्छान्वयतात्पर्ये तद्ग्राहकस्योपादानानुपादानाभ्यां दोषाभावदोषयोः प्रसर इत्यवधेयम् । तेनोत्थाप्याकाङ्क्षास्थलमस्य विषयः । तथा

अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ।।

इत्यत्र विशेषणमर्यादया विशेष्यलाभस्थले अयंपदार्थस्य क्रियान्वयदशायां विनिगमनाभावात् सूर्यमात्रगामियावद्विशेषणसाकाङ्क्षत्वेन न समाप्तता । एवं "अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिक" इत्यत्र प्रमाणाधिक्येनैव श्वासस्य वेपथुजननात् क्रियान्वयेऽपि न वाक्यसमाप्तिरिति न तत्रास्य दोषस्य प्रसङ्गः । तथाहि—वर्णमयो घटोऽस्ति सुन्दर इत्यत्र घटमात्रस्यावृत्तौ दोषो, न विशिष्टस्य जनितान्वयबोधत्वात् विशिष्टस्यान्वयितावच्छेदकत्वादिति ।

द्वितीयार्धगतैकवाचकशेषप्रथमार्धं यथा

मसृणचरणपातं गम्यतां भूः सदर्भा
विरचय सिचयान्तं मूर्ध्नि घर्मः कठोरः ।
तदिति जनकपुत्री लोचनैरश्रुपूर्णैः
पथि पथिकवधूभिर्वीक्षिता शिक्षिता च ।।२२६।।

**बालचित्तानुरञ्जनी**—अन्यदर्धम् अर्धान्तरम् तत्र एकं असहायभूतं वाचकशेषं पदं **यस्मिन्** वाक्ये तत् । तद्धि द्वितीयार्धगतैकवाचकशेषं प्रथमार्धम् । प्रथमार्धगतैकवाचकशेषं द्वितीयार्धमिति । तत्र प्रथममुदाहरति **द्वितीयेति** । हे सीते । यत् यस्मात् कारणात् भूः सदर्भा, तत् तस्मात् कारणात् लघु-चरणपातं यथा तथा गम्यतां यस्मात् धर्मः कठोरः तत् मूर्ध्नि वस्त्रान्तं स्थापय । पथि पथिकवधूभिः

जनकपुत्री इति शिक्षिता । अश्रुपूर्णैर्लोचनैः वीक्षिता च । अत्र तदिति पदं प्रथमार्धशेषम् । तच्च द्वितीयार्धे उपात्तमिति दोष इत्यर्थः ।

"वक्षःस्थलं मुकुन्दस्य कौस्तुभाङ्कं कपर्दिनः ।
चूडालो बालचन्द्रेण जटाजूटश्च पातु वः ॥"

इत्यत्र पूर्वार्धगतैकवाचकमुत्तरार्धमिति द्रष्टव्यम् ।

**सारबोधिनी**—द्वितीयेति । द्वितीयेऽर्द्धे गतं एकमद्वितीयम्, तेनार्धान्तरेऽप्यनेकपदोपादाने नायं दोषः, यद्वा द्वितीयेऽर्द्धे गतं एकमन्वितं वाचकानां पदानामर्थात् प्रथमार्धसंबन्धिनाम् शेषं यत्किञ्चिदवशिष्टं प्रथमार्धाकाङ्क्षितं यत्र एवम्भूतं प्रथमार्द्धम् । द्वितीयार्धान्वयप्रतियोगिनः पदस्य प्रथमार्द्धगतत्वे प्रागेव तदुपस्थितेरन्वयबोधे विलम्बो न । यथा—

"वक्षःस्थलं मुकुन्दस्य कौस्तुभाङ्कं कपर्दिनः ।
चूडालो बालचन्द्रेण जटाजूटश्च पातु वः" ॥ इति ।

तद्वारणाय प्रथमद्वितीयपादाभ्यामर्धं विशेषितम् । **मसृणेत्यादि** । भूः सदर्भा तन्मसृणचरणपातं गम्यताम् । एवमुत्तरत्रापि । अत्र परार्धपतितस्य तत्पदस्य विलम्बेनोपस्थित्याऽन्वयबोधविलम्ब इति दूषकताबीजम् । अत्र केचित्, भूसदर्भत्वमसृणचरणपातयोः कठोरघर्मत्वमूर्धावगुण्ठनयोश्च हेतुहेतुमद्भावेनान्वयोपपत्तौ किं तच्छब्दापेक्षणेन । तदिति पुनरखण्ड एव निपातः प्रागुक्तपरामर्शकः । तथा च, 'भूः सदर्भे'त्यत्रार्थहेतुत्वम् तथोत्तरत्रापीति नात्र दोष इति वदन्ति । तन्न । शाब्दी ह्याकांक्षा शब्देनैव पूर्यत इति न्यायाच्छाब्दे हेतुत्वे संभवत्यार्थत्वस्यान्याय्यत्वात्, तदित्यखण्डनिपाते प्रमाणाभावाच्च । वाक्यान्तरान्तःपातविरहान्न सङ्कीर्णसाङ्कर्यम् ।

अभवन् मतः (इष्टः) योगः (सम्बन्धः) यत्र तत् । यथा

येषां तास्त्रिदशेभदानसरितः पीताः प्रतापोष्मभि-
र्लीलापानभुवश्च नन्दनवनच्छायासु यैः कल्पिताः ।
येषां हुंकृतयः कृतामरपतिक्षोभाः क्षपाचारिणां
किं तैस्त्वत्परितोषकारि विहितं किञ्चित्प्रवादोचितम् ॥१२७॥

अत्र "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इत्युक्तनयेन यच्छब्दनिर्देश्यानामर्थानां परस्परमसमन्वयेन यैरित्यत्र विशेषस्याप्रतीतिरिति । "क्षपाचारिभिः" इति पाठे युज्यते समन्वयः ।

**बालचित्तानुरञ्जनी**—अभवन् अविद्यमानः मतः इष्टः संयोगः सम्बन्धो यत्र । तदुदाहरति । येषां क्षपाचारिणां प्रतापोष्मभिः ताः प्रसिद्धाः त्रिदशेभदानसरितः पीताः, यैश्च चन्दनतरुच्छायासु लीलापानभुवः कल्पिताः, येषां हुंकृतयः कृतामरपतिक्षोभाः तैः क्षपाचरैः त्वत्परितोषकारि प्रवादोचितं किञ्चिद्विहितं किम् ? अत्र च, 'गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यादि'ति जैमिनीयसूत्रेण "अरुणया पिङ्गाक्ष्या गवा सोमं क्रीणाती"त्यत्र गुणानामारुण्यादीनां क्रयार्थतया समन्वयः, न त्वन्योन्यम् गुणत्वेन समत्वादिति प्रतिपादितम् । अतस्तन्न्यायेनात्रापि यच्छब्दनिर्दिष्टानां गुणानामन्योन्यान्वयाभावादेव क्षपाचारिणामित्यस्य यैरित्यनेन सम्बन्धाभावाद्विशेष्यत्वाप्रतीतेरिति दूषणमित्याह **अत्रेति**। गुणानां विशेषणानामित्यर्थः । कीदृशे पाठे समन्वय इत्याकाङ्क्षायामाह क्षपाचारिभिरिति ।

**सारबोधिनी**—**अभवन्निति** । विवक्षितसंबंधबोधं प्रति स्वरूपायोग्यत्वमित्यर्थः । तेन विधेयाविमर्शे नातिव्याप्तिः । तत्र रचनान्यथात्वे विवक्षितसंबंधबोधोपपत्तेः । तत्र वैभक्तिकोऽन्वयबोधो भक्त्यैवात्र तु सोऽपि नेति विशेषाच्च । **येषामित्यादि** । दानं मदजलम् । ऊष्मणो नदीशोषणमुचितम् । तस्य रावणस्य परितोषजनकं प्रवादोचितं सदसि कथनयोग्यम् । **अत्रेति** । गुणत्वमप्रधानत्वम् । विशेषणत्वमिति यावत् । परार्थत्वात् विधेयार्थत्वात् । तथा च परप्रयोजनप्रवृत्तानां तेषां गुणत्वेन समत्वादन्योन्यं विशेषणविशेष्यसम्बन्धाभावे यैरित्यत्र विशेष्यत्वप्रतीतिर्न स्यात् इत्यर्थः । यैरिति क्षपाचारिणामिति पदयोर्विभिन्नविभक्तिकयोरभेदान्वये स्वरूपायोग्यत्वात् । केचित्तु, परस्परसमन्वय इति पाठं स्वीकृत्य परस्परसमन्वये एकविशेष्यसंगतिरूपे, अन्यथा वाक्यभेदप्रसङ्गादित्यर्थमाहुः । ननु तृतीयान्तपाठकल्पनेऽपि षष्ठ्यन्तानन्वयतादवस्थ्यमिति चेन्न । यावदर्थपरामर्शकतत्पदेन सह क्षपाचारिभिरित्यस्य विशेषणविशेष्यभावोपपत्तौ सकलयदर्थ-क्षपाचारिणोरर्थाभेदान्वयस्य न्याय्यत्वात् । तदाह **युज्यत इति** ।

यथा वा

त्वमेवंसौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अपि द्वन्द्वं दिष्ट्या तदिति सुभगे संवदति वाम्
अतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥२२८॥

अत्र यदित्यत्र तदिति तदानीमित्यत्र यदेति वचनं नास्ति । 'चेत्स्यात्' इति युक्तः पाठः ।

**बालचित्तानुरञ्जनी**—अत्रैवोदाहरणान्तरमाह **त्वमेवमिति** । त्वमेवंसौन्दर्य्या अनुपमनीया अभिरूप्या । स च नायकः रुचिरतायाः परिचितः । इह युवामेवं कलानां परं सीमानं परां काष्ठां भजथः । हे सुभगे ! वां इति । एवंविधं तद् द्वन्द्वं दिष्ट्या संवदत्यपि । अतः शेषं अधिकं यत् तत् यदास्यात्तदानीं गुणितया जितं स्यात् तन्नाम्नीत्यर्थः[?] । अत्र यदित्यत्र तदित्यभावात्, तदानीमित्यत्र यदेत्यभावात् इष्टः सम्बन्धो न सिद्ध्यति । अतः अभवन्मतयोगो दूषणमित्याह **अत्रेति** । अतः शेषं यत् तत् यदा स्यात्तदानीं गुणितया जितमिति सम्बन्धः इष्टः, तदकरणादित्यर्थः । न च न्यूनपदत्वं दूषणमिति अभवन्मतोदाहरणं

न भवतीति वाच्यम् । पदानां संभवेन अभवन्मतयोगस्यैव विवक्षितत्वात् । तर्ह्यत्र कस्मिन् पाठे दोषाभाव इत्याकाङ्क्षायामाह चेदिति । अतः शेषं चेत्स्यादिति पाठे चेच्छब्दस्य यद्यर्थत्वेनाकाङ्क्षाभावादित्यर्थः ।

**सारबोधिनी**--प्रपञ्चयति **यथा वेति** । **त्वमिति** । एवमनुभवमात्रगोचरं विशिष्य कथयितुमशक्यं सौन्दर्यं यस्याः । रुचिरता मनोहारिता । अपिः संभावने । वां युवयोः । दिष्ट्या भाग्येन । संवदति योग्यं भवति । शेषं सङ्गमरूपम्, प्रेमरूपं वा । गुणिता गुणवत्ता । **यदित्यत्रेति** । यदिति स्यादिति क्रियाविशेषणम् । यच्छेषभवनं स एव गुणिताया जयः । अत्र तत्पदानुपादाने मतयोगे स्फुटमेव स्वरूपायोग्यत्वम् । न च न्यूनपदत्वम् । तदः प्रकृतेरुपादानात् । प्रकृतिप्रत्यययोर्द्वयोरनुपादान एव तथात्वादिति केचित् । अन्ये तु, न्यूनत्वनिबन्धनमेतदिति दर्शयितुं लक्ष्यान्तरोपादानमिति तर्हि न्यूनपदस्यात्रानुप्रवेशः स्यादिति चेन्न । आक्षेपादिनापि कदाचिदन्वयबोधसंभवात्तत्र स्वरूपायोग्यत्वविरहादिति ।

यथा वा

सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।
कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥२२६॥

अत्राकर्णनक्रियाकर्मत्वे कोदण्डं शरान् इत्यादि वाक्यार्थस्य कर्मत्वे कोदण्डः शरा इति प्राप्तम् । न च यच्छब्दार्थस्तद्विशेषणं वा कोदण्डादि । न च केन केनेत्यादि प्रश्नः ।

**बालचित्तानुरञ्जनी**--अत्रैवोदाहरणान्तरमाह **यथा वेति** । हे देव ! सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते सति येन येन सहसा यद्यत्समासादितं प्राप्तं तत्तदाकर्णय । कोदण्डेन धनुषा शराः सङ्गताः । शरैः अरिशिरः सङ्गतम् । तेनापि शिरसा भूमण्डलं सङ्गतम् । तेन भूमण्डलेन त्वं सङ्गतः । भवता च अतुला कीर्तिः सङ्गता । कीर्त्या च लोकत्रयं व्याप्तम् । अत्र प्रथमार्धे तदाकर्णयेति विधिवाक्यम्, येन येनेत्यादिकमुद्देश्यवाक्यम् । अत्र द्वितीयार्धगतं "कोदण्डेन शरा" इत्यादिवाक्यं किं विधिवाक्यान्तर्भूतम् उद्देश्यवाक्यान्तर्भूतं वा ? केन केन किं किं समासादितमित्याकाङ्क्षायां पृथग्वाक्यं वा ? आद्येऽपि पदार्थमात्रस्य आकर्णनं प्रति कर्मत्वम् उत पदार्थसमुदायभूतस्य वाक्यार्थस्य, आहोस्वित् परस्परान्वितपदार्थसमुदायस्येति विकल्प्याद्यं दूषयति **अत्रेति** । आकर्णनक्रियाकर्मत्वे "कर्मणि द्वितीये"ति द्वितीयैव स्यात्, न तु तृतीयादिरित्यर्थः । द्वितीयं दूषयति **वाक्यार्थस्येति** । समुदायस्य कर्मत्वेऽपि प्रत्येकमकर्मत्वात् द्वितीयानुपात्तावपि प्रातिपदिकार्थमात्रस्य विवक्षितत्वात् सर्वत्र प्रथमैव स्यादित्यर्थः । नापि तृतीयः । कोदण्डेनासादितान् शरान् आकर्णयेत्यादिप्रयोगप्रसङ्गादिति द्रष्टव्यम् । द्वितीयेऽपि, कोदण्डादिर्यच्छब्दार्थो वा यच्छब्दार्थविशेषणं वा ? यच्छब्दार्थविशेष्यं वेति विकल्प्याद्यं दूषयति

**न च यच्छब्दार्थं इति** । कोदण्डादौ यच्छब्दस्य सङ्केताभावादित्यर्थः । द्वितीयं दूषयति **तदिति** । **न चेत्यनुषज्यते** । कोदण्डादिना येन येन शरादिकं यद्यत्समासादितं तत्तदाकर्णयेत्युक्तेराकर्णनीयान्तराभावेनासङ्गतत्वप्रसङ्गादित्यर्थः । न तृतीयः, उक्तदोषानुषङ्गादिति द्रष्टव्यम् । तृतीयं दूषयति **न चेति**। श्लोके केन केनेति प्रश्नाभावात् उत्तरार्धगतकोदण्डादिपदानामाकाङ्क्षाभावेनानन्वयात् । अतः अभवन्मतयोगत्वमित्यर्थः । ननु येन येन समासादितं तत्तदाकर्णय यद्यत्समासादितं तत्तदाकर्णयेति वक्तुमुपक्रान्तत्वात् निर्विशेषं न सामान्यमिति न्यायेन प्रश्नं विना विशेषनिष्ठतया कोदण्डादेरवक्तव्यत्वादिति दूषणोदाहरणत्वं चिन्त्यम् ।

**सारबोधिनी**—वाक्ययोरसंबन्धमाह **सङ्ग्रामेति** । सुखसञ्चारेणाङ्गणत्वम् । **अत्रेति** । आकर्णयेति क्रियायाः कर्मान्तरानुपादानात्तु पदार्थानां वाक्यार्थस्य वा कर्मत्वं वक्तव्यम् । तत्र क्रमात् बाधकमाह **कोदण्डं शरानिति** । तेषां यत्पदार्थत्वेनाकर्णनीयत्वात् । कोदण्डः शराः इति शुद्धप्रातिपदिकार्थे प्रथमाविभक्तेरनुशासनात् । माहिषं दधि सशर्करं पय इतिवत् । ननु यच्छब्दानां कोदण्डादिशब्दानामपि कोदण्डादय एव अर्थाः । ततश्च येन येन इत्यादिभिः कोदण्डादयो यथा प्रत्यायिताः कोदण्डेत्यादिभिरपि तथैव प्रत्यायितव्या इति कर्तृकर्मत्वप्रतीतये यत्पदेभ्य इव कोदण्डादिपदेभ्योऽपि तृतीयादयो युक्ता इत्याशङ्क्य निराकरोति **न च यच्छब्दार्थं इति** । यदि यच्छब्देभ्यः कोदण्डत्वादिरूपेण कोदण्डादिकर्तृकशरादिकर्मकासादनावगमः तदा कोदण्डेत्यादिवैकल्यप्रसङ्गात् । यथा घटो घट इतिवत् । अथ यो घटस्तमानयेत्यत्र घटपदस्य तात्पर्यग्राहकत्वेन संभेदाद्यथा न वैयर्थ्यं तद्वदत्रापि स्यादित्याशङ्क्य निराकरोति **तद्विशेषणं वेति** । न चेत्यनुषञ्जनीयम् । स एव विशेषणं यत्रेति विग्रहस्तेन यैरित्यत्र विशेष्यस्याप्रतीतिरिति ग्रन्थस्य न विरोधः । विशेषणविशेष्यभावेनैव संभेदः । न च प्रकृते यथा येन शरा यच्छरा इत्यसङ्गतेः, विशेषणविशेष्ययोस्समानविभक्तिकवचनस्यौत्सर्गिकत्वात् । अथ येन यद्यत्समासादितमिति वाक्यार्थे अपर्यवसिते केन केनेत्यादिप्रश्ने कोदण्डाभिधानं भविष्यतीत्याशङ्क्य निषेधयति **न च केन केनेत्यादि** । आदिशब्दात्किं किमित्यस्य परिग्रहः । न च न कथं प्रश्नस्तस्य संवेदकाभावात् । न चोत्तरस्यैव प्रश्नोन्नायकता, कोदण्डेत्यादेः प्रश्नं विनैव स्वार्थपर्यवसानात् । अन्यथा सिद्धस्वार्थापर्यवसान एव तदुन्नायकत्वात् । यथा—

गम्यतामन्यतः पान्थ तवेह वसतिः कुतः ।
दोषाय स्यादलं यस्माद्वसतिः प्रोषितालये ॥

इत्यत्र भो गृहिणि वासं देहीति याचनं विना तवेह वसतिः कुतः इति प्रतिवचनानुपपत्तेः । प्रकृते तु न तथेति न प्रश्नोन्नयनम् । कोदण्डेत्यादेः प्रश्नोन्नायकत्वे येन येनेत्यादिवैयर्थ्याच्च । तस्माद्येनयेनेत्यादिना कादण्डादिव्यतिरिक्ते एव कर्तृकर्मणी प्रतीयेते इति मतयोगाभाव इति टीकाकृतः ।

नवीनास्तु, येन येन यद्यदिति सामान्याभिधानस्य केन केनेत्यादिप्रश्नोत्थापकत्वनैयत्येन प्रश्नस्य पूर्वसिद्धत्वेऽप्येवंरीत्या मतयोगविरहो बोध्यः । तथाहि कोदण्डेत्यादिना कर्तृकर्मणोरेवाभिधानं, न तु क्रियायाः । एतच्च क्रियाविनिर्मुक्तकर्तृकर्मगोचरप्रश्ने सत्येव संभवति न च तथा । क्रियासंवलितपूर्ववाक्योत्थापितप्रश्नस्य क्रियासंवलनावश्यकत्वात् । संवलनं शाब्दमार्थञ्चेति परिग्रहः । निष्क्रियोत्तरेण

च क्रियाकाङ्क्षाया अनिवृत्तेरित्याह **न च केन केनेत्यादीति**। आदिपदात्तु क्रियां विहाय किं किमित्यस्य परिग्रहः। तथा च समासादनक्रियानुपादानात् कोदण्डादिकर्तृकर्मणोः परस्परमन्वये मतयोगविरहः। न चोपस्थितसमासादनेनान्वयः, तस्य पर्यवसितत्वात्। न च कोदण्डादिकारकपदानां क्रियापदसाकाङ्क्षत्वादावृत्तिः। बहुत्वपुंस्त्वस्त्रीत्वान्वितानां शरादिपदानां नपुंसकत्वैकान्वितसमासादितक्रियापदं प्रति अयोग्यत्वेन निराकाङ्क्षत्वात्, आकाङ्क्षाया एवावृत्तिबीजत्वात्। अतएव नपुंसकानपुंसकयोर्नपुंसकवद्वेति सर्वत्रैकत्वनपुंसकत्वाभ्यामन्वय इति निरस्तम्। आवृत्त्यभावेन पदज्ञानाभावात् पदार्थानुपस्थितावेकरूपेणान्वयविरहात्। अत एवायमेव श्लोकः—संप्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितमिति द्वितीयपादं कृत्वा मालादीपके उदाहृतः। अत्र पर्यवसितः समासादनत्वस्य नपुंसकत्वेनैकत्वेन च सर्वत्र परत्रान्वय इत्याहुः।

यथा वा

चापाचार्यस्त्रिपुरविजयी० ॥२३०॥ इत्यादौ भार्गवस्य निन्दायां तात्पर्यम्। कृतवतेति परशौ सा प्रतीयते। कृतवत इति तु पाठे मतयोगो भवति।

**सारबोधिनी**—वस्तुतस्तु उक्तापरितोषादुदाहरणान्तरमाह **चापाचार्य इति**। इयं युयुत्सुं भार्गवं प्रति रावणस्योक्तिः। अत्र रावणस्य भार्गवेण सह युद्धमनभिलषितमिति तदुपेक्षा वाक्यार्थः। सा च न प्रतीयते, परशुनिन्दायां भार्गवस्यानुपेक्षणीयत्वात्। कृतवतेत्यस्य परशुविशेषणत्वेन परशुनैव तदर्थाभिसंबन्धात्तत्रैव निन्दा प्रतीयते। न च तथा सति सङ्गतिरिति भावः। **मतयोग इति**। भार्गवनिन्दायोगरूप इत्यर्थः। न च परशुनिन्दामुखेनैव भार्गवनिन्दाया अधिकचमत्कारित्वमेवञ्च मतयोग इत्यत्र अमतयोग इति कस्यचिद् व्याख्यानमादरणीयमिति वाच्यम्। अस्त्रनिन्दायामप्यस्त्रिणोऽनिन्दितत्वात् सर्वत्र पाठकल्पनाया दोषोद्धारत्वाच्च।

यथा वा

चत्वारो वयमृत्विजः स भगवान् कर्मोपदेष्टा हरिः
सङ्ग्रामाध्वरदीक्षितो नरपतिः पत्नी गृहीतव्रता।
कौरव्याः पशवः प्रियापरिभवक्लेशोपशान्तिः फलं
राजन्योपनिमन्त्रणाय रसति स्फीतं हतो दुन्दुभिः ॥२३१॥

अत्राध्वरशब्दः समासे गुणीभूत इति न तदर्थः सर्वैः संयुज्यते।

**बालचित्तानुरञ्जनी**—उदाहरणान्तरमाह **यथेति**। भीमस्य वचनम्। चत्वारो वयं भीमादयः ऋत्विजः। स प्रसिद्धः भगवान् हरिः कर्मोपदेष्टा। नरपतिः युधिष्ठिरः सङ्ग्रामाङ्गणाध्वरदीक्षितः। पत्नी गृहीतव्रता। कौरव्याः पशवः। प्रियापरिभवक्लेशोपशान्तिः फलम्। यशोदुन्दुभिः राजन्योपनिमन्त्रणाय स्फीतं यथा स्यात्तथा रसति शब्दं करोति।

**सारबोधिनी**—वस्तुतस्तु— परशुनिन्दाया अप्रतीतौ परशुना बद्धस्पर्द्धो लज्जते इत्यसङ्गतं स्यादित्यस्वरसादाह **चत्वार इति**। भीमार्जुननकुलसहदेवाश्चत्वारः। हतो दुन्दुभिः स्फीतं स्निग्धम् रसति। ताडने स्निग्धशब्दोदयात् जयसूचनम्। यशोदुन्दुभिरिति वा पाठः। प्रिया द्रौपदी। कौरव्या दुर्योधनादयः। राजन्यं राजसमूहः। **अत्रेति**। समासप्रविष्टस्यान्येन सहाकाङ्क्षाविरहात् ऋत्विगादीनामध्वरपदार्थेन सहान्वये भवत्येवाभवन्मतयोगः। न चात्र 'प्रिये, रणयज्ञः प्रवर्तत' इत्यनेनान्वय इति वाच्यम्। तथा सति सङ्ग्रामाध्वरशब्दस्य पुनरुक्तत्वं स्यादिति। वस्तुतस्तु—क्रुद्धस्योक्तौ पुनरुक्तत्वं गुण एवेति।

यथा वा

जङ्घाकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः
प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः।
भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी—
संभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्याः ॥२३२॥

अत्र दण्डपादगता निजतनुः प्रतीयते भवान्याः संबन्धिनी तु विवक्षिता।

**बालचित्तानुरञ्जनी**—उदाहरणान्तरमाह **यथेति**। जङ्घाकाण्डमेव ऊरुनालं यस्य। नखकिरणा एव लसत्केसराः, तेषां आल्यः[ताभिः]करालः प्रत्यग्रं नूतनं यत् अलक्तकं तस्य आभाः कान्तय एव प्रसरन्ति किसलयानि यस्य। मनोहरमञ्जीर एव भ्रमरो यत्र। निजा या तनुः तस्याः स्वच्छं यल्लावण्यं तदेव वापी तस्याः अम्भोजशोभां विदधत्, एवंविधः भर्तुः शम्भोः नृत्तानुकारे भवान्याः सुन्दरः दण्डाकारः पादो जयति। अत्र गुणभूताया अपि भवान्याः निजतनुरिति संबन्धः विवक्षितः कविना। स न प्रतीयते दण्डपादेनैव प्रधानेन संबन्धस्य प्रतिभासनात्। निजतनुशब्दयोः कर्तृपरत्वादित्यभवन्मतयोगत्वमित्याह **अत्रेति**।

**सारबोधिनी**—**भवानीत्यादि**। निजस्वात्मादिशब्दानां प्रधानक्रियान्वयित्वव्युत्पत्तेः न भवानीगतत्वावगतिः।

अवश्यवक्तव्यमनुक्तं यत्र। यथा

अप्राकृतस्य चरितातिशयैश्च दृष्टैरत्यद्भुतैरपहृतस्य तथापि नास्था।
कोऽप्येष वीरशिशुकाकृतिरप्रमेयसौन्दर्यसारसमुदायमयः पदार्थः ॥२३३॥

अत्र "अपहृतोऽस्मि" इत्यपहृतत्वस्य विधिर्वाच्यः, तथापीत्यस्य द्वितीयवाक्यगतत्वेनैवोपपत्तेः।

**बालचित्तानुरञ्जनी**—अनभिहितं अवश्यवक्तव्यं सत् अनुक्तं वाच्यं यत्रेति समासमाह **अवश्येति**। तदुदाहरति **यथेति**। अप्राकृतस्य लोकोत्तरस्य रावणस्य दृष्टैः अत्यद्भुतैः चरितातिशयैः कैलासचालना-

दिभिः अपहृतस्य मम तथापि नास्था। अप्रमेयाणां अचिन्तनीयानां महानुभावतासंबन्धिनां उत्कृष्टाशयानां यः समुदायरूपः पदार्थः वीरबालकाकृतिः, कोऽप्येष रामचन्द्राख्यो वर्तते । तत्रैवास्थेत्यश्री[?]। अत्रापहृतोऽस्मीति पृथक् वाक्यं कार्यम्, अन्यथा एकवाक्यतापातात्। तथा च सति तथापीत्यस्यानर्थक्यं स्यादित्यनभिहितवाच्यमेतदित्याह **अत्रेति**।

**सारबोधिनी**—अनभिहितवाच्यमिति व्याचष्टे **अवश्येति** । अनभिहितं वाचकपदातिरिक्तत्वमवश्यं वाच्यं यत्र तदित्यर्थः। वाचकानभिधाने न्यूनपदत्वाभिधानात्। **अप्राकृतस्येति** । यत्किञ्चित्कौतुकानाकृष्टस्य अपहृतस्य वशीकृतस्य। दृष्टैश्चेति भिन्नक्रमश्चकारः तेन श्रुतैरिति समुच्चीयते। अन्यस्मादन्यचरितश्रवणदर्शनाभ्यां वशीकृतस्यापि ममान्यादृशस्य माहात्म्यस्य दर्शनात् नास्था अनादर इत्यर्थः। अपहृतोऽस्मीति विधिस्वरूपकथनम्। अस्मीत्यहमर्थे। **तथापीति**। अत्र हि तदः प्रक्रान्तवाचित्वं प्रक्रान्तत्वं पूर्वप्रतीतत्वमित्येकवाक्यतयान्वये तदभावः स्फुट एव। ननु विधेयाविमर्श एवायमिति, चेन्न। विधेयाविमर्शमात्रस्यादोषत्वात्। **तथापीति**। यदा सङ्गतिप्रयुक्तस्य तथात्वात्। तदनुरोधेनैवापहृतत्वस्य विधेयत्वाङ्गीकारत्वात्।

यथा वा

एषोऽहमद्रितनयामुखपद्मजन्मा प्राप्तः सुरासुरमनोरथदूरवर्ती ।
स्वप्नेऽनिरुद्धघटनाधिगताभिरूपलक्ष्मीफलामसुरराजसुतां विधाय ।।२३४।।

अत्र मनोरथानामपि दूरवर्तीत्यप्यर्थो वाच्यः। यथा वा

त्वयि निबद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखचेतसः ।
कमपराधलवं मम पश्यसि त्यजसि मानिनि दासजनं यतः ।।२३५।।

अत्र 'अपराधस्य लवमपि' इति वाच्यम्।

**बालचित्तानुरञ्जनी**—उदाहरणान्तरमाह **यथा वेति**। उषा नामाप्यचिन्त्यासुता लोके पुराणप्रसिद्धया बाणासुरपुत्रीति प्रसिद्धा। तद्वयं वरे प्रसिद्धिं श्रुतवतः समागतस्य पार्वतीमुखोत्पन्नस्य कस्यचित् गौर्याः सुत इति ज्ञानानन्तरं वचनम्[?]। पार्वत्या मुखमेव पद्मं, ततो जन्म यस्य। सुरासुरमनोरथानामपि दूरवर्ती एषोऽहं स्वप्ने अनिरुद्धेन कामसुतेन, या घटना, तया अधिगतं प्राप्तं, आभिरूप्यलक्ष्म्याः सुरूपतासमृद्धेः फलं यया तां उषां असुरराजस्य बाणस्य सुतां विधाय सुतामिति ज्ञात्वा, प्राप्तः आगतः। अत्र मनोरथानामपीत्यपिशब्दार्थो वाच्यः। स च तत्प्रयोगादृते न स्यादित्यनभिहितवाच्यत्वमित्याह **अत्रेति**।

उदाहरणान्तरमाह **यथेति**। हे मानिनि ! त्वयि बद्धरतेः प्रियवादिनः प्रणयभङ्गपराङ्मुखं चेतो यस्य तस्य मम कमपराधलवं पश्यसि ? यतः दासजनं मां त्यजसि। पूर्ववदत्रापि अप्यर्थस्य वाच्यत्वम्, इतरथा स्थूलो ममापराधो न क्षुद्र इत्यनौचित्यापातात्। नैतत् न्यूनपदम्, प्रधानपदस्यात्र न्यूनत्वाभावात्। अतोऽनभिहितवाच्यत्वमेवेत्याह **अत्रेति**।

**सारबोधिनी**—ननु तथापि हृतस्येति पदस्य तथापिना सहान्वयबोधाक्षमतयाऽभवन्मतयोगः स्यादित्यस्वरसादुदाहरणान्तरमाह **यथा वेति**। इदं च विधेयाविमर्शसङ्कीर्णमपि न भवतीत्युदाहरणान्तर-दानबीजम्। **एष इति**। अनिरुद्धेन सह घटनया प्राप्तं सौन्दर्यं संपत्तिफलं यया। एवं निर्मायाहं प्राप्त इत्यन्वयः। **अप्यर्थो वाच्य इति**। अप्यर्थः समुच्चयः, न केवलं बहिरिन्द्रियादीनामित्येवंरूपः। स च अपेरनुपादानान्नोपपन्नः। तदाह **मनोरथानामपीति**। अन्यथा अपराधलवं न पश्यसि किन्तु महान्तमपराध-मिति प्रतीयेत्[?]।

अस्थानस्थपदं यथा

प्रियेण संग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने।
स्रजं न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा न वस्तुषु ॥२३६॥

अत्र "काचिन्न विजहौ" इति वाच्यम्।

यथा वा

लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे
मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तःकपोलस्थलम्।
पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीतया
प्रोन्मृष्टः करपल्लवेन कुटिलाताम्रच्छविः पातु वः ॥२३७॥

अत्र नखलक्ष्मेत्यतः पूर्वं "कुटिलाताम्र०" इति वाच्यम्।

**बालचित्तानुरञ्जनी**—अपदस्थपदसमासमित्यत्र प्रथमपदशब्दः स्थानवाची। अस्थानपदं अस्थानसमासञ्चेति द्विविधम्। तत्राद्यमुदाहरति **अस्थानेति**। काचित्कामिनी प्रियेण सपत्नीसन्निधौ संग्रथ्य स्थूलस्तने वक्षसि प्रक्षिप्तां जलम्लानामपि स्रजं न परिकल्पितवती। हि यस्मात् कारणात् गुणाः प्रेम्णि वसन्ति, न वस्तुनि। अत्र न काचिदिति निर्देशेन, न काचिद्विजहौ किन्तु सर्वा एव विजहुरिति वाक्यार्थस्यासमञ्जसत्वप्रसङ्गः, नञः पूर्वभावित्वेन विशिष्टे निषेधाप्रतीतेः। काचिन्न विजहावित्युच्यमाने एकैव विजहाविति प्रतीयते, क्रियामात्रस्यैव निषेधात् इत्यस्थानपतितमेतदित्याह **अत्रेति**।

उदाहरणान्तरमाह **यथा वेति**। निद्रान्तरे क्रीडया यः कचग्रहः तेन श्लथा या जटा तस्यां लम्बो लम्बनं यस्य तेन नीलकण्ठशिरःस्थितचन्द्रखण्डेन। अन्तःकपोलस्थलं पार्वत्याः गण्डस्थले लग्नः। नखकृतमेत-दिति शङ्किता या सखी तस्याः यन्नर्मस्मितं क्रीडाहास्यं तेन लज्जितया पार्वत्या करपल्लवेन हेतुना प्रोन्मृष्टा कुटिला ताम्रच्छविः मुद्राङ्कः वः पातु। कदाचित् रात्रौ प्रणयकलहेन शिवस्य जटाग्रहणेन तत्स्थं चन्द्रखण्डं हस्ते समागतं कपोलतले संस्थाप्य निद्रां कृतवती भवानी। ततः प्रातः समये चन्द्रमुद्राङ्कित-

कपोलदर्शनेन नखक्षतमेतदिति शङ्कमाना सखीहासेन लज्जिता अभवदित्यर्थः। अत्र हरशिरश्चन्द्रशकल-मुद्राङ्कं प्रति सख्याः नखलक्ष्मशङ्कायां यत्कारणं कुटिलाताम्रच्छवित्वं तत् नखलक्ष्मेत्यतः प्राक् वक्तव्यम्, कार्योत्पत्त्यनन्तरं कारणोपन्यासस्य वैयर्थ्यात्। अतः अपदस्थपदत्वमित्याह **अत्रेति**।

**सारबोधिनी—अस्थानस्थपदमिति**। अत्र सौत्रपदस्य स्थानार्थत्वम्। तथा चापदस्थपदमपदस्थ-समासञ्चेति बोध्यम्। **अस्थानस्थेति**। अयोग्यस्थानस्थेत्यर्थः। तत्त्वं च यथास्थितिविवक्षितस्वार्थानुभाव-कत्वे सति स्वाकाङ्क्षव्यवहितस्थानप्रयुक्तत्वम्। यथास्थितितयेवानुपूर्व्या, तेन सङ्कीर्णगर्भिताक्रमेषु **न** प्रसङ्गः। तेषु तयानुपूर्व्या विवक्षितार्थाननुभावकत्वात्। अत्र तु न तथेति वक्ष्यामः। **प्रियेणेति**। संग्रथ्य सम्यक् निर्माय। विपक्षसपत्नीवक्षस्यर्पणे हेतुः पीवरस्तनत्वम्। जलाविलामित्यत्रापिवाच्यः। प्रेम्णि सति वस्तुनि गुणा उत्कर्षाः, न तु वस्तुमात्रे। **न विजहाविति**। अत्रासमस्तस्य नञः क्रियान्वयित्वतात्पर्यग्रहे क्रियाकाङ्क्षायामन्तरा काचिदित्यर्थोपस्थितौ क्रियाया अलाभेन तस्याः स्थगनम्। अनन्तरञ्च क्रियो-पस्थितावयोग्यकारकपरिहारेण तया सह स्वस्थानस्थितस्य नञो विलम्बेनान्वयः। क्रियासान्निध्ये नैव-मित्याह **काचिन्न विजहाविति**। यथाश्रुतानुपूर्व्यन्तराकल्पनान्न क्लिष्टत्वम्। नञः क्रियया योगविलम्बेना-भावानुभावकत्वविलम्ब इत्यासत्तिवैगुण्यं दूषकताबीजम्। न च 'नवजलधरः' इत्यादावपि नामसान्निध्येऽप्य-समस्तस्य नञोऽभावप्रत्यायनेन विलम्बः स्यादिति वाच्यम्। तत्र गम्यमानभवतिक्रियासान्निध्यात्। अत्र तु क्रियोपादानेनाध्याहाराभावात् क्रियासान्निध्यमात्रेणैव नञोऽभावानुभावकत्वम् न तु पूर्वापरत्व-नियमेनेत्यक्रमाद् भेदः। तत्र तु पौर्वापर्यनियमोल्लङ्घनमिति दूषकताबीजम्। केचित्तु, नञः समभिव्याहृत-निषेधव्युत्पत्तेर्न काचिदित्यत्रानिर्धारितैकविशेषनिषेधप्रसिद्धौ सर्वा विजहुरित्यर्थः प्रतीयते। न चायं विवक्षितः। क्रियापदस्य सन्निधावुपादाने क्रियामात्रनिषेधप्रतीतौ विवक्षितार्थसिद्धिरित्याहुः।

प्रपञ्चयति **यथा वेति**। शितिकन्धरः शिवः, तदिन्दुशकलेनान्तःकपोलस्थलं लग्नो मुद्राङ्कः पातु वः। अन्यसम्पर्कादन्यत्र समुदितं चिह्नं मुद्राङ्कः। कथं तस्य पार्वतीकपोलसम्बन्ध इति विशेषयति **केलीति**। पार्वत्या कथमुन्मृष्ट इत्यत आह **नखलक्ष्मेति**। नखलक्ष्मशङ्कायां हेतुः **कुटिलेत्यादि**। अत एव नखक्षताकारता। **पूर्वमित्यादि**। तत एव हेतुहेतुमद्भावेन झटित्यन्वयः स्यात्, यथाश्रुते तु पूर्ववदयोग्य-परिहारादिविलम्ब इत्यवधेयम्।

अस्थानस्थसमासं यथा

अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं शशी ॥२३८॥

अत्र क्रुद्धस्योक्तौ समासो न कृतः कवेरुक्तौ तु कृतः।

**बालचित्तानुरञ्जनी**—द्वितीयमुदाहरति **अस्थानेति**। एष मानः अद्यापि मय्युदितेऽपि स्तनशैल-दुर्गविषमे सीमन्तिनीनां हृदि स्थातुं वाञ्छति, धिक् इति क्रोधादिव आलोहितः आरक्तः प्रोद्यद्दूरतर-प्रसारितकरः असौ शशी तत्क्षणात् विकसन् कुमुदेत्यनिःसरन्तो[?] ये भ्रमराः, तेषां या श्रेणी पङ्क्तिः, सैव कृपाणः खड्गः, तं कर्षति। शशिनो नायकत्वं मानस्य प्रतिनायकत्वं विवक्षितं कवीनां कामचारात्। अत्र अद्यापीत्येतदादिका इति क्रोधादिवेत्येतदन्ता क्रुद्धस्य चन्द्रस्योक्तिः। अत्र समस्तानि पदानि प्रयोज्यानि, तानि चात्र न कृतानि, फुल्लेत्यादिका कवेरुक्तिः तत्र कृतानीत्यस्थानसमासत्वमित्याह **अत्रेति**।

**सारबोधिनी**—**अस्थानस्थसमासमिति**। अद्यापि अस्मत्सान्निध्येऽपि स्तनशैलाभ्यां दुर्गविषमे अनाक्रमणीये। कोषः कुडमलं खड्गपिधानञ्च। यत्र ओजोगुणस्य व्यङ्ग्यत्वं तत्रैव दीर्घसमासस्य स्थिति-रुचिता कवेरुक्तौ तु दीर्घसमासव्यङ्ग्यस्य ओजोगुणस्याभाव इति तत्र व्यर्थत्वम्। क्रुद्धस्योक्तौ व्यङ्ग्य-सद्भावाद्दीर्घसमासस्यौचित्यमाह **अत्रेति**। अत्र कवेरुक्तौ तु कृत इति विवृण्वता ग्रन्थकृता स्थानत्यागेना-स्थानगामित्वेनायं दोष इति सूचितम्, तेन शृङ्गाररसप्रधाने पद्ये दीर्घसमासे नायं दोषः। किन्तु प्रति-कूलवर्णत्वमेव, स्थानपरित्यागाभावादिति मिश्राः।

सङ्कीर्णम्, यत्र वाक्यान्तरस्य पदानि वाक्यान्तरमनुप्रविशन्ति। यथा

किमिति न पश्यसि कोपं पादगतं बहुगुणं गृहाणेमम्।
ननु मुञ्च हृदयनाथं कण्ठे मनसस्तमोरूपम् ॥२३९॥

अत्र पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि, इमं कण्ठे गृहाण मनसस्तमोरूपं कोपं मुञ्चेति। एकवाक्यतायां तु क्लिष्टमिति भेदः।

गर्भितम्, यत्र वाक्यस्य मध्ये वाक्यान्तरमनुप्रविशति। यथा

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन ॥२४०॥

अत्र तृतीयपादो वाक्यान्तरमध्ये प्रविष्टः। यथा वा

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥२४१॥

अत्र 'विदितं तेऽस्तु' इति एतत्कृतम्। प्रत्युत लक्ष्मीस्ततोऽपसरतीति विरुद्ध-मतिकृत्।

**बालचित्तानुरञ्जनी**—सङ्कीर्णमर्थकथनपुरःसरमुदाहरति **सङ्कीर्णमिति** । मानस्य व्युदासाय सख्या उक्तिः । हे मानिनि पादगतं बहुगुणं हृदयनाथं किमिति न पश्यसि? इमं कण्ठे गृहाण, मनसस्तमोरूपं कोपं [मुञ्च] । विवक्षितमन्वयं दर्शयति **अत्रे**ति । अनेन निर्दिष्टस्यान्वयस्य सङ्कीर्णतया दुष्टत्वमुक्तमिति वेदितव्यम् । ननु क्लिष्टमेवेदं कथं सङ्कीर्णमित्यत आह **एकेति** । अनेकवाक्यतायां सङ्कीर्णत्वं एकवाक्यतायां क्लिष्टत्वमिति विवेकः ।

लक्षणपुरःसरं गर्भितमुदाहरति **गर्भितमिति** । परापकारनिरतैः दुर्जनैः सह सङ्गतिः कदाचन न विधेया । भवतस्तत्त्वं वदामि । अत्र वदामीत्यादिवाक्यान्तरं स्वतन्त्रं भूत्वा मध्ये अनुप्रविष्टं सत् वाक्यार्थ-प्रतीतिप्रकाण्डं खण्डयितुं प्रसिद्धमिति गर्भितमेतदित्याह **अत्रे**ति ।

उदाहरणान्तरमाह **यथेति** । रागो रुधिरं कामश्च । एवं तेन आवृताङ्ग्या यया असियष्टया खड्गयष्टया सुदृढं यथा स्यात्तथा इह अरिकण्ठे लग्नम्, या च असियष्टिः मातङ्गाः चण्डाला गजाश्च, तेषामुपरि पतन्ती परपुरुषैर्दृष्टा तत्सक्तः अयं नृपः न किञ्चिद् गणयति, हे अम्बुधे ! ते विदितमस्तु । अहं लक्ष्मीः भृत्येभ्यः दत्तास्मि । श्रीनियोगात् गदितुमिव यस्य कीर्तिः अम्बुधिं गता । अत्र विदितमित्यादि वाक्यं महावाक्यमध्ये स्थितं तदर्थप्रतीतिखण्डकमिति गर्भितमित्याह **अत्रे**ति । प्रसङ्गाद्दोषान्तरमप्याह **प्रत्युतेति** । विदितं तेऽस्त्वित्यनेन 'स्वापराधेनाहं नापसरामि किन्तु राजकीयेनैवे'ति प्रतीयते । अतो 'लक्ष्मी-स्ततोऽपसरती'ति श्रु[स्तु]तिविरुद्धप्रतीतिकृदित्यर्थः ।

**सारबोधिनी—सङ्कीर्णमिति** । वाक्यान्तरं क्रियान्तरान्वितम् । अन्यथा सङ्कीर्णेऽपि अङ्गाङ्गि-भावेनैकवाक्यत्वसंभवाददोषत्वं स्यात् । न वा एकक्रियान्विते घटमानय पटञ्चेत्यत्र पटान्वितानयन-पदसङ्करेऽपि क्रियैक्यात् दोषप्रसङ्गः । स्वमध्यपतितवाक्यान्तरत्वं गर्भितत्वम् । उभयत्रानासत्तिरेव दूषकता-बीजमिति स्पष्टम् । **परापकारेति** । निरतैस्तदेकवृत्तैः । अत्र व्यवधायकस्य स्वार्थानुभावकत्वम् सङ्कीर्णे न तथेतिभेदः । **मिश्रास्तु** बीजफलसाम्येऽपि सङ्कीर्णाद् गर्भितस्य पृथगुपादानं क्वचिद्गुणत्वा-भिधानायेत्याहुः ।

अवान्तरवाक्यभेदे गर्भितमाह **लग्नमित्यादि** । रागोऽनुरागो रुधिरं रक्तिमा च । मातङ्गा-श्चाण्डाला दन्तिनश्च । परे उदासीनाः उत्कृष्टा वा शत्रवश्च । तस्यामसियष्ट्यां सक्तोऽनुरक्तश्च । गणयति युक्तायुक्तं विचारयति । किञ्चाहं भृत्येभ्यो दत्ता इति विदितं तेऽस्तु, श्रीनियोगादिति गदितुमिवाम्बुधिं गता यस्य कीर्तिरित्यन्वयः । 'विदितं तेऽस्त्वि'त्यनेन गर्भितं कृतमिति योजनम् । यद्वा कृतं 'वाक्यान्त-रमि'ति शेषः । तेनास्मीत्यर्थस्यापि वेदनीयत्वं विवक्षितम् । विदितमित्यादेर्मध्यानुप्रवेशे न तथा प्रतीतिः । अत्राप्यनासत्तिः प्रतीतिविच्छेदो वा दूषकताबीजम् । न केवलं विवक्षितार्थाप्रतीतिः, अपि त्वविवक्षितार्थ-प्रतीतिरपि, तदाह **प्रत्युतेति** । वेदयितव्यानुचितार्थाभिधाने च क्रोधाभिव्यक्तेः । **विरुद्धेति** । प्रकाशित-विरुद्धमित्यर्थः ।

"मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।

स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥" इति प्रसिद्धिमतिक्रान्तम् । यथा

महाप्रलयमारुतक्षुभितपुष्करावर्तकप्रचण्डघनगर्जितप्रतिरुतानुकारी मुहुः।
रवः श्रवणभैरवः स्थगितरोदसीकन्दरः कुतोऽद्य समरोदधेरयमभूतपूर्वः पुरः ॥२४२॥

अत्र रवो मण्डूकादिषु प्रसिद्धो न तूक्तविशेषे सिंहनादे।

**बालचित्तानुरञ्जनी**—प्रसिद्धिहतं प्रतिपादयितुं प्रसिद्धिं तावद्दर्शयति **मञ्जीरेति** । मञ्जीरादिषु नूपुरादिषु रणितप्रचुरं शब्दं प्रयुञ्जीत। पक्षिषु च कूजितवासितादि । पक्षिग्रहणमुपलक्षणम्, मण्डूकादीनामपि, सुरते स्तनितमणितादि, मेघसिंहादिषु गर्जितरसितादि। तदुदाहरति **इतीति** । महानयं प्रलयमारुतः तेन क्षुभिता ये पुष्करावर्तका मेघविशेषास्तेषां प्रचण्डं घनं यद्गर्जितं तत्प्रतिशब्दानुकारी कर्णकठोरः आच्छादितद्यावाभूमीकन्दरः कुतः समरोदधेः सङ्ग्रामोदधेः सङ्ग्रामसमुद्रात् अभूतपूर्वः यः रवः सिंहनादः अद्य पुनः मुहुरुत्पद्यते। मण्डूकादौ प्रसिद्धस्य रवशब्दस्य सिंहनादे प्रयोगप्रसिद्धिहतमित्याह **रव इत्यादि।**

**सारबोधिनी**—प्रसिद्धादन्यत्र प्रयोगः प्रसिद्धिहतः । तत्र किं कुत्र प्रसिद्धमित्याह **मञ्जीरादिष्विति। महाप्रलय इति** । महत्पदं मारुतेनान्वितं न तु प्रलयेन। सर्वमुक्तेरेव तथात्वात्। पुष्करावर्तकौ मेघौ। द्यावापृथिव्योरन्तरं रोदसी सैव कन्दरा। **उक्तविशेष इति** । श्रवणभैरवत्वादिविशेषणमर्यादया तल्लाभः। 'विषय' इति पाठे उक्तस्य श्रवणभैरवत्वादेर्विषयोऽधिकरणमित्यर्थः।

भग्नः प्रक्रमः प्रस्तावः, यत्र। यथा

नाथे निशाया नियतेर्नियोगादस्तं गते हन्त निशापि याता।
कुलाङ्गनानां हि दशानुरूपं नातः परं भद्रतरं समस्ति ॥२४३।

अत्र 'गता' इति प्रक्रान्ते 'याता' इति प्रकृतेः। 'गता निशापि' इति तु युक्तम्।

ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेण' इत्यन्यत्र कथितपदं दुष्टमिति चेहैवोक्तम्। तत्कथमेकस्य पदस्य द्विःप्रयोगः। उच्यते। उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तो विषय एकपदप्रयोगनिषेधस्य तद्वति, विषये प्रत्युत तस्यैव पदस्य सर्वनाम्नो वा प्रयोगं विना दोषः। तथा हि

उदेति सविता ताम्रस्ताम्र एवास्तमेति च।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥२४४॥

अत्र रक्त एवास्तमेतीति यदि क्रियेत तदा पदान्तरप्रतिपादितः स एवार्थोऽर्थान्तरतयेव प्रतिभासमानः प्रतीतिं स्थगयति।

**बालचित्तानुरञ्जनी**-पूर्वमारब्धः पश्चाद्भग्नः उपक्रमो यत्र तदुदाहरति **भग्न इति**। सोऽपि प्रकृतिप्रत्ययभेदादनेकविधः। तत्र प्रकृतेरुदाहरणम्। दैवस्य नियोगात् निशाया नाथे चन्द्रे अस्तंगते सति निशापि अस्तं याता। हि यतः कुलाङ्गनानां दशानुरूपं पत्यवस्थानुरूपम्, अतः परं भद्रतरं नास्ति। अत्र गत इति गच्छतिरूपा प्रकृतिः। तां परित्यज्य धात्वन्तरे निर्देशात् प्रकृतिप्रयुक्तोऽयं क्रमभङ्ग इत्याह **अत्रेति**। प्रकृतेः प्रयोगो दोष इति शेषः। तर्हि कः पाठो युक्त इत्याकाङ्क्षायामाह **गतेति**। ननु गतेति पाठाङ्गीकारे पूर्वाचार्यवचनविरोधं स्वग्रन्थविरोधञ्च शङ्कते **नन्विति**। अन्यत्र वामनालङ्कारे। प्रायेणेत्येतदपि चादिनिपाताभिप्रायमिति चोद्याभिप्रायः। इहैव स्वग्रन्थ एव। उक्तेः **उक्तत्वादित्यर्थः**। आक्षेपमुपसंहरति **तदिति**। द्विःप्रयोगः कथं साधुरित्यर्थः। विषयभेदेन विरोधो नास्तीति परिहरति **उच्यत इति**। पूर्वानुवादेन प्रस्तूयमानं उद्देश्यं पश्चादन्यविधिनोपयुज्यमानं प्रतिनिर्देश्यं तस्माद्व्यतिरिक्तः द्विपदप्रयोगनिषेधस्य विषयः। तद्वति उद्धेश्यप्रतिनिर्देश्यभाववति तु विषये प्रक्रान्तस्यैव पदस्य तत्परामर्शिनः सर्वनाम्नो वा प्रयोगमन्तरेण दोषः, स्वतो **न** दोष इत्यर्थः।

उक्तमर्थमुदाहरणान्तरेण स्पष्टयति **तथाहीति**। सूर्यस्ताम्रो रक्त एव उदेति। ताम्र एवास्तमेति। महतां सम्पत्तौ विपत्तौ एकरूपत्वमेव। अत्र ताम्ररक्तयोः पर्यायित्वेन भेदाभावभ्रान्त्या रक्त एवास्तमेतीत्युच्यते यदि तदा भावितमर्थमाह **अत्रेति**। आरुण्यलक्षण एवार्थः प्रक्रान्तत्वात्ताम्रपदादन्येन रक्तरूपेण प्रतिपादितः सन् अन्यार्थतयैव प्रतिभासमानः वाक्यार्थविषयां प्रतीतिं तिरोधत्त इत्यर्थः। सवितुः प्रक्रान्तं ताम्रत्वं परित्यज्य रक्तशब्दप्रयोगात् अनयोः सौरभपरिमलादिवत् अवान्तरभेदप्रतिभासनादित्यर्थः।

**सारबोधिनी**—भग्नप्रक्रम इत्यत्र प्रक्रमशब्दार्थमाह **प्रस्ताव इति**। औचित्यावर्जितमित्यर्थः। **नियतेरिति**। नियतिरदृष्टम्। अर्थान्तरेण समर्थयति **कुलाङ्गनानामिति**। समस्ति सम्भवति। दशानुरूपं वैधव्यदशायोग्यम्। गतेति यातेति पदेन गमनस्योपादानेऽपि नानुगमनत्वेन प्रतीतिर्भवति, स्वाभाव्यात्। तथा च दशानुरूपमिति भज्येत। गतेति कृते चानुगमनस्य स्फुटैव प्रतीतिः। ननु पर्यायशब्दानां शक्यतावच्छेदकैक्यनियमात् कथमन्यत्वेन प्रतीतिरिति चेदुच्यते। यन्मते शाब्दबोधे शब्दोऽपि भासते तन्मतेनेदम्। अन्यत्र वामनोक्तौ उद्धेश्यः प्राक् प्रत्यायितः, प्रतिनिर्देश्यः पुनः प्रत्याय्यः। स्थगयति नैकरूपमासादयतीत्यर्थः। तथाहि अस्माच्छब्दादयमर्थो बोद्धव्य इत्याकारकशक्तिग्रहविषयत्वाच्छब्दस्य विशेषणादिपदार्थवत्तस्याऽप्युपस्थितिः पदान्तरोपादाने च तदुपस्थित्या प्रतीत्यन्यथात्वं स्फुटमेव। तदुक्तम्—"न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" इति।

यथा वा

यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसंख्यामतिवर्तितुं वा।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥२४५॥

अत्र प्रत्ययस्य। 'सुखमीहितुं वा' इति युक्तः पाठः।

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥२४६॥

अत्र सर्वनाम्नः । 'अनेन विसृष्टाः' इति तु वाच्यम् ।

महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥२४७॥

अत्र पर्यायस्य । 'महीभृतोऽपत्यवतोऽपि' इति युक्तम् । 'अत्र सत्यपि पुत्रे कन्यारूपेऽप्यपत्ये स्नेहोऽभूत्' इति केचित्समर्थयन्ते ।

विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः ।
नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥२४८॥

अत्रोपसर्गस्य पर्यायस्य च । 'तदभिभवः कुरुते निरायतिम् । लघुतां भजते निरायतिर्लघुतावान्न पदं नृपश्रियः' इति युक्तम् ।

**बालचित्तानुरञ्जनी**—प्रत्ययभङ्गमुदाहरति **यश इति**। यशः अधिगन्तुं, सुखस्य लब्धुमिच्छया, मनुष्यसंख्यामतिवर्तितुं वा [अभि-]ग्रहवतां नितरामुत्सुकानां पुरुषाणां समुत्सुकेव सिद्धिः अङ्कमुपैति । अत्राधिगन्तुमिति तुमुन्प्रत्ययः प्रक्रान्तः । अतिवर्तितुमिति निर्व्यूढो मध्येऽपि । तद्वत् 'सुखं लब्धुमि'ति वक्तव्ये 'सुखलिप्सये'ति सनः प्रयोगात् प्रक्रान्तस्य तुमुन्प्रत्ययस्य भङ्ग इत्याह **अत्रेति** । युक्तं पाठमाह **सुखमिति** ।

सर्वनाम्नो भङ्गमुदाहरति **त इति** । ते सप्तऋषयः । हिमालयमामन्त्र्य पुनः शूलिनं प्रेक्ष्य च अस्मै शूलिने सिद्धमर्थं निवेद्य च तेन ईश्वरेण विसृष्टाः सन्तः खमुद्ययुः । सर्वनाम्नः अस्मै इति प्रक्रान्तस्य इदंशब्दस्य 'तद्विसृष्टा' इत्यत्र तच्छब्दप्रयोगात् भङ्ग इत्याह **अत्रेति** । युक्तं पाठमाह **अनेनेति** ।

पर्यायस्य भङ्गमुदाहरति **महीभृत इति** । पुत्रवतोऽपि महीभृतो दृष्टिः, तस्मिन् अपत्ये तृप्तिं न जगाम । हि यतः अनन्तपुष्पस्य मधोः द्विरेफमाला आम्रे सविशेषसङ्गा भवति । अत्र 'पुत्रवतोऽपी'ति प्रक्रान्तस्य पुत्ररूपस्य पर्यायस्य भङ्गात् 'तस्मिन् अपत्य' इत्युक्तत्वात् भङ्ग इत्याह **अत्रेति** । कन्यायां पुत्रशब्दप्रयोगाभावात्पुत्रवत इत्यत्र अपत्यवत इति वक्तव्यमित्याह **महीभृत इति** । केचिदपत्यस्य अन्यथाकर्तुमशक्यत्वात् प्रकारान्तरेण प्रकृतपाठं समर्थयन्ते । **अत्रेति** । पुत्रो मैनाकः तद्वतोऽपि, तस्मिन् अपत्ये कन्यालक्षणे स्नेहोऽभूदिति केचित् वाक्यविदश्चाहुः । अपत्यशब्दस्य विशेषविवक्षया कन्यायां विश्रान्तेरेवेति भावः ।

उपसर्गपर्याययोर्भङ्गमेकत्रोदाहरति **विपद इति** । आपदः अविक्रमं अभिभवन्ति । आयतिः उत्तरकालः आपदुपेतं त्यजति । आयतिरहितस्य लघुता नियता । अगरीयान् श्रियः पदं न । विपद इति

व्युपसर्गमुपक्रम्य आपदुपेतमिति आङ उपादानादुपसर्गस्य प्रक्रमभङ्गः, लघुतेत्युपक्रम्य अगरीयानिति पर्यायान्तरोपादानात् पर्यायस्य क्रमभङ्गश्चेत्याह **अत्रेति** । युक्तं पाठमाह **तदिति** । तदभिभव इत्यनेन उपसर्गभेदः परिहृतः । लघुतां भजत इत्यादिना पर्यायस्य भेदो निराकृतः ।

**सारबोधिनी**--निरुत्सुकानां निरौत्सुक्यानाम् । अत्र तुमुन्सनोरिच्छायां समानार्थत्वेऽपि पूर्वं तुमा फलत्वप्रतीतिर्न सनेत्येकरूपत्वहानिः ।

**ते हिमालयेति** । तदिदमोः सर्वनामत्वाविशेषेऽपि पूर्वानुभूतपुरोवर्तिविषयत्वान्नैकरूपता ।

**महीभृत इत्यादि** । **सविशेषसङ्गेति** । विशेषणासङ्गतावित्यर्थः । **पर्यायस्येति** । अत्रापत्येषु बहुषु सत्स्वपि तस्मिन् अपत्ये प्रेमातिशयविवक्षणादपत्यशब्दे प्रयोक्तव्ये पुत्रशब्दस्य प्रयोगात् पर्यायक्रमभङ्गः । तथाहि । यत्सामान्यसत्ता तद्विशेषगोचरेच्छेति प्रस्तावः । पुष्पसामान्यसत्तायां तद्विशेषादरबोधकेन दृष्टान्तेन तथैव बोधनात् विरोधार्थकापिशब्दस्वरसाच्च । ततश्चापत्यसामान्यसत्तायामपि अपत्यविशेषे स्नेह इति प्रस्तावः पुत्रपदस्थानेऽपत्यपदानुपादानाद्विघटितः । नन्वारभ्यमाणस्य वर्त्मनोऽन्येन भङ्ग एव प्रक्रमभङ्गो न त्वारम्भकेण पुत्रपदेनेति चेन्न । औचित्यावर्जितप्रस्तावान्यथाभाव एवास्य विषयत्वात् । विघटकपौर्वापर्यस्यानियमात् । अतएव प्रक्रमपदस्य प्रस्तावोऽर्थो विवृतः । अत एव पाठान्तरे पुत्रपदस्थान एवापत्यपदप्रक्षेप इत्याह **अपत्यवतोऽपीत्यादि** । **केचिदिति** । तन्मतं न चारु दृष्टान्तदार्ष्ट्रान्तिकयोर्वैषम्यापातात् । विशेषाविशेषभावविषयत्वेन भिन्नविषयत्वप्रसङ्गात् ।

**विपद इत्यादि** । रहयति त्यजति । आयतिरुत्तरकालः । विपदापदोरुपसर्गस्य, लघुताऽगरीयानित्यनयोः पर्यायस्य । अत्र पर्यायत्वमेकार्थप्रतिपादकत्वमेव विवक्षितम् । न त्वेकप्रकारकबोधकत्वमस्य वस्तुतः पर्यायत्वस्याभावात् । यद्वा पर्यायस्य लघुत्वबोधकलघुतास्वरूपपदान्तरस्य प्रस्तावोऽगरीयान् पदो न भग्नः[?] । अन्यथा लघुता अगरीयःपदयोः शक्यतावच्छेदकयोः शक्यतावच्छेदकभेदादपर्यायत्वादसङ्गतिः स्यात् । अत एव शोधकपाठे लघुतापदावृत्तिः ।

काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मी—
रश्रीकाः काश्चिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः ।
भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत्कम्पमानाः
प्रस्थाने पार्थिवानामशिवमिति पुरो भावि नार्यःशशंसुः ॥२४९॥

अत्र वचनस्य । ''काश्चित्कीर्णा रजोभिर्दिवमनुविदधुर्मन्दवक्त्रेन्दुशोभा निःश्रीकाः'' इति 'कम्पमानाः' इत्यत्र 'कम्पमापुः' इति च पठनीयम् ।

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् ।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले
विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥२५०॥

अत्र कारकस्य । 'विश्रब्धा रचयन्तु सूकरवरा मुस्ताक्षतिम्' इत्यदुष्टम् ।

अकलिततपस्तेजोवीर्यप्रथिम्नि यशोनिधा-
ववितथमदाध्माते रोषान्मुनावभिगच्छति ।
अभिनवधनुर्विद्यादर्पक्षमाय च कर्मणे
स्फुरति रभसात्पाणिः पादोपसङ्ग्रहणाय च ॥२५१॥

अत्र क्रमस्य । पादोपसङ्ग्रहणायेति पूर्वं वाच्यम् । एवमन्यदप्यनुसर्तव्यम् ।

**बालचित्तानुरञ्जनी**--रजोभिः कीर्णा रजस्वला । अत एव मन्दवक्त्रेन्दुलक्ष्मीः काचिन्नारी दिवं आकाशं, अनुविदधौ अनुचकार । आकाशमपि रजोबुद्ध्याकीर्णमित्यर्थः । अश्रीकाः, उद्भ्रान्तं व्याकुलीभूतं सत्त्वं सत्त्वगुणो यासाम् । दिक्पक्षे उद्भ्रान्ताः सत्त्वाः प्राणिनो यासु । काश्चिद्दिश इव अन्तर्दाहं दिग्दाहं दधिरे, दिग्दाहश्च जात इत्यर्थः । अन्याः वात्या इव प्रतिपदं भ्रेमुः । वात्या अपि जाता इत्यर्थः । अपरा भूमिवत् कम्पमानाः । भूकम्पोऽपि जात इत्यर्थः । पार्थिवानां प्रस्थाने नार्यः इति पुरोभावि अशुभं शशंसुरिव । काचिद्दिवमनुविदधावित्येकवचनमुपक्रम्य काश्चिदन्तर्दाहं विदधिर इति बहुवचनप्रयोगाद् वचनभङ्ग इत्याह **अत्रेति** । युक्तं पाठमाह **काश्चिदिति** । कप्रत्यय-[क्रमात्यय? ]प्रतिपत्तिपरिहाराय लक्ष्मी-स्थाने शोभाप्रयोगः । दोषान्तरमपि परिहरति **कम्पमापुरिति** । क्रियाकारकयुगलमेलकेन वाक्यानां प्रक्रान्तत्वात् कम्पमाना इत्युच्यमाने तदभावात् कम्पमापुरिति वक्तव्यमित्यर्थः ।

कारकभङ्गमुदाहरति **गाहन्तामिति** । शृङ्गैर्मुहुस्ताडितं निपानसलिलं महिषाः गाहन्ताम् । छायायां बद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विश्रब्धैर्वराहपतिभिः पल्वले मुस्ताक्षतिः क्रियताम् । इदं च शिथिलज्याबन्धमस्मद्धनुः विश्रान्तिं लभताम् । महिषा गाहन्तामिति प्रथमाया उपक्रमात् विस्रब्धैः क्रियतामिति तृतीयायाः प्रयोगात् कारकभङ्ग इत्याह । **अत्रेति** । युक्तं पाठमाह **विश्रब्धा इति** ।

क्रमभङ्गमुदाहरति **अकलितेति** । भार्गववचनानन्तरं रामचन्द्रस्योक्तिः । अकलितः ज्ञातुमशक्यः तपस्तेजोवीर्याणां त्रयाणाम् । एतस्मिन् यशोनिधौ अवितथं मदस्य आध्मातमाध्मातं[? ]यस्य तस्मिन् मुनौ भार्गवे रोषात् अभिमुखं धावति सति अभिनवं धनुः, विद्याक्षमाय कर्मणे पादोपसङ्ग्रहणाय च रभसात् मे पाणिश्च स्फुरति । अत्र तपस्तेजोवीर्यप्रशस्तयशोमदयोश्च क्रमादुपन्यासे मुनिं प्रति पादोपसङ्ग्रहः कथनीयः । पश्चादभिनवेत्यादि वक्तव्यम् । तद्विपर्ययात् क्रमभङ्ग इत्याह **अत्रेति** । क्रमभेदो द्विविधः । शाब्दः आर्थश्च । तत्र शाब्दमुदाहृत्यार्थोऽप्युदाहरणीय इत्याह **एवमिति** । यथा "सस्नुः पयः पपुरनेनिजुरम्बराणि जक्षुर्बिसं धृतविकासिबिसप्रसूनाः" इत्यत्र पयः पपुरित्यादिवत् विकासिबिसप्रसूनं दधुरिति वाच्यम् । तदकरणात् आर्थक्रमभङ्ग इत्यर्थः ।

**सारबोधिनी—काचिदित्यादि** । रजांसि स्त्रीधर्मः पांसवश्च । अनुविदधे, अनुकृतवती । दाह-स्तापो हेतुलक्षणया वह्निश्च । सत्त्वं प्रथमगुणः प्राणी च । पार्थिवानां नायकद्विषाम् । प्रस्थाने यात्रायां

भावि अशिवं नार्यः शशंसुरित्यन्वयः । **अत्रेति** । क्रमभङ्ग इत्यनुषज्यते । काचिदित्युपक्रम्य काश्चिदित्य-भिधानादित्यर्थः । वचनस्य बहुत्वादिप्रतिपादकस्य । आख्यातक्रमभङ्गमपि व्याचष्टे । पाठान्तरेण कम्पमापुरिति ।

**गाहन्तामिति** । **शृङ्गैरिति** । स्वभावोक्तिः । कदम्बकं समूहः । अत्र सर्वत्र कर्तृविशेष्यत्वप्रस्तावः । विश्रब्धैरित्यादिना कर्मविशेष्यताप्रतिपादकेन तदन्यथाकरणमित्यर्थः । अत्र श्रान्तस्य वचसि प्रक्रमभङ्गो गुण एव । श्रमपरिपोषकत्वात् न दोषः ।

**अकलितेति** । अकलितं अपरिमितम् । प्रथिमा पृथुता । यशोनिधौ प्रतिष्ठिते तज्जयादुत्कर्षा-धिक्यम् । अवितथो यथार्थः । दर्पक्षमं दर्पयोग्यं कर्म युद्धम् । **अत्रेति** । क्रमस्य प्रक्रमभङ्ग इत्यनुषज्यते । तद्यशःप्रथमोपन्यासेन तदुपयोगिपादग्रहणस्यापि तथौचित्यात् । **एवमिति** । 'शशी दिवसे'त्यादौ शोभनत्वेन प्रतीतस्याशोभनत्वं शक्यमिति क्रमो विवक्षितः । तस्य द्वितीयचतुर्थषष्ठसप्तमवाक्येष्वन्यथात्वेन भङ्गः ।

अविद्यमानः क्रमो यत्र । यथा

द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥२५२॥

अत्र त्वंशब्दानन्तरं चकारो युक्तः ।

**बालचित्तानुरञ्जनी**—अक्रममाह **अविद्यमान इति** । क्रमः पौर्वापर्येणावस्थानम् । कपालिनः ईश्वरस्य प्रार्थनया सम्प्रति द्वयं शोचनीयतां गतम् । किं तद् द्वयं, कलावतश्चन्द्रस्य सा कान्तिमती कला च अस्य लोकस्य नेत्रकौमुदी त्वं पार्वती च । किं तदित्यपेक्षायां कलावतः कला **च** त्वं चेति समुच्चयौचित्यात्, तद्वैपरीत्यात् काव्यमक्रममेतदित्याह **अत्रेति** ।

**सारबोधिनी**—**अविद्यमान इति** । यदुत्तरं यत्पदोपादानमुचितं तदन्यत्र तदुपादानमित्यर्थः । **त्वमित्यनन्तरमिति** । तदैव तस्याः समुच्चेयताप्रतीतिः स्यात् । अस्थानस्थपदाच्च भेदस्तत्प्रसङ्गेनैव व्याख्यातः ।

यथा वा

शक्तिर्निस्त्रिंशजेयं तव भुजयुगले नाथ दोषाकरश्री-
र्वक्त्रे पार्श्वे तथैषा प्रतिवसति महाकुट्टनी खड्गयष्टिः ।
आज्ञेयं सर्वगा ते विलसति च पुरः किं मया वृद्धया ते
प्रोच्येवेत्थं प्रकोपाच्छशिकरसितया यस्य कीर्त्या प्रयातम् ॥२५३॥

अत्र 'इत्थं प्रोच्येव' इति न्याय्यम् । तथा 'लग्नं रागावृताङ्ग्या' ॥२५३ (क)॥ इत्यादौ 'इति श्रीनियोगात्' इति वाच्यम् ।

**बालचित्तानुरञ्जनी**--उदाहरणान्तरमाह **यथा वेति** । हे नाथ ! तव भुजयुगले निस्त्रिंशजा खड्गजा इयं शक्तिः प्रतिवसति । पक्षे निस्त्रिंशः क्रूरः वक्त्रे दोषाकरश्रीः चन्द्रश्रीः, पक्षे दोषाणामाकरस्य श्रीः । तव पार्श्वे कुट्टयति खण्डयतीति कुट्टनी महती चासौ कुट्टनी च, पक्षे शम्भली । एका खड्गयष्टिः प्रतिवसति । सर्वगा विश्वव्यापिनी पक्षे अशेषपुरुषस्वीकारिणी इयं ते आज्ञा प्रविलसति । वृद्धया परिपूर्णया वर्षीयस्या च मया किं पुनः प्रयोजनं, शशिकरसितया कीर्त्या प्रकोपात् इत्थं प्रोच्येव प्रयातम् । अत्र, इत्थं प्रोच्येवेति तदकरणात् अक्रममित्याह **अत्रेति** । 'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्टचारिकण्ठे' इति गर्भितस्योदाहरणत्वेन प्रदर्शिते पद्येऽपि अक्रममाह **तथेति** ।

**सारबोधिनी—शक्तिरित्यादि** । निस्त्रिंशः खड्गः खलश्च । दोषाकरो मूर्खत्वाश्रयः दोषायां रात्रौ करो यस्य स चन्द्रश्च । कुट्टनी छेदिका गणिका च । सर्वगा सर्वजनग्राह्या सर्वगामिनी च । वृद्धया बहुलया जरत्वाच्च । **इत्थं प्रोच्येति** । इत्थंपदस्याव्यवहितपरामर्शकत्वात् पादत्रयस्यैव परामर्शकत्वात् न तु वचनस्यापीति भावः । **इति श्रीनियोगादिति** । इतिपदस्याव्यवहितपरामर्शकत्वात् इति भावः ।

अमतः प्रकृतविरुद्धः परार्थो यत्र । यथा

रामममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरो ।
गन्धवद्रुधिरचन्दनोक्षिता जोवितेशवसतिं जगाम सा ।।२५४।।

अत्र प्रकृते रसे विरुद्धस्य शृङ्गारस्य व्यञ्जकोऽपरोऽर्थः ।

**बालचित्तानुरञ्जनी**--लक्षणपूर्वकमेति [?] । तमुदाहरति **यथेति** । दुःसहेन राम एव मन्मथः तस्य शरेण ताटका अभिसारिका ताडिता । सा निशाचरी गन्धवदिति निन्दायां प्रशंसायामनुगन्धवद्रुधिरचन्दनोक्षिता सती जीवितेशः यमः प्रियतमश्च तस्य वसतिं जगाम । अत्र प्रकृते रसे वीररूपे रामस्य मन्मथेन औपम्यात् जीवितेशेन वल्लभार्थप्रत्यायनमिति शृङ्गाररसस्य तद्विरुद्धस्य कथनादक्रममित्याह **अत्रेति** ।

**सारबोधिनी --अमत इति** ।

ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ ।
रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ।।

**राम इति** । रामो मन्मथो मनोमथनहेतुः कामश्च । निशाचरी राक्षसी अभिसारिका च । रुधिरं चन्दनं, रुधिरमेव चन्दनं रक्तचन्दनञ्च । गन्धवत्त्वं पापक्षयात् पूतनाधूमवत् । जीवितेशो यमो नायकश्च । **प्रकृत इति** । बीभत्स इत्यर्थः । दूषकताबीजन्तु शृङ्गारव्यञ्जकैर्यदि बीभत्सः प्रत्यायनीयः स्यात्तदा कथं तस्य परिपुष्टिरिति ध्येयम् ।

**अर्थदोषानाह**

**अर्थोऽपुष्टः कष्टो व्याहतपुनरुक्तदुष्क्रमग्राम्याः ।।५५।।**

**सन्दिग्धो निर्हेतुः प्रसिद्धिविद्याविरुद्धश्च ।**
**अनवीकृतः सनियमानियमविशेषाविशेषपरिवृत्ताः ॥५६॥**
**साकाङ्क्षोऽपदयुक्तः सहचरभिन्नः प्रकाशितविरुद्धः ।**
**विध्यनुवादायुक्तस्त्यक्तपुनःस्वीकृतोऽश्लीलः ॥५७॥**

दुष्ट इति संबध्यते । क्रमेणोदाहरणम्

अतिविततगगनसरणिप्रसरणपरिमुक्तविश्रमानन्दः ।
मरुदुल्लासितसौरभकमलाकरहासकृद्रविर्जयति ॥२५५॥

अत्रातिविततत्वादयोऽनुपादानेऽपि प्रतिपाद्यमानमर्थं न बाधन्त इत्यपुष्टाः, न त्वसङ्गताः पुनरुक्ता वा ।

**बालचित्तानुरञ्जनी**—एवं शब्ददोषानभिधायार्थदोषानाहेत्याह **अत्रेति** । क्वचित् पदस्यार्थं कुत्रचिद्वाक्यस्येति यथायोगमूहनीयम् । **संबध्यत इति** । दुष्टमित्यविचारात् । अर्थात् दुष्ट इति तल्लिङ्गविपरिणामः ।

अपुष्टमुदाहरति । अतिविस्तृते गगनमार्गे प्रसरणेन परिमुक्तविश्रमसुखः । मरुता उल्लासितं सौरभं यस्य एवंविधकमलवतः सरोवरस्य हासकृत् विकासकृत् सूर्यः जयति । गगनस्य विभुतया वैतत्यं विश्रमस्य दुःखाभावत्वादानं कमलविकासात् मरुतां सौरभोल्लासश्च स्वयमेव सिद्ध इति विततत्वादिविशेषणाभावेऽपि तदर्थलाभादपुष्टत्वमित्याह **अत्रेति** । कविप्रतिपत्तिं निराकरोति **न त्विति** । गगनादौ विततत्वादेर्विद्यमानत्वेन न लाक्षणिकत्वमित्यर्थः । प्रसङ्गाद्दूषणं **पुनरुक्ता वेति** । गगनादेर्विततत्वादेश्च भिन्नप्रमेयतया पौनरुक्त्याभावेऽपि सामर्थ्यसिद्धस्य कथनात् पौनरुक्त्यमित्यर्थः ।

**सारबोधिनी**–सम्प्रति वाक्यार्थप्रतीतिपश्चाद्भावित्वेन वाक्यदोषानन्तरमर्थदोषानाह **दुष्ट इति** । पददोषसूत्रस्थं दुष्टपदं लिङ्गविपरिणामेन संबध्यत इति भावः । तत्रापुष्टः पुष्टभिन्नः । पुष्टत्वं च विवक्षितार्थबोधकानुपादानकत्वम् । तद्विरहश्च [द्विधा] । अप्रयोजकत्वात् प्रयोजकेऽप्यर्थलभ्यत्वाच्च । वृत्तिकृताप्यतिविततत्वादयोऽनुपादानेऽपि प्रतीयमानमर्थं न बाधन्त इत्युक्तम् । न त्वप्रयोजका एवेति । **अतिविततेति** । विततं विस्तीर्णम् । सरणिर्मार्गः । प्रसरणं गमनागमनम् । विश्रमानन्दो विश्रमसुखम् । विततत्वं गगनपदलभ्यम् । वह्निपदेन तद्गतौष्ण्यवत् । अतोऽर्थलभ्यत्वादपुष्टत्वमिति । सरणित्वादिकमप्रयोजकमेवेत्यर्थः । नन्विदमधिकपदं पुनरुक्तत्वं वा स्यात् इत्यत आह **न त्विति** । असङ्गता अधिकाः । तत्त्वं चान्वयाप्रतियोगित्वाद्भवति । प्रकृते तदभावात् शब्दोपस्थिते पुनः शब्दानुपादानान्न पुनरुक्तिरित्यर्थः । अर्थपुनरुक्तिश्चापुष्टार्थत्वमेवेति भावः । केचित्तु पोषणं पुष्टमुपकारः, पश्चान्नञा बहुव्रीहिः । ततश्च प्रकृतवाक्यार्थोत्कर्षहेतुरपुष्टः । **अतिविततेति** । अत्र हि रविर्जयतीति रवेरुत्कर्षः प्रधानवाक्यार्थः । न खलु विस्तीर्णपदसंचरणं श्रमहेतुर्येन तत्सत्त्वेऽपि श्रमत्यागे उत्कर्षहेतुः स्यात् । विततपदेन दीर्घत्वाभिधानेऽपि

रथाख्ययानेन संचरणान्न श्रमत्वप्रतीतिः । एतेनातिविततत्वादय इत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तत्परिहृत्य मरुदुल्लासितेत्यादि ग्रहणं केनचिद्यदुक्तं तन्निरस्तम् । तस्यापुष्टार्थत्वस्य दर्शितत्वात् । यत्तु मरुदुल्लासितेत्यादि विरुद्धं हासपूर्वं सौरभायोगादिति तन्न, समकालत्वस्य विवक्षितत्वात् । अत्रान्वय-बोधान्तरं पदजीवात्वनुसंधानदशायामेषामनुपकारित्वग्रह इति प्रतीतानुपपत्त्यार्थदोषकता प्रतीत्यनुपपत्तावेव शब्ददोषतेति विभागः ।

सदा मध्ये यासामियममृतनिस्यन्दसुरसा
सरस्वत्युद्दामा वहति बहुमार्गा परिमलम् ।
प्रसादं ता एता घनपरिचिताः केन महतां
महाकाव्यव्योम्नि स्फुरितमधुरा यान्तु रुचयः ॥२५६॥

अत्र यासां कविरुचीनां मध्ये सुकुमारविचित्रमध्यमात्मकत्रिमार्गा भारती चमत्कारं वहति ताः, गम्भीरकाव्यपरिचिताः कथमितरकाव्यवत् प्रसन्ना भवन्तु । यासामादित्यप्रभाणां मध्ये त्रिपथगा वहति ताः, मेघपरिचिताः कथं प्रसन्ना भवन्तीति संक्षेपार्थः ।

**बालचित्तानुरञ्जनी**—स्वकाव्यस्तुतिः क्रियते । यासां कविरुचीनां काव्याभिलाषाणां मध्ये सदा अमृतस्य निस्यन्दो निष्यन्दः तेन सरसा बहुमार्गा सरस्वती परिमलं चमत्कारं वहति । घनपरिचिताः गम्भीरकाव्यपरिचिताः ता एव रुचयः महतां महाकाव्यव्योम्नि स्फुरितमधुराः सत्यः केन प्रसादयन्तु । न भवन्तीत्यर्थः । यासामादित्यप्रभाणां मध्ये अमृतनिष्यन्दसरसा बहुमार्गा उद्दामा सरस्वती भागीरथी परिमलं वहति । मेघपरिचितास्ता एताः सूर्यप्रभाः व्योम्नि केन प्रसादं यन्तु ? न यान्तीत्यर्थः । सरस्वती-शब्दः नदीमात्रेऽपि च । 'सरस्वती सरिद्भेदे भूवाग्देवतयोरपि । स्त्रीरत्ने चापगायां चे'त्यभिधानात् । कठिनत्वात् श्लोकं व्याकरोति **अत्रेति** । उक्तार्थस्य कष्टत्वमित्यर्थः ।

**सारबोधिनी**—कष्ट इत्यस्य दुरूह इत्यर्थः । आसत्त्यादि सत्त्वेपि विलम्बितप्रतीतिकत्वं तत्त्वम् । **सदेत्यादि** । अमृतं सुधा जलं च । रसः शृङ्गारादिर्माधुर्यं च । सरस्वती नदी वाणी च । मार्गो रीतिः पन्थाश्च । परिमलं चमत्कारं सुखञ्च । प्रसादं सुव्यक्तं स्वच्छकान्तिश्च । घनो निबिडो मेघश्च । परिचिता अत्यन्ताभ्यस्ताः संबद्धाश्च । रुचयः अभिसन्धयः कान्तयश्च । महतां कवीनामादित्यादीनाञ्च, तेषां द्वादशत्वात् ।

जगति जयिनस्ते ते भावा नवेन्दुकलादयः
प्रकृतिमधुराः सन्त्येवान्ये मनो मदयन्ति ये ।
मम तु यदियं याता लोके विलोचनचन्द्रिका
नयनविषयं जन्मन्येकः स एव महोत्सवः ॥२५७॥

अत्रेन्दुकलादयो यं प्रति पस्पशप्रायाः स एव चन्द्रिकात्वमुत्कर्षार्थमारोपयतीति व्याहतत्वम् ।

**बालचित्तानुरञ्जनी**--व्याहतमुदाहरति **जगतीति** । मालतीं प्रति माधववचनम् । ये मनः मदयन्ति । जयिनः प्रकृतिमधुराः । नवेन्दुकलादयः । अन्ये ते ते भावाः पदार्थाः सन्त्येव । लोके विलोचन-चन्द्रिका इयं मालती नयनविषयं यातेति यत् जन्मनि मरुवकः[?] स एव महोत्सवः । यं माधवं प्रति चन्द्र-कलादयः पस्पशप्रायाः असारप्रायाः स एव माधवः मालत्या उत्कर्षार्थं चन्द्रिकात्वमारोपयतीति व्याहतमित्याह **अत्रेति** ।

**सारबोधिनी**--**जगतीति** । मम जन्मनि स एव महोत्सवो यदि नयनगोचरं यातेत्यन्वयः । झटित्यप्रतीतिः अनुभवसिद्धा निन्दित्वा पुरस्कृत्य वा पुनस्तदन्यथाकरणम् । विशिष्टा हतिर्व्याहतत्वम् । न चात्रानुचितार्थता । तत्र पशुकुविन्दादिपदैः स्वार्थोपस्थितिदशायामेवोपश्लोक्यमानस्य तिरस्कारावगमः । अत्र तु चन्द्रिकापदस्य तदर्थस्यानुसन्धानादेव न तिरस्कारोऽवगम्यते । किन्तु वाक्यार्थबोधानन्तरं नवेन्दुकलादयो यं प्रतीत्यर्थपर्यालोचनेनेति भेदात् । पुरस्कृत्येत्यत्रापि उदाहरणं स्वयमूह्यम् ।

कृतमनुमतमित्यादि ॥२५८॥

अत्रार्जुनार्जुनेति भवद्भिरिति चोक्ते सभीमकिरीटिनामिति किरीटिपदार्थः पुनरुक्तः ।

**बालचित्तानुरञ्जनी**--पुनरुक्तमुदाहरति ।

"कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥"

इति चतुर्थोल्लासे उदाहृतमिति सर्वं पद्यं नोक्तम् । अस्माभिश्च तत्रैव व्याकृतम् । अत्र अश्वत्थामा वेणीसंहारे अर्जुनार्जुन भवद्भिरिति चोक्त्वा पुनरपि किरीटिशब्दमुच्चारितवान् अतः पौनरुक्त्यमित्यर्थः ।

**सारबोधिनी**--पुनरुक्तः शब्देनावगतः पुनः शब्देनैवोच्यते, अर्थपुनरुक्तस्यापुष्टार्थत्वात् । अत्र प्रयोजनं विनेत्यपि विशेषणं देयम् । अत एव कर्णावतंसादिषु विनेत्यंशाभावान्न पौनरुक्त्यम् । स चायं द्विविधः पदार्थवाक्यार्थभेदात् । तत्राद्यमुदाहरति **कृतमनुमतमित्यादि** । 'अर्जुनार्जुन सात्यके' इत्युपक्रमेण पितृ-वधामर्षितस्याश्वत्थाम्न इयमुक्तिः । कर्त्रनुमन्तृद्रष्टृणामुत्तरोत्तरापराधस्य लाघवेन क्रमादुपन्यासः । तत्र कर्ता अर्जुनः । सात्यकिरनुमन्ता । अन्ये द्रष्टारः । तत्राद्ययोर्बलवद्द्वेषेण शाब्दसंबुद्धिः अन्येषां बुद्धिस्थैव । अत एव तेषां शास्तिप्रदर्शनाय बुद्धिस्थपरामर्शकयत्पदभवत्पदद्वारानुकर्षः । एतेन सम्बोध्ययोरबहुत्वे यैरित्यादिषु बहुवचनमनुपपन्नमिति निरस्तम् । संबोध्यानां बहुत्वस्य दर्शितत्वात् । **अत्रेत्यादि** । भवद्भि-

रित्यत्र संबोध्योपस्थितिं विना भवत्पदप्रयोगानुपपत्तेः, तस्य संबोध्यात्मवाचित्वात् । किरीटिपदार्थोऽर्जुन एव । अथार्जुनपदाभ्यां सहैवान्वयबोधकत्वे शाब्दबोधसमय एव पौनरुक्त्यावभासान्नार्थदोषतेति चेन्न । पर्यायशब्दोपनीतेष्वर्थेष्वापाततोऽन्यत्वेन भावान्न पुनरुक्तावभासः । समानशब्दसत्त्व एव एकत्वभानादित्युक्तत्वात् । वस्तुतो नैवं साधीयान् दोषः । क्रुद्धस्योक्तावुक्तविस्मरणद्वारा क्रोधप्रज्वलनया पौनरुक्त्यस्य गुणत्वात् । न च संबोध्यविस्मृतौ भवच्छब्दप्रयोगानुपपत्तिरिति वाच्यम् । भवतेः शतृप्रत्ययेन भवत्पदेन उदायुधैः सद्भिरित्यर्थस्य विवक्षणात् । यद्वा सभीमेत्यादावेव विस्मरणात् ।

यथा वा

अस्त्रज्वालावलीढप्रतिबलजलधेरन्तरौर्वायमाणे
सेनानाथे स्थितेऽस्मिन्मम पितरि गुरौ सर्वधन्वीश्वराणाम् ।
कर्णालं संभ्रमेण व्रज कृप समरं मुञ्च हार्दिक्य शङ्कां
ताते चापद्वितीये वहति रणधुरं को भयस्यावकाशः ॥२५९॥

अत्र चतुर्थपादवाक्यार्थः पुनरुक्तः ।

**बालचित्तानुरञ्जनी**—अत्रैवोदाहरणान्तरमाह **यथा वेति** । अस्त्राण्येव ज्वालास्ताभिरवलीढः, आलिङ्गितः योऽसौ, प्रतिबलमेव जलधिः तस्य अन्तः मध्ये और्वायमाणो दावाग्निवदाचरिते सेनानाथे सर्वधन्वीश्वराणां गुरौ मम अश्वत्थाम्नः अस्मिन् पितरि द्रोणाचार्ये स्थिते सति हे कर्ण, संभ्रमेणालम् । समरं व्रज हे कृप हार्दिक्य शङ्कां मुञ्च । चापद्वितीये ताते द्रोणाचार्ये युद्धभारं वहति सति भयस्यावकाशः कः ? अत्र ताते चापद्वितीय इत्यादि चतुर्थपादार्थः चतुर्थ[?]पादापेक्षया पुनरुक्त इत्याह **अत्रेति** ।

**सारबोधिनी**—द्वितीयमाह **अस्त्रेत्यादि** । अश्वत्थामोक्तिरियम् । मम पितरि सेनानाथे सत्यलं सम्भ्रमेणेत्यन्वयः । और्वो वाडवाग्निः । अस्त्राण्येव ज्वाला वह्निशिखा प्रतिबलं रिपुसैन्यम् तस्य जलधित्वेन पितुरौर्वत्वेन च निरूपणे वध्यघातकभावोऽवगम्यते । हार्दिक्यः कृतवर्मा नाम यादवः । **अत्रेति** । कर्णालं संभ्रमेणेत्युक्तौ को भयस्यावकाश इति चतुर्थः पादः पुनरुक्तः । अत्रापि पूर्ववद्दोषोद्धारो बोध्यः । अत्रेदं चिन्त्यम् । अत्र न केवलं पदार्थे वाक्यार्थे वा पौनरुक्त्यम् , पदैकदेशार्थेऽपि तत्संभवात् । यथा—'तदीयमातङ्गघटे'त्यादौ युक्तार्थान्तरेण षष्ठ्यर्थेन तद्धितार्थसंबन्धस्य पौनरुक्त्यात् ।

भूपालरत्न निर्दैन्यप्रदानप्रथितोत्सव ।
विश्राणय तुरङ्गं मे मातङ्गं वा मदालसम् ॥२६०॥

अत्र मातङ्गस्य प्राङ्निर्देशो युक्तः ।

स्वपिति यावदयं निकटे जनः स्वपिमि तावदहं किमपैति ते ।

तदयि साम्प्रतमाहर कूर्परं त्वरितमूरुमुदञ्चय कुञ्चितम् ॥२६१॥

एषोऽविदग्धः ।

मात्सर्यमुत्सार्येत्यादि ॥२६२॥

अत्र प्रकरणाद्यभावे सन्देहः शान्तशृङ्गार्यन्यतराभिधाने तु निश्चयः ।

**बालचित्तानुरञ्जनी**—दुष्क्रममुदाहरति **भूपालेति** । रत्नानां निर्दैन्यं यथा तथा, प्रदाने प्रथित उद्भव उत्सवो यस्य हे भूपाल मे तुरङ्गं विश्राणय मदेन अलसं मातङ्गं गजं वा विश्राणयेति[न] वाच्यम् । अन्यथा कवेः पदार्थतारतम्यानभिज्ञत्वप्रसङ्गः । अतो दुष्क्रममित्याह **अत्रे ति** । ग्राम्यमुदाहरति **स्वपितीति** । इदं सूत्रं[?]हृद्यां कोऽपि वेश्यामाह । अयं त्वल्लक्षणो जनः यावन्निकटे स्वपिति तावदहं स्वपिमि । ते किं गच्छति ? तदभिरूपकं दीनारादि सांप्रतमाहर स्वीकुरु । त्वरितं सङ्कुचितमूरुं उदञ्चय विस्तारय । ननु पूर्वश्लोक एव प्रतीतं ग्राम्यमित्युक्तम् । तदत्र नास्ति कथं ग्राम्यत्वमित्याशङ्क्य अवैदग्ध्येनोक्तमेव ग्राम्यमित्याह **एष इति** । सन्दिग्धमुदाहरति **मात्सर्यमिति** ।

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमिदं वदन्तु ।

सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥

अत्र शान्तशृङ्गारयोः प्रतीयमानत्वात् प्रकरणाद्यभावे सन्देह इत्याह अत्रेति । आदिपदात् बोद्धव्यादिवक्तृभूतयोः शान्तशृङ्गारिणोरन्यतरनिश्चयग्रहः तदभिधाने सन्देहाभावमाह **शान्तेति** ।

**सारबोधिनी**—दुःक्रमो दुष्टोऽनुचितो लोकविरुद्धः शास्त्रविरुद्धो वा क्रमो यत्रेत्यर्थः । तमुदाहरति **भूपालेति** । विश्राणय देहि । **अत्रे ति** । मातङ्गस्य बहुमूल्यत्वेन तदलाभे तुरङ्गप्रार्थनौचित्यादिति भावः । यत्र हस्तिनामेव सुलभत्वं तत्र नेदमुदाहरणमिति मन्तव्यम् । ग्राम्यो ग्रामसंभवोऽविदग्धोक्तिप्रतिपन्नः स्वरिरंसादिः । यदुक्तम्—

स ग्राम्यः स्वरिरंसादिः पामरैर्यत्र कथ्यते ।

वैदग्ध्यवक्रिमबलं हित्वैव वनितादिषु ॥

**स्वपितीति** । किमपैति ? ते का क्षतिः कूर्पकं नीवीकूर्परमिति वा पाठः । "स्यात् कफोणिस्तु कूर्परः" इत्यमरः । अत्र रसविच्छेदः सहृदयवैरस्यं वा दूषकताबीजम् । अत्रार्थस्यैव ग्राम्यता न शब्दस्य, प्रकरणाद्यभावात् । सन्दिह्यमानोऽर्थः सन्दिग्धः । **मात्सर्यमित्यादि** । वक्तुः शान्तत्वे शृङ्गारित्वे वा निश्चिते निश्चय एव ।

गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भया-
द्विमोक्ष्ये शस्त्र त्वामहमपि यतः स्वस्ति भवते ॥२६३॥

अत्र शस्त्रमोचने हेतुर्नोपात्तः ।

**बालचित्तानुरञ्जनी**--निर्हेतुमुदाहरति **गृहीतमिति** । अश्वत्थामा द्रोणपुत्रः गजश्च । तत्र गज मृते 'अश्वत्थामा हत' इति युधिष्ठिरेणोक्तमाकर्ण्य द्रोणाचार्यः भ्रान्त्या पुत्रशोकात् शस्त्रसंन्यासं कृतवान् । स मारितश्च शत्रुभिस्तच्छ्रवणादश्वत्थामापि शस्त्रं मुमुक्षुरिदमुक्तवान् । हे शस्त्र ! तन्नोचितं ब्राह्मणस्यानुचितमपि परिभवभयात् त्वं गृहीतमासीः यस्याचार्यस्य प्रभावात्तव कश्चित्पदार्थः विषयो नाभूदिति, न त्वं तेन आचार्येण सुतशोकात् परित्यक्तमसि । न तु भयात् । अतः अहमपि भवतेयः [वतः ?] यत्र स्वस्ति तत्र मोक्ष्ये । यथा द्रोणाचार्यकर्तृकशस्त्रमोचने पुत्रशोकादिति हेतुरुक्तः तथाश्वत्थामकर्तृकशस्त्रमोचने पितृशोकादिहेतुर्नोक्तः । अतो निर्हेतुत्वमित्याह **अत्रेति** ।

**सारबोधिनी**--अनुपात्तहेतुकोऽर्थो निर्हेतुः । **गृहीतमिति** । इयमश्वत्थामोक्तिः । परिभवभयात् ब्राह्मणस्य क्षत्रकर्मकरणे योऽनादरः पराभवो वा तद्भयान्नोचितमिति विषयो लक्ष्यः । यतस्त्वां विमोक्ष्ये ततो भवते स्वस्तीत्यर्थः । स्वस्ति विश्रामसुखमित्यर्थः । न तु हेत्वाकाङ्क्षायां वाक्यार्थपर्यवसाने कथमयमर्थदोष इति चेन्न, पितृकर्तृकशस्त्रत्यागस्यैव हेतुत्वेनान्वयात्, पितृकृतकर्मणः पुत्रेणाचरणीयत्वात् ब्राह्मणानुचितशस्त्रग्रहस्यैव इत्थं पर्यवसिते वाक्यार्थेऽनन्तरं मम शोकेन पित्रा परित्यक्तम् मयापि पितृशोकेन त्यक्तव्यमिति पितृशोकस्यैव हेतुत्वमाकाङ्क्षितं तदनुपादानेन निर्हेतुत्वम् । न च न्यूनपदत्वं, तदनुपादानेऽप्युक्तरीत्यान्वयबोधसंभवात् । तदभाव एव न्यूनपदत्वम् ।

इदं ते केनोक्तं कथय कमलातङ्कवदने
यदेतस्मिन् हेम्नः कटकमिति धत्से खलु धियम् ।
इदं तद् दुःसाधाक्रमणपरमास्त्रं स्मृतिभुवा
तव प्रीत्या चक्रं करकमलमूले विनिहितम् ॥ २६४ ॥

अत्र कामस्य चक्रं लोकेऽप्रसिद्धम् ।

**बालचित्तानुरञ्जनी**—प्रसिद्धिविरुद्धो विद्याविरुद्धश्च । तत्राद्यमुदाहरति **इदमिति** । कमलस्य विच्छायतापादकं वदनं यस्याः तस्याः संबोधनम् एकस्मिन् वस्तुनि हेम्नः कण्टकं कटकं ते खल्विति धियं धत्स इति । यत् ते इदं केनोक्तं कथय । इदं कण्टकं कटकं न भवतीत्यर्थः । किं तर्हि तदिदं कन्दर्पेण प्रीत्या तव करमूले विनिहितम् ? दुःसाधा ये पुरुषाः तेषां आक्रमणे परमास्त्रभूतं चक्रं लोके भगवतो विष्णोरेव चक्रमिति प्रसिद्धं न कामस्य अतः प्रसिद्धिविरुद्धमित्याह **अत्रेति** ।

**सारबोधिनी—इदमिति**। केन भ्रान्तप्रतारकेण। कमलस्यातङ्को भयं यस्मादेवंविधं वदनं यस्यास्तेन वदनस्य चन्द्रत्वं व्यङ्ग्यम्। **लोकेऽप्रसिद्धमिति**। कामस्य पञ्चशरत्वेनैव ख्यातेः। न च कामस्य चक्राभावादयोग्यत्वेन वाक्यदोषता। यतः चक्रनिधानकर्तृत्वमेव स्मरस्योपन्यस्तम् न तु चक्रवत्त्वम्, येन बाधः स्यात्। अन्यदीयशस्त्रस्याप्यन्येन निधानसंभवात्। अन्यदीयास्त्रस्यान्येन निधानमफलमिति प्रतिसन्धानस्य वाक्यार्थप्रतीत्यौत्तरकालिकत्वेनार्थदोषतैव।

उपपरिसरं गोदावर्याः परित्यजताध्वगाः
सरणिमपरो मार्गस्तावद्भवद्भिरिहेक्ष्यताम्।
इह हि विहितो रक्ताशोकः कयापि हताशया
चरणनलिनन्यासोदञ्चन्नवाङ्कुरकञ्चुकः ॥२६५॥

अत्र पादाघातेनाशोकस्य पुष्पोद्गमः कविषु प्रसिद्धो न पुनरङ्कुरोद्गमः।

**बालचित्तानुरञ्जनी**—अत्रैवोदाहरणान्तरमाह **उपेति**। हे अध्वगाः! गोदावर्याः निकटे सरणिं त्यजत। भवद्भिः अपरस्तावन्मार्गः इहान्वेष्यताम्। इह हि गोदावरीपरिसरे हताशया यानि [कयापि?] चरणकमलन्यासेन उदञ्चत् नवाङ्कुरं कञ्चुको यस्य ईदृशः रक्ताशोकः विहितोऽस्ति। हताशयेति प्रशंसागर्भ उपालम्भः। कामिनीचरणाघातेन कुसुमोद्गमः कविप्रसिद्धः न त्वङ्करोद्गम इति कविप्रसिद्धिविरोध इत्याह **पादेति**।

**सारबोधिनी**—कविप्रसिद्धिविरुद्धमाह **उपपरिसरमिति**। अशोककलिकादर्शनमूर्च्छितस्य गृहमागच्छतः पथिकस्य तेनैव पथा व्रजन्तं पथिकान्तरमालोक्यैवमुक्तिः। **अत्रेति**। यद्यपि पुष्पोद्गमेन नवाङ्कुरोद्गमः स्यादेवेति न बाधस्तथापि तथा कविवर्णनाविरहेण तद्विरुद्धः।

सुसितवसनालङ्कारायां कदाचन कौमुदी—
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः।
तदनु भवतः कीर्तिः केनाप्यगीयत येन सा
प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥२६६॥

अत्रामूर्ताऽपि कीर्तिः ज्योत्स्नावत् प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।

**बालचित्तानुरञ्जनी**—लोकप्रसिद्धिकविमर्यादयोः विप्रतिषेधे पूर्वदौर्बल्यमाह **सुसितेति**। कौमुदीमहसि सति शुभ्रवस्त्रधारिण्यां सुदृशि कामिन्यां स्वैरं यान्त्यां उपपतिसमीपं यान्त्यां सत्यां विधुश्चन्द्रः अस्तङ्गतोऽभूत्। हे नृप! तदनु भवतः कीर्तिः केनाप्यगीयत येन सा कान्ता मुक्ताशङ्का सती प्रियगृहं

[अगात्] त्वं शुभप्रदः क्व नासि ? अत्र अमूर्ताया अपि कीर्तेः श्वैत्यविशिष्टत्वं लोकविरुद्धमपि कविप्रसिद्धत्वान्न दुष्टमित्याह **अत्रेति** ।

**सारबोधिनी**—लोकविरुद्धस्य कविप्रसिद्धत्वेन न विरुद्धत्वमित्याह सुसितेत्यादि । कदाचन एकदा कौमुदीमहसि चन्द्रे सति स्वैरं यान्त्यामित्यन्वयः ।

सदा स्नात्वा निशीथिन्यां सकलं वासरं बुधः ।
नानाविधानि शास्त्राणि व्याचष्टे च शृणोति च ॥२६७ ॥

ग्रहोपरागादिकं विना रात्रौ स्नानं धर्मशास्त्रेण विरुद्धम् ।

अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते ।
षाड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना ॥२६८ ॥

एतत् अर्थशास्त्रेण ।

**बालचित्तानुरञ्जनी**—विद्याविरुद्धमुदाहरति **सदेति** । बुधः सदा रात्रौ स्नात्वा सकलं वासरं नानाविधानि शास्त्राणि व्याचष्टे शृणोति च । अत्र "रात्रौ स्नानं न कुर्वीत राहोरन्यत्र दर्शनादि"ति धर्मशास्त्रविरुद्धं रात्रौ सर्वदा स्नानमित्याह **ग्रहेति** । अत्रैवोदाहरणान्तरमाह **अनन्येति** । यस्य बाह्वोर्बलं अनन्यसदृशं समीक्ष्यते तस्य षाड्गुण्यानुसृतिः षड्गुणा एव षाड्गुण्यम् ते च "सन्धिर्नाविग्रहो यानमासनं द्वैधसमाश्रयः" निःप्रयोजना । सत्यम् । अर्थशास्त्रमान्विक्षिकी दण्डनीतिश्च यत्र । त्रिवर्गस्य परस्परानुरोधेन उपयोगोपदेशः सा आन्वीक्षिकी यस्या भगवान् भार्गवः प्रणेता अन्यत्र पुनः यत्र कामौ प्रधानं लोकानुवृत्तिराश्रयधर्मः स दण्डनीतिः, यस्य भगवान् बृहस्पतिः प्रवक्ता । तत्र दण्डनीतौ द्विषज्जयस्य न वर्त्तुलत्वमुक्तम् । तद्विरुद्धमेतदित्याह **एतदिति** ।

**सारबोधिनी**—विद्यापदेन शास्त्रमुक्तम् तद्विरुद्धमाह **सदेत्यादि** । **षाड्गुण्येति** । सन्धिविग्रहयानासनद्वैधसंश्रयाश्च षड्गुणाः ।

विधाय दूरे केयूरमनङ्गाङ्गणमङ्गना ।
बभार कान्तेन कृतां करजोल्लेखमालिकाम् ॥२६९॥

अत्र केयूरपदे नखक्षतं न विहितमिति । एतत् कामशास्त्रेण ।

अष्टाङ्गयोगपरिशीलनकीलनेन दुःसाधसिद्धिसविधं विदधद्विदूरे ।
आसादयन्नभिमतामधुना विवेकख्यातिं समाधिधनमौलिमणिर्विमुक्तः ॥२७०॥

अत्र विवेकख्यातिस्ततः संप्रज्ञातसमाधिः पश्चादसंप्रज्ञातस्ततो मुक्तिर्न तु विवेकख्यातौ । एतत् योगशास्त्रेण । एवं विद्यान्तरैरपि विरुद्धमुदाहार्यम् ।

**बालचित्तानुरञ्जनी**—कामशास्त्रविरुद्धमुदाहरति। अङ्गना कन्दर्पविद्ध [चिह्नं ?] केयूरं दूरे कृत्वा कान्तेन कृतां नखक्षतावलिं दधौ। "कक्षाकरोरुजघनस्तनपृष्ठपार्श्वहृत्कंधरासु नखराः खरवेगयोः स्युः। अप्यन्ययोर्नवरते कलहे च शान्ते पुष्पोद्गमे प्रवसने विरहे च योज्याः।" इत्यादि कामशास्त्रेण केयूरस्थाने नखक्षतं न विहितमिति तद्विरुद्धमेतदित्याह **केयूरेति**। योगशास्त्रविरुद्धमुदाहरति **अष्टाङ्गेति**। यम-नियमासनप्राणायामप्रत्याहारध्यानसमाधयोऽङ्गानि तेषां परिशीलनं अभ्यासः तस्य कीलनं दृढभूमि-तापादनं तेन दुःसाधसिद्धिर्मोक्षः, तस्याः सविधः प्रत्यासन्नो योगः असंप्रज्ञातलक्षणस्तं विदूरे विदधत् अन-पेक्षमाणः विवेकख्यातिं प्रकृत्यादौ पुरुषेश्वरयोगश्च अन्यत्वप्रतिपत्तिं आसादयन् कश्चित् समाधिधनानां मौलिमणिर्योगिश्रेष्ठः अधुना विमुक्तोऽभूत्। योगशास्त्रे पूर्वं विवेकख्यातिः तदनु संप्रज्ञातः, तदनु असं-प्रज्ञातः पश्चान्मुक्तिरिति प्रतिपादितम्। तद्वैपरीत्यात्तद्विरुद्धमित्याह **विवेकेति**। वितर्कविचाराविद्या-स्मितादिज्ञानानुसारी योगः संप्रज्ञातः परमवैराग्यजः विद्यादिसंस्कारमात्रसहितः निवृत्तान्तःकरणवृत्ति-योगस्त्वसंप्रज्ञातः।

रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः॥

अत्र नभस्वतः संचारे क्रमेण स्वरा उत्पद्यन्ते न पुनर्व्युत्क्रमेणेति कुतो रागसन्धीनां मूर्च्छनानां स्फुटीभाव इति भरतशास्त्रविरुद्धमित्याद्यन्यदप्यूह्यमित्याह **एवमिति**।

**सारबोधिनी**—यमश्च नियमश्चैवमासनं प्राणसंयमः। प्रत्याहारो धारणा च ध्यानञ्चैव समाधियुक्। एतानि कथितान्यष्टौ योगाङ्गानि मनीषिभिः। परिशीलनं पुनः पुनराचरणम्। कीलन-मभ्यासदार्ढ्यम्। सिद्धयोऽणिमादयः। तासां सान्निध्यं दूरीकुर्वन्नित्यर्थः। विवेकख्यातिः सत्त्वपुरुषयोर्भेदाव-भासः। संप्रज्ञातः सविकल्पः समाधिः यत्रात्मा विषयान्तरञ्च भासते। असंप्रज्ञात आत्मातिरिक्तविषय-ग्राही समाधिः। विद्यान्तरैरागमवैद्यकादिभिः विरुद्धार्थप्रतीत्या सहृदयवैरस्यमेव दूषकताबीजम्।

प्राप्ताः श्रियः सकलकामदुघास्ततः किं दत्तं पदं शिरसि विद्विषतां ततः किम्।
संतर्पिताः प्रणयिनो विभवैस्ततः किं कल्पं स्थितं तनुभृतां तनुभिस्ततः किम्॥२७१॥

अत्र ततः किमिति न नवीकृतम्।

**बालचित्तानुरञ्जनी**—अनवीकृतमुदाहरति **प्राप्ता इति**। सकलकामदाः संपदः प्राप्ताः ततः किम्, शत्रूणां शिरसि पदं दत्तम् ततः किम्, विभवैः प्रणयिनः संतर्पिताः ततः किम्, शरीरिणां शरीरैः कल्पं कल्पकालं स्थितम्, ततः किम्? अत्र ततः किमित्यस्य पर्युषितप्रीतिकतया चमत्कारशून्यत्वादनवी-कृत[त्व]मित्याह **अत्रेति**।

**सारबोधिनी**—अनवीकृतमुदाहरति **प्राप्ता इति**। भङ्ग्यन्तरेण यन्नवत्वं न प्रापितं एकभङ्गि-निर्दिष्टानेकार्थत्वमिति यावत्, तदनवीकृतम्। कामदुघाः सकलकामदा इत्यर्थः। अत्र तत्त्वज्ञानं विना

सर्वमकिञ्चित्करमिति भावः । **अत्रेति** । ततः किमित्यतो भङ्ग्यन्तराभावात् । न चात्र कथितपदत्वमेवेति वाच्यम् । पर्यायान्तरप्रयोगेऽपि भङ्ग्येकरूपतायामसाङ्कर्यात् । न च तथाप्यनेन कथितपदस्यान्यथासिद्धिः स्यादिति वाच्यम् । सत्यप्यर्थभेदतात्पर्ये पदैकत्वदोषादर्थैक्यप्रतिभासस्य कथितपददूषकताबीजस्य भेदादिति ।

तत्तु यथा

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥२७२॥

यत्रानुल्लिखितार्थमेव निखिलं निर्माणमेतद्विधे-
रुत्कर्षप्रतियोगिकल्पनमपि न्यक्कारकोटिः परा ।
याताः प्राणभृतां मनोरथगतीरुल्लङ्घ्य यत्सम्पद-
स्तस्याभासमणीकृताश्मसु मणेरश्मत्वमेवोचितम् ॥२७३॥

अत्र 'छायामात्रमणीकृताश्मसु मणेस्तस्याश्मतैवोचिता' इति सनियमत्वं वाच्यम् ।

**बालचित्तानुरञ्जनी**—अनवीकृतस्पष्टनार्थं नवीकृतमुदाहरति **यदीति** । अग्निर्यदि दहति अत्र किमद्भुतम् ? किं ततः अद्रिषु च यदि गौरवम् ? किं ततः पयोनिधेः अम्बु सदैव लवणम् । सतां प्रकृतिरेव अविषादिता, दुःखकारिणी न भवति । अत्र किमद्भुतमित्यादीनामेकार्थत्वेऽपि पर्यायोपादानान्नवीकृतत्व-मित्यर्थः । सनियमानियमविशेषाविशेषपरिवृत्ता इत्यत्र सनियमात् अनियमात् विशेषात् अविशेषात् परि-वृत्ता विपर्यस्ताश्चत्वारोऽर्था दुष्टा इत्युक्तम् तत्राद्यमुदाहरति **यत्रेति** । यत्र मणौ सति विधेः ब्रह्मणः एत-न्निर्माणम् अयं लोकसर्गः अनुल्लिखितविषयावगाहनविमुखं अक्षि लोचनं यस्य एव स तिष्ठति उत्कर्षस्य त्रासराहित्याद्याभिजात्यस्वभावस्य प्रतियोगिनः प्रतिसंबन्धिनः कौस्तुभस्य स्यमन्तकादेः सादृश्यकल्पनमपि परा न्यक्कारकोटिः अवज्ञाविश्रान्तिभूमिः यस्य मणेः मङ्गलत्वप्रभावहलत्वा[?]मूल्यत्वादयः संपदः समृद्धयः प्राणभृतां जन्तूनां ये मनोरथास्तेषां गतयः प्रवृत्तयः ताः उल्लङ्घ्य याताः मनोरथगोचरा अपि न भवन्ती-त्यर्थः, एवंविधस्य तस्य मणेः आभासेन स्फुरणेन मणीकृताः अमणयो मणयः कृताः ये अश्मानः तेषु मध्ये अश्मत्वमेव उचितम् । अत्र मणेरुत्कर्षः इतरमणीनां अपकर्षाभिधाने भवति अपकर्षश्च तेषां छायामात्रेण मणीकृताः न वस्तुत इत्येवकारपर्यायेण मात्रपदेन संभवति तदभावात् सनियमाद्विपर्यस्तत्वमित्याह **अत्रेति** ।

**सारबोधिनी**—ननु नवीकृतं कीदृगित्याह **तत्तु यथेति** । **यदि दहतीति** । सतामविषादिता प्रकृति-रेवेति नाश्चर्यकरी । अत्र दृष्टान्तमाह । यदि दहतीत्यादित्रयम् । तत्र किं तत इत्यादिना किमद्भुतमित्यादि नवीकृतम् । पिष्टपेषणन्यायेनाशक्तिसूचनेन वा सहृदयोद्वेगो दूषकताबीजम् । नियमादिभिश्चतुर्भिः परिवृत्त-पदान्वयान्नियमपरिवृत्तादिचतुष्टयं लभ्यते । तैश्चतुर्भिः सहितः अनवीकृत इत्यस्य विशेषणम् । नियम-

सहितोऽनियमादिस्तत्परिवृत्त इति । यद्वा नियमानियमाभ्यां सहितौ विशेषाविशेषौ तत्परिवृत्त इति । केचित्तु सनियमपरिवृत्त एव दोषः । तत्र सनियमपरिवृत्तः सनियमत्वेन वाच्यो अनियमत्वेनोच्यत इत्यर्थमाहुः । नियमपरिवृत्तो दुष्ट इति मदनुनियमस्य शब्दादप्रतिपत्तिर्नियमपरिवृत्तः [?] ।

**यत्रे**त्यादि । अनुल्लिखिताख्यमनिर्दिष्टनामकम् । अनुल्लिखितार्थमिति पाठे यत्र मणौ सति निखिलमेव विधेर्निर्माणमर्थरहितमित्यर्थः । अथवा यत्र निर्माणमनुल्लिखितोऽनिर्वचनीयः अर्थः प्रयोजनं यत्रेत्यर्थः । **याता इत्यादि** । यस्य संपदः प्राणिमनोगोचरा अपि न भवन्तीत्यर्थः । आभासः कान्तिः । साधारणमणिसमानपतितस्य पाषाणत्वमेवोचितं, न मणित्वम् । चिन्तामणेः प्राकृतमणिगणनायां गणनमनुचितमित्यर्थः । **छायामात्रेति** । तथा कृते गुणान्तरव्यवच्छेदेन निन्दातिशयः प्रतीयते । ननु तदा न्यूनपदत्वं स्यादिति चेन्न । आभासस्यैवान्वयप्रतियोगित्वेन तद्वाचकपदसद्भावान्न न्यूनपदत्वम् । यतः प्रकृष्टगुणान्तरासहकृतत्वस्य परस्परमन्वयितावच्छेदकत्वात् । तथा च तस्यानुपादाने कुतो न्यूनपदत्वम् । अन्वयप्रतियोग्युपस्थापकपदानुपादान एव न्यूनपदत्वात् । नापि मात्रार्थप्रतीतौ अश्मत्वमेवोचितं कुत इत्याकाङ्क्षानुवृत्तेः शाब्दबोधवैगुण्याच्छब्ददोषता यत्किञ्चिदेकोत्कृष्टधर्मवतोऽन्वयापादने उत्कृष्टधर्मवता गणनमनुचितमितिरूपेण वाक्यार्थोपपत्तेः । उत्कृष्टधर्माश्च यत्रेत्यादिनोपात्ताः । अनन्तरं च चिन्तामणिवृत्तिगुणव्यवच्छेदाय मात्रार्थोऽपेक्षणीयः ।

वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते
बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः ।
वाहिन्यः पार्श्वमेताः क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं
स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते तेऽम्बुपानाभिलाषः ।। २७४ ।।

अत्र शोण एव इति नियमो न वाच्यः ।

**बालचित्तानुरञ्जनी**—द्वितीयमुदाहरति **वक्त्रेति** । हे अवनिपते ! सरस्वती वाग्देवता नदी च ते मुखारविन्दमधिवसति । ते अधरः शोण एव, शोणः अरुणो नदविशेषश्च । काकुत्स्थवीर्यस्मरणकरणे समर्थः ते दक्षिणो बाहुः समुद्रः मुद्रासहितः पयोधिश्च । एताः वाहिन्यः सेनाः नद्यश्च क्षणमपि भवतः पार्श्वं नैव मुञ्चन्ति । अस्मिन् निर्मले अन्तः मानसे चित्ते सरोवरे च ते अम्बुपानाभिलाषः कथं भवति । अत्र राजावयववर्णने अवधारणं व्यर्थम् । शोण एव न श्वेतः कृष्णो वेति ग्राम्यत्वप्रसङ्गेन श्वेतत्वादिसंभावनाया एवाभावात् । नदीप्रसङ्गेनावधारणं न युक्तम् । पिपासुं प्रति शोण एव न तु नद्यन्तरमिति, नद्यन्तरव्यावृत्तेर्विरुद्धत्वात् । अतः अनियमाद्विपर्यस्तत्वमित्याह **अत्रेति** ।

**सारबोधिनी—वक्त्रेति** । सरस्वती भारती नदीभेदश्च । शोणो रक्तो नदश्च । सादृश्यात् सेतुदर्शनञ्च । विरोधात् वातेन तद्बन्धनात् काकुत्स्थवीर्यस्मरणम् । दक्षिणः सव्येतरः दानदक्षो वा दिग्विशेषश्च । समुद्रः मुद्रा अङ्गुलीयकं तत्सहितो जलधिश्च । वाहिन्यः सेनाः नद्यश्च । मानसे मनसि सरसि च । **नियमो न वाच्य इति** । पिपासोर्जलमात्राभिलाषेण नद्यन्तरव्यवच्छेदस्याविवक्षितत्वात् । किञ्च शोण एव नत्वशोण

इति स्वीकारस्तदा शोणव्यतिरिक्तनदनिषेधः स्यात् । तच्चाविवक्षितम् सकलजलाधारत्वमिति विवक्षणात् । न चाधिकपदत्वम् भेदस्य वक्तव्यत्वात् । तथाहि यत्र सोऽर्थस्तत्पदव्यतिरेकेणापि प्राप्यते तदधिकपदम् यत्र तेन न प्राप्यते किन्त्वन्येनाविवक्षितश्च सिध्यति तत्रायम् । तथाहि । यावदुच्यते स्फटिकनिर्मलस्तावदेव स्फटिकाकृतिनिर्मल इति द्वयोः स्पष्टतरो भेदः इति । अत्र तु नियमो न शोणपदार्थ इति । सदैव शोण इति यदि विवक्षा तदा अस्थानपदत्वं स्यादिति ।

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै—
र्मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां श्रियम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ।।२७५।।

अत्र 'ज्यौत्स्नीम्' इति श्यामाविशेषो वाच्यः ।

**बालचित्तानुरञ्जनी**—तृतीयमुदाहरति **श्यामेति** । कस्यचिद्विरहिणः स्वसखीन् प्रति वचनम् । भो सखायः ! श्यामां रात्रिम् निबिडैः मषीकूर्चकैः, श्यामत्वमानयत । अथ मन्त्रं तन्त्रं वा प्रयुज्य श्वेतोत्पलानां कुमुदानां रुचिं हरत । चन्द्रं च शिलापट्टे कृत्वा कणशः क्षणात् चूर्णयत येन कृत्वा अहं तस्याः श्यामायाः कान्तायाः वक्त्रमुद्राङ्किता दश दिशः द्रष्टुं क्षमे समर्थो भवामि । अत्र श्यामकिरणासंभवात् ज्योत्स्नीमिति वक्तव्यम्, तत्र तत्संभवात् । अतो विशेषाद्विपर्यस्तत्वमित्याह **अत्रे**ति ।

**सारबोधिनी**—**श्यामामिति** । कूर्चकं तूलिका । तन्त्रमौषधम् । **अथेति** विकल्पे । मुद्रा चिह्नम् । श्यामेति पदेनोपादाने कृते श्मामाकृतित्वं योगरूढिन्यायेन प्राप्तमेवेति तत्र श्यामलिमोपादाने वैयर्थ्यमिति हृदि कृत्वाह **अत्रे**ति ।

कल्लोलवेल्लितदृषत्परुषप्रहारैरत्नान्यमूनि मकरालय मावमंस्थाः ।
किं कौस्तुभेन विहितो भवतो न नाम याच्ञाप्रसारितकरः पुरुषोत्तमोऽपि ।।२७६।।

अत्र 'एकेन किं न विहितो भवतः स नाम' इति सामान्यं वाच्यम् ।

**बालचित्तानुरञ्जनी**—चतुर्थमुदाहरति **कल्लोलेति** । हे समुद्र तरङ्गचलितशिलाकर्कशप्रहारैः अमूनि रत्नानि मावज्ञासीः । कौस्तुभेन नारायणोऽपि भवतः याच्ञा ते [?] प्रसारितकरः किं नाम न विहितः ? अत्र कौस्तुभेनेति विशेषकथनेऽन्येषामनुपकारकत्वमागच्छतीति विशेषो न वाच्यः तत्कथनात् अविशेषाद्विपर्यस्तत्वमित्याह **अत्रे**ति ।

**सारबोधिनी**—**कल्लोलेति** । वेल्लितं चालितम् । मकरालयो जलधिः । पुरुषोत्तमः श्रीकृष्णः पुरुषश्रेष्ठश्च । वस्तुनि सत्येवोपकारः स्यादिति वाक्यार्थोपपत्तावनन्तरं विशेषस्योपकारित्वे सामान्येषु कथमादर इति प्रतीतावनुपपत्तिनिरासाय एकपदमपेक्षणीयम् । तदुपादानेन येषामेकेनोपकृतं तदितरेष्वप्यनादरो

नोचित इति [न] तदनुपपत्तिः । प्रतीत्यनुपपत्तिविरहेण कौस्तुभपदस्याधिक्यं एकपदस्य विरहेण न्यूनपदत्वमपि निरस्तम् । दूषकताबीजं विवक्षितार्थानिर्वाहः ।

अर्थित्वे प्रकटीकृतेऽपि न फलप्राप्तिः प्रभोः प्रत्युत
द्रुह्यन् दाशरथिर्विरुद्धचरितो युक्तस्तया कन्यया ।
उत्कर्षं च परस्य मानयशसोर्विस्रंसनं चात्मनः
स्त्रीरत्नं च जगत्पतिर्दशमुखो देवः कथं मृष्यते ।।२७७।।

अत्र स्त्रीरत्नम् 'उपेक्षितुम्' इत्याकाङ्क्षति । न हि परस्येत्यनेन संबन्धो योग्यः ।

**बालचित्तानुरञ्जनी**—साकाङ्क्षमुदाहरति **अर्थित्व इति**। कामुकत्वेन अर्थित्वे प्रकटीकृतेऽपि प्रभोः रावणस्य संभोगरूपफलप्राप्तिर्न जाता । प्रत्युत वैपरीत्येन विरुद्धचरितो दाशरथिर्द्रुह्यन् वर्तते स्वयं च तया कन्यया युक्तः । परस्य उत्कर्षं च मृष्यताम् आत्मनो मानयशसोः विस्रंसनं च मृष्यताम् जगत्पतिर्दशमुखो देवः स्त्रीरत्नं उपेक्षितुं कथं मृष्यते ? अत्र स्त्रीरत्नस्य अमर्षणीयताव्युदासार्थं उपेक्षितुमित्याकाङ्क्षतीति साकाङ्क्षत्वमित्याह **अत्रेति**। ननु परस्य स्त्रीरत्नमित्यन्वयोऽस्त्वित्यत आह **नहीति**। अन्यत्र व्यवधानान्न तेनान्वय इति भावः । न चैतन्न्यूनपदमिति वाच्यम् । अध्याहारनिरपेक्षमन्विततया वाक्यस्य पूर्णत्वात् ।

**सारबोधिनी**—**अर्थित्व इति**। रावणदूतस्यैतद्वचनम् । फलप्राप्तिः सीतालाभः । प्रत्युत विरोधेन केवलं न फलप्राप्तिः प्रत्युत दाशरथिर्विरुद्धचरितो यज्ञादिरक्षकः तया कन्यया युक्तो द्रुह्यन्मारीचादिहिंसकः विस्रंसनमवमाननं कथं मृष्यति कथं न द्वेष्टि ?। मृषधातुरद्वेषार्थः । तथा च स्त्रीरत्नस्य द्वेषायोग्यत्वे कथमित्यादिनान्वय इत्याह **उपेक्षितुमिति**। अथ परस्येत्यनेन सम्बन्धात् नायोग्यतेत्याशङ्क्य निषेधयति **नहीति**। जनितान्वयबोधत्वेन निराकाङ्क्षत्वात् । न चानुषङ्गः, असम्बद्धव्यवाये तु वैषम्यान्नानुषज्यत इत्यभ्युपगमात् । अत्र न्यूनपदत्वशङ्कायां न्यूनपदत्वं पुनरमर्षणक्रियोपादानान्निरस्तम् । स्त्रीरत्नमित्यत्रामर्षणक्रियायामेव तात्पर्यं न तु क्रियान्तरे, येन तदनुपादाने न्यूनपदता स्यात् । केवलं स्त्रीरत्नामर्षणक्रियायोग्यताघटकत्वेनोपेक्षायामपेक्षणीयत्वं न्यूनतायां च न्यूनपदता । अन्यथा घटेन जलमाहरेत्यत्र छिद्रेतरत्वानुपादाने तथा प्रसङ्गात् । तेन विशेषणविशेष्यभावान्वये क्रियाकारकान्वये वामीषां यत्किञ्चिदनुपादाने एव न्यूनतेति नात्र प्रसङ्ग इति । न चैवं तथाभूतामित्यादावितथंपदन्यूनता न-स्यात्, तस्य खिन्ने खेदभजनानौचित्यासंजनयोग्यताया एव निर्वाहकत्वात्, अन्यथा प्रकारान्तरेण खेदौचित्यादिति वाच्यम् । यतः प्राचीनप्रणयानुरोधेनैव ग्रन्थकृता तदंशे न्यूनपदत्वमुक्तम् । वस्तुतोऽस्माभिरित्यनुपादान एव न्यूनपदत्वमिति ध्येयम् ।

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः ।।२७८।।

अत्र 'स्याच्चेदेष न रावणः' इत्यत्र एव समाप्यम् ।

**बालचित्तानुरञ्जनी**—अपदयुक्तं नाम अस्थानयुक्तम् । तदुदाहरति **आज्ञेति**। आज्ञा इन्द्रचूडामणिप्रणयिनीयं, चक्षुः शास्त्राणि, भूतपतौ पिनाकिनि भक्तिः। लङ्केति दिव्या पुरी स्थानं, ब्रह्मवंशे उत्पत्तिः। तत् तस्मात् कारणात् । अहो आश्चर्यम् । ईदृग्वरो न लभ्यते, यदि एष रावणो न स्यात्। कस्मिन् सर्वत्र सर्वे गुणा वर्तन्ते। अत्र स्याच्चेदेष न रावण इति रावणस्य दुर्जनत्वे प्रतिपाद्ये क्व पुनरित्यादिना न समाधेयम्। तथा च 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' इति रावणस्यापि वरतया वरणीयत्वप्रसङ्ग इत्यपदयुक्तमार्थो दोष इत्याह **अत्रेति**।

**सारबोधिनी**—**आज्ञेति**। प्रणयित्वेन निरूपणाद्दम्पत्योरविच्छेदसूचनम् । शास्त्राणि चक्षुरिति। बहुवचनैकवचनाभ्यां सर्वशास्त्रविषयैकज्ञानसूचनम् । चक्षुषो नवत्वेन विषयग्रहाधिक्यम्। पदं निवासः। वीरचरिते, सन्त्येव बहवो गुणास्तथापि बलवानेको दोषस्तानपवदतीत्युपक्रमे रावणपुरोहितं प्रति जनकपुरोहितस्योक्तिरियम्। तेन चूर्णकसाचिव्येन रावणं प्रत्युपेक्षा वाक्यार्थः स्याच्चेदेष न रावण इत्यन्तेनैव प्राप्तः समर्थनं नाकाङ्क्षतीत्यस्थानसमाप्तत्वम्। न च तर्हि निराकाङ्क्षाभिधाने च शब्ददोषतेति वाच्यम्, समर्थनसहकृतेनैतद्वाक्येनान्यत्रोक्तसर्वगुणासम्भवेन रावण एवेदृशो रावणादन्य ईदृग्वरो न लभ्यत इत्यपेक्षया वाक्यार्थोपपत्तेरनन्तरं चूर्णकानुसंधानेन दोषावतारात् प्रतीत्यनुपपत्तिविरहात्। न चाधिकपदत्वं, तदर्थस्यान्वयिकत्वात् । केचित्तु प्रकृतार्थे विरुद्धार्थकपदशालित्वमपदयुक्तत्वम् तेनापदयुक्त इत्येव पाठ इति वदन्ति।

श्रुतेन बुद्धिर्व्यसनेन मूर्खता मदेन नारी सलिलेन निम्नगा ।
निशा शशाङ्केन धृतिः समाधिना नयेन चालङ्क्रियते नरेन्द्रता ॥२७९॥

अत्र श्रुतादिभिरुत्कृष्टैः सहचरितैर्व्यसनमूर्खतयोर्निकृष्टयोर्भिन्नत्वम् ।

लग्नं रागावृताङ्ग्या० ॥२८०॥

इत्यत्र विदितं तेऽस्त्वित्यनेन श्रीस्तस्मादपसरतीति विरुद्धं प्रकाश्यते ।

प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशा-
मकेशवमपाण्डवं भुवनमद्य निःसोमकम् ।
इयं परिसमाप्यते रणकथाद्य दोःशालिना-
मपैतु रिपुकाननातिगुरुरद्य भारो भुवः ॥२८१॥

अत्र 'शयितः प्रयत्नेन बोध्यसे' इति विधेयम्।

**बालचित्तानुरञ्जनी**—सहचरभिन्नमुदाहरति। श्रुतेन बुद्धिरलङ्क्रियते इति सम्बन्धः। व्यसनेन मूर्खता, मदेन नारी, सलिलेन नदी, चन्द्रेण निशा, समाधिना धृतिः, नयेन नरेन्द्रता। उत्कृष्टैरुपादेयतया उपदिष्टैः श्रुतबुद्ध्यादिभिः सह निकृष्टयोः परिहार्यतया प्रतिपाद्ययोर्व्यसनमूर्खतयोर्भिन्नत्वं विजातीयत्वमिति सहचरभेदो दोष इत्याह **अत्रेति**। विनयेन वीरतेति पाठो युक्तः ।

प्रकाशितविरुद्धमुदाहरति **लग्नमिति** ।

लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्टचारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती ।
तत्सक्तोऽयं न किञ्चित् गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद् गदितुमिव गतेत्यम्बुधिं यस्य कीर्तिः ॥

इति गर्भितस्योदाहरणत्वेन प्रदर्शिते पद्ये विदितं तेऽस्त्विति लक्ष्मीवाक्येन ततः श्रीरपसरतीति विरुद्धं प्रकाश्यत इति प्रकाशितविरुद्धत्वमित्यर्थः । न चास्य विरुद्धमतिकृतः सकाशान्न भेद इति वाच्यम्, विरुद्धमतिकृति शब्दशक्तिमूला विरुद्धार्थप्रतीतिः, अत्र त्वर्थसामर्थ्यनिबन्धनेति भेदसम्भवात् ।

विध्ययुक्तमुदाहरति **प्रयत्नेति** । दुर्योधनं प्रति कस्यचिद्वचनम् । स्तुतिभिः प्रयत्नपरिबोधितः त्वं अद्य निशां शेषे रात्रौ सुखेन शयनं करोषि । यतः अकेशवं अपाण्डवं निःसोमकं भुवनं करिष्यामि । अद्य दोःशालिनां इयं रणकथा परिसमाप्यते । अद्य रिपुकाननातिगुरुः भुवः भारः अपैतु । अत्र परिबोधनस्यानुवाद्यत्वं शयनस्य विधेयत्वं चोक्तम् तदनुचितम्, शयनमनूद्य परिबोधनस्य विधेयत्वात् । यतः केशवपाण्डवसोमकादिसकलविपक्षप्रतिक्षेपात् उपलब्धनिश्चिन्तनिद्रासुखस्य सूतमागधादिभिः यथा कृच्छ्रेण बोधनीयता तथा करिष्यामीति तात्पर्यम् । अतः 'सुखेन शयितश्चिरादुषसि बोध्यसे मागधैरि'ति युक्तः पाठ इत्याह **अत्रेति** ।

**सारबोधिनी**––समभिव्याहृतविजातीयार्थत्वं सहचरभिन्नत्वम् । **श्रुतेनेति** । श्रुतं विद्या, व्यसनं द्यूतादि, समाधिर्धर्मचिन्ता । तथा च श्रुतादिसमभिव्याहारेण मूर्खस्य व्यसनं कर्त्तव्यमित्यपि स्यात्, तत्समभिव्याहारेण बुद्धिशालिनः श्रुतमपि त्याज्यं स्यादिति दूषकता । यद्वा उत्कृष्टैरुत्कृष्टस्य भूषणमिति बुद्धेर्विच्छेदको निकृष्टानुप्रवेशः ।

प्रतिपादितविवक्षितार्थविरोधिव्यञ्जकार्थत्वं प्रकाशितविरुद्धत्वम् । **प्रकाश्यत इति** । गर्भितप्रस्तावे व्याख्यातमेव । विध्यनुवादपदाभ्यां अयुक्तपदं प्रत्येकमन्वेति । तेन विध्ययुक्तोऽनुवादायुक्तश्चेति दोषद्वयम् । अयुक्तत्वम् न तु विधेयत्वानवगम इति विधेयाविमर्शतो भेदः । यथा चैतत्तथा लक्ष्येषु वक्ष्यामः । **प्रयत्नेति** । दुर्योधनं प्रत्यश्वत्थामोक्तिरियम् । इयत्कालं चिन्ताभरात् अलब्धनिद्रस्त्वं मयाद्य हतेषु वैरिषु सुखं निद्राण वैतालिकस्तुतिभिः प्रयत्नेन बोधं लप्स्यस इति वाक्यार्थः प्रकरणगम्यः संक्षेपेण वृत्तिकृता व्याख्यातः । **अत्र शयित इति** । न च विधेयाविमर्शता । इयत्कालमनिद्राणस्य शयनस्यापि विधेयत्वेनाख्यानात्, तस्य तत्त्वाव गतौ तदयोगात् । किन्तु विधेयतापर्याप्तेरित्याह । शयितः प्रयत्नेनेति विधेयत्वविश्रान्तिर्न युक्ता कि प्रयत्नप्रबोध एव युक्ता । तत्रैव विधिपर्याप्तेरित्याह[?] **शयितः प्रयत्नेन प्रबोध्यस इति** । विशिष्ट विधेर्विशेषणांशेऽपि तदवगमः स्यादेव, तेन न विधेयाविमर्शः किन्तु विध्ययुक्तिर्विधेयत्वविश्रान्त्यन चित्यमित्यर्थः । तथा शयितो भविष्यसि यथा प्रयत्नेन परिबोध्यस इति प्रबोध एव विधेयत्व विश्रान्तिरिति । न चानुवादायुक्तता विधेयत्वविरोधिनोऽनुवाद एव तथात्वात् ।

यथा वा

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ २८२ ॥

अत्र वाताहारादित्रयं व्युत्क्रमेण वाच्यम् ।

**बालचित्तानुरञ्जनी**—एवं शब्दविध्यनुवादेऽनौचित्यमुदाहृत्य आर्थमप्युदाहरति **यथा वेति**। सर्पैः पवनाशनतया आश्वस्य फूत्कारं कृत्वा जगद्भक्षितम् । जलधरजलकणतीव्रव्रतैर्मयूरैः पुनस्तेऽपि भक्षिताः । क्रूरचित्रमृगचर्मवसनैर्लुब्धकैः किरातैस्तेऽपि मयूराः क्षयं नीताः इति दम्भस्य स्फुरितं जानन्नपि असमीक्ष्यकारी जनो गुणानीहते । दाम्भिकेष्वेवेति शेषः । अत्र कृष्णाजिनधारिणो दाम्भिकान् अनन्तरमदाक्षस्य[?]ततो वायुभक्षस्य विन्यासो न्याय्यः । उत्तरोत्तरमुत्कृष्टतरत्वात् । तेन च वाताहारस्य मेघतोयकणिकातीव्रव्रतस्य चमूरुचर्मवसनस्य च व्युत्क्रमेण वाच्यत्वम् । वाच्यविवक्षायां शब्दक्रमस्यान्यथाकर्तुमशक्यत्वात् । दाम्भिकतारतम्यचिन्तायां विध्यनुवादभावस्य आर्थिकविध्यनुवादानौचित्यमित्याशयेनाह **अत्रेति**। अथवा जगन्निःशेषयितुं सर्पैर्वाताहारता स्वीकृतेति वाच्यम्, तान् ग्रसितुं अभ्रतोयकणिकातीव्रव्रतं बर्हिभिराश्रितमिति वाच्यम्, तान् क्षयं नेतुं चमूरुचर्मवसनत्वं लुब्धकैराश्रितमिति वाच्यम् । ततश्च जगद्भक्षणादिकमुद्दिश्य व्रतादिकं विधेयं स्यात् तदनभिधानाद्विध्यनुवादायुक्तत्वमित्याह **अत्रेति**।

**सारबोधिनी**—ननु सुखस्वापे प्रबोधात् परतोऽपि निद्रासंभवे शयन एव विधेयतापर्याप्तिः संभवति । किंच निशां रात्रीणां शेषेऽन्ते इत्यर्थस्यापि संभवेन नोक्तदोष इत्यस्वरसादाह **वाताहारेति** । शाठ्येन धर्माचरणं दम्भः । स्फुरितं चेष्टितम् । जाल्मोऽसमीक्ष्यकारी । अत्र विषधरैर्जगन्ति निःशेषयितुं···चर्मवसनत्वं कृतमित्यर्थे दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहत इत्यर्थान्तरन्यासस्वरसेन विवक्षणीये विधेयस्य व्युत्क्रमाभिधानं विध्ययुक्ततामावहति । यदत्र चर्मवसनापेक्षया जलाहारस्य, तदपेक्षया च वाताहारस्य तीव्रव्रतत्वेन व्युत्क्रमोपन्यासो युक्तस्तत्परिहारेणायुक्ततेति व्युत्क्रमेत्यादेरर्थं वर्णयन्ति । तदसत्, एवं हि दुष्क्रमत्वं स्यात् ।

अरे रामाहस्ताभरण भसलश्रेणिशरण
स्मरक्रीडाव्रीडाशमन विरहिप्राणदमन ।
सरोहंसोत्तंस प्रचलदल नीलोत्पल सखे
सखेदोऽहं मोहं श्लथय कथय क्वेन्दुवदना ॥ २८३ ॥

अत्र विरहिप्राणदमन इति नानुवाद्यम् ।

**बालचित्तानुरञ्जनी**-केवलानुवादानौचित्यमुदाहरति **अरे इति**। विरहिणो वचनम्। अरे उत्पल, स्त्रीणां हस्ताभरण, भसलानां भृङ्गाणां श्रेणिशरण, कामक्रीडालज्जाशमन, वियोगिप्राणसन्तापक, सरोवरस्थितहंसशिरोभूषण, कम्पमानपत्र सखे! अहं सखेदः। मोहं त्यज। चन्द्रमुखी कुत्रास्ते कथय। अस्मत्प्राणान् किमिति गमयसि इत्यादिना प्रकारेण विधिरेव। वितनुविरहिप्राणहननेत्यनुवादः। अतोऽनुवादानौचित्यमित्याह **अत्रेति**।

**सारबोधिनी**-अनुपयुक्तमाह **अरे इत्यादि**। भसला भ्रमराः। उद्दीपनत्वे स्मरक्रीडाव्रीडोपशमनम्। अत्र विरहिणो मोहश्लथनविधाने विरहिप्राणदमनत्वेनानुवादो नोचितः। विरहिविरोधित्वे तन्मोहश्लथनासंभवात्। विरहिणः पुरूरवस इत्यभिधानात्। प्रकरणानुसन्धानेनानुवादायुक्तताप्रतीतिरित्यर्थदोषतैव।

लग्नं रागावृताङ्गचेत्यादि ।। २८४ ।।

अत्र 'विदितं तेऽस्तु' इत्युपसंहृतोऽपि तेनेत्यादिना पुनरुपात्तः।

**बालचित्तानुरञ्जनी**—त्यक्तं पुनः स्वीकृतमुदाहरति **लग्नमिति**। विदितं तेऽस्त्वित्यनेन सर्ववाक्यानां प्रयोगेणापि मध्ये गर्भीकृतेन वाक्यार्थत्रयसंहृतोऽभूत् पुनस्तेनास्मि दत्तेत्युपात्त इति त्यक्तपुनःस्वीकृत इत्यर्थः। एकवाक्यतायां समाप्तपुनरात्तं भिन्नवाक्यत्वे च वाक्यान्तरस्य वक्तुमयोग्यतया अपदमुक्तम्। विपर्यये वाक्योपसंहारशङ्कामुत्थाप्य पुनरस्योपन्यासे त्यक्तः पुनः स्वीकृत इति विवेकः।

**सारबोधिनी**—**लग्नमित्यादि**। त्यक्त उपसंहृतैकदेशः। पुनः प्रकाशितैकदेशः। यावतो निवेद्यान् अर्थान् अनिवेद्यैव मध्ये उपसंहाराभिधानात्। समाप्तपुनरात्ते विशेष्यमात्रावृत्तिरत्र तु वाक्यार्थसमुदायस्येति द्वयोर्भेद इति।

हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः।
यथास्य जायते पातो न तथा पुनरुन्नतिः ।।२८५।।

अत्र पुंव्यञ्जनस्यापि प्रतीतिः।

यत्रैको दोषः प्रदर्शितस्तत्र दोषान्तराण्यपि सन्ति तथापि तेषां तत्राप्रकृतत्वात् प्रकाशनं न कृतम्।

**बालचित्तानुरञ्जनी**—अश्लीलमुदाहरति **हन्तुमिति**। हन्तुं हिंसितुं प्रवृत्तस्य स्तब्धस्य गर्वितस्य रन्ध्रान्वेषिणः सूरस्य यथा शीघ्रं पातो जायते तथा पुनरुन्नतिर्न। अत्र सूरस्य पुंसः श्वापदचेष्टितं समुचितमिति विवक्षितोऽर्थः। अत्र हन्तुं रन्तुं प्रवृत्तस्य स्तब्धस्य उत्थितस्य योनिविवरैषिणः यथा पातो रेतउत्सर्गो जायते तथा पुनरुन्नतिर्न, नष्टरागत्वादिति पुंव्यञ्जनस्यापि प्रतीतेरश्लीलत्वमित्याह **अत्रेति**। एतानि च दोषोदाहरणानि अयोगव्यवच्छेदमात्रेणोक्तानि न पुनरन्ययोगव्यवच्छेदेनापीत्याह

**यत्रेति** । अनङ्गमङ्गलेत्यादौ कातर्थ्यमिति श्रुतिकटु प्रथमं ग्रन्थकारेणोक्तम् तस्यान्त्यधातुसृष्टिलक्षणत्वात् [?] । अश्लीलमपि, अनङ्गस्य मङ्गलस्य गृहमिति प्रशस्तस्मरमन्दिरप्रतीतेः । अश्लीलश्च [?]सति सर्वत्र दोषान्तरसद्भावेऽपि प्रस्तुतमात्रोपक्षेप इत्यर्थः ।

**सारबोधिनी—हन्तुमित्यादि** । हननं हिंसा जघनताडनम् । स्तब्धत्वम् अक्रियत्वं उन्नतिश्च । विवरं छिद्रं स्त्रीवराङ्गमध्यम् । पातोऽपायः शैथिल्यञ्च । उन्नतिरुपचयो रागश्च । पदपरिवृत्तिसहत्वेनार्थदोषता । **यत्रैक इति** । एतच्च 'लग्नं रागावृताङ्ग्ये'त्यत्र दोषाननेकान् प्रकाशयता ग्रन्थकृतैव प्रकाशितम् । तथा चोपाधिसंकरो दोषाय न तूपधेयसङ्करोऽपीति भावः ।

**कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः ।**

**संनिधानादिबोधार्थम् ।**

अवतंसादीनि कर्णाद्याभरणान्येवोच्यन्ते तत्र कर्णादिशब्दाः कर्णादिस्थितिप्रतिपत्तये ।

**यथा**

अस्याः कर्णावतंसेन जितं सर्वं विभूषणम् ।
तथैव शोभतेऽत्यर्थमस्याः श्रवणकुण्डलम् ॥ २८६ ॥

अपूर्वमधुरामोदप्रमोदितदिशस्ततः ।
आययुर्भृङ्गमुखराः शिरःशेखरशालिनः ॥ २८७ ॥

अत्र कर्णश्रवणशिरःशब्दा सन्निधानप्रतीत्यर्थाः ।

**बालचित्तानुरञ्जनी**—उक्तदोषाणामेव विषयविशेषे अदोषत्वं यथासंभवमभिधातुकामः प्रथममपुष्टार्थस्यादोषत्वमाह **कर्णेति** । कर्णावतंसादिपदे कर्णादिशब्दोपादानं सन्निधानादिज्ञानार्थं क्रियत इत्यर्थः । कर्णादिशब्दानां वैयर्थ्यपूर्वकं सार्थकत्वमाह **अवतंसेति** । हृक्स्थितेष्ववतंसादिशब्दप्रयोगात् कर्णादाववस्थानप्रतिपत्त्यर्थं कर्णादिशब्दप्रयोग इत्यर्थः । उदाहरति **अस्या इति** । अस्याः कामिन्याः कर्णावतंसेन सर्वभूषणं जितम् । तथैव अस्याः श्रवणकुण्डले शोभने । अपूर्वो यो मधुरामोदः तेन प्रमोदिता दिशो यैः भृङ्गैः मधुराः शिरःशेखरशालिनः पुरुषा आगताः । एतेषु कर्णादिशब्दप्रयोजनमाह **अत्रेति** ।

**सारबोधिनी**—दोषान्निरूप्य तेषां क्वचिददोषत्वं क्वचित् गुणत्वं क्वचिदनुभयत्वञ्च निरूपयति **कर्णावतंसादीत्यादि** । सान्निध्यादर्थदोषाणां तेष्वपि पौनरुक्त्यस्य स्फुटतया प्रथमं तस्यैव तन्निरूपितवानिति बोध्यम् । ध्वनिः शब्दः । निर्मितिरुपादानम् । **कर्णादिस्थितीति** । एवञ्चावस्थितिप्रतिपत्तिप्रयोजनहेतुत्वान्न पुनरुक्तत्वमिति भावः । पुनरुक्तत्वलक्षणे प्रयोजनं विनेत्यस्य विशेषणस्यादानादिति । तदुदाहरति **अस्या इति** । तत्रावतंसस्य कर्णस्थित्यवस्था कर्णपदेनावगम्यते । ततो वर्णनीयोत्कर्षः स्वतो न भूषणान्तरहेतुत्वम् अपि तु तत्कर्णसंबन्धेनेति पर्यवसानात् । शब्दान्तरेऽप्युदाहरति **अपूर्वेति** । **अत्रेति** । क्रमेणोदाहरणेष्वित्यर्थः । अन्यथा स्वाम्यमात्रप्रतीतेर्न तदलङ्कृतत्वप्रतीतिरिति भावः ।

विदीर्णाभिमुखारातिकराले संगरान्तरे ।

धनुर्ज्याकिणचिह्नेन दोष्णा विस्फुरितं तव ।।२८८ ।।

अत्र धनुःशब्द आरुढत्वावगतये । अन्यत्र तु

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण ।

कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमा प्रसादात् ।। २८९ ।।

इत्यत्र केवलो ज्याशब्दः ।

**बालचित्तानुरञ्जनी**—सन्निधानादीत्यादिशब्दार्थं वदन् उदाहरणान्तरमाह **विदीर्णेति** । विक्षताभिमुखविपक्षभयङ्करे युद्धमध्ये हे राजन् ! तव धनुर्ज्याघातचिह्नेन बाहुना विस्फुरिते धनुषि आरोपिता ज्या । ज्यामात्रमिति प्रतिपत्त्यर्थं धनुर्ग्रहणमित्याह **अत्रेति** । आरूढत्वावगतिरहितं स्थलमुदाहरति **अन्यत्रेति** । ज्याबन्धनिश्चलभुजेन विनिःश्वसद्वक्त्रपरम्परेण निर्जितलङ्केश्वरेण [?] यस्य कार्तवीर्यस्य बन्दीगृहे प्रसादपर्यन्तं स्थितम् । अत्र आरुढत्वात् गतिप्रयोजनाभावात् केवलज्याशब्दप्रयोग इत्याह **इतीति** ।

**सारबोधिनी**—**विदीर्णेति** । किणः प्ररूढव्रणलिङ्गम् । **अत्रेति** । एतदपि किणस्य प्रहारजनितत्वप्रतीतय इत्यर्थः । अथ यत्र तथा प्रतीतिर्नोद्दे श्या तत्र न तथेत्याह **ज्याबन्धेति** ।

प्राणेश्वरपरिष्वङ्गविभ्रमप्रतिपत्तिभिः ।

मुक्ताहारेण लसता हसतीव स्तनद्वयम् ।। २९० ।।

अत्र मुक्तानामन्यरत्नामिश्रितत्वबोधनाय मुक्ताशब्दः ।

**बालचित्तानुरञ्जनी**—उदाहरणान्तरमाह **प्राणेति** । मतद्वयं कर्तृ प्राणेश्वरालिङ्गनविलासप्रतिपत्तिभिः स्फुरता मुक्ताहारेण हसतीव । अत्र हारेणेत्युच्यमाने अन्यैः पद्मरागादिभिः मिश्रितत्वशङ्का स्यात् ततश्च हसतीव स्तनद्वयमित्यसङ्गतं स्यात् तद्व्यावृत्त्यर्थं मुक्ताशब्द इत्याह **अत्रेति** ।

**सारबोधिनी**—**प्राणेश्वरेति** । विभ्रमो विलासः । **अत्रेति** । तेन हारपदस्य मुक्तासन्दर्भशक्तत्वेऽपि न पुनरुक्तत्वमिति भावः । **अन्येति** । तदप्युत्प्रेक्षायामुपयोगीति द्रष्टव्यम् ।

सौन्दर्यसम्पत् तारुण्यं यस्यास्ते ते च विभ्रमाः ।

षट्पदान् पुष्पमालेव कान् नाकर्षति सा सखे ।। २९१ ।।

अत्रोत्कृष्टपुष्पविषये पुष्पशब्दः । निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते ।

**बालचित्तानुरञ्जनी**—उदाहरणान्तरमाह **सौन्दर्येति** । हे सखे यस्याः सौन्दर्यसम्पत् तारुण्यं तेनेव विभ्रमाः सा सुन्दरा पुष्पमाला षट्पदान् विकासार्थं कर्षन्ति । अत्र मालेत्युच्यमाने पुष्पमात्रमालाशङ्का स्यात् तदर्थं पुष्पग्रहणमित्याह **अत्रेति** । ननु मालाशब्दोऽन्यत्रापि वर्तते, रत्नमाला शब्दमालेति

प्रयोगदर्शनादित्यत आह **निरुपपदेति** । मालाशब्दः पुष्प एव मुख्यः । अन्यत्र त्वौपचारिक इति भावः । एवं करिकलभशब्दे करिशब्दस्ताद्रूप्यस्य प्रतिपत्तय इति द्रष्टव्यम् ।

**सारबोधिनी—ते ते चेति** । प्रसिद्धा इत्यर्थः । **अत्रेति** । अतो न पुनरुक्तत्वम् । लक्षणया उत्कृष्टप्रतिपादकत्वादिति भावः । ननु मालाशब्दस्य न पुष्पस्रङ्मात्रशक्तत्वं, रत्नमालेति प्रयोगात् । अत आह **निरुपपदो हीति** ।

**स्थितेष्वेतत्समर्थनम्** ॥५८ ॥

न खलु कर्णावतंसादिवज्जघनकाञ्चीत्यादि क्रियते ।

जगाद मधुरां वाचं विशदाक्षरशालिनीम् ॥ २६२ ॥

इत्यादौ क्रियाविशेषणत्वेऽपि विवक्षितार्थप्रतीतिसिद्धौ "गतार्थस्यापि विशेष्यस्य विशेषणदानार्थं क्वचित् प्रयोगः कार्यः" इति न युक्तम् ।

**बालचित्तानुरञ्जनी**—चतुर्थपादमुपादाय व्याकरोति **स्थितेष्विति** । महाकविप्रयुक्तेष्वेव एतत् समर्थनं कृतं न सर्वत्र तदेवाह **न खल्विति** । वामनालङ्कारेणोक्तं दूषयति **जगादेति** । जगादेत्यनेन गतार्थस्यापि वाचमिति विशेष्यस्य मधुरां विशदाक्षरशालिनीमित्यादि विशेषणादानार्थं प्रयोगः कर्तव्य इति वामनालङ्कारेणोक्तं तदसङ्गतं विशेष्यपदव्यतिरेकेणापि क्रियाविशेषणत्वे विवक्षितार्थप्रतीति-सिद्धेरित्यर्थः ।

**सारबोधिनी**—नन्वेवं जघनकाञ्च्यादिप्रयोगप्रसङ्ग इत्यत आह **स्थितेष्विति** । स्थितत्वमनादिप्रयोगविषयत्वम् । वामनेन जगादेत्यत्र प्राप्तस्यापि विशेष्यस्य विशेषणदानार्थमुपादानमुचितमन्यथाऽनन्वयादित्युक्तम् । तदुदाहरणं निराकरोति **जगादेत्यादि** । न युक्तमुक्तमित्यन्तेन तत्र क्रियाविशेषणत्वेनैव विवक्षितार्थप्रतिपत्तेरित्यर्थः ।

युक्तत्वे वा

चरणत्रपरित्राणरहिताभ्यामपि द्रुतम् ।
पादाभ्यां दूरमध्वानं व्रजन्नेष न खिद्यते ॥२६३॥

इत्युदाहार्यम् ।

**ख्यातेऽर्थे निर्हेतोरदुष्टता**

यथा

चन्द्रं गता पद्मगुणान्न भुङ्क्ते पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥२६४॥

अत्र रात्रौ पद्मस्य संकोचः, दिवा चन्द्रमसश्च निष्प्रभत्वं **लोकप्रसिद्धमिति 'न** भुङ्क्ते' इति हेतुं नापेक्षते ।

**बालचित्तानुरञ्जनी**—विशेषणार्थं विशेष्यप्रयोगाङ्गीकारेऽपि जगादेत्याद्युदाहरणं न भवति किन्तु उदाहरणान्तरं वाच्यमित्याह **युक्तत्वे वेति** । चरणमात्रेण यत् परित्राणं तद्रहिताभ्यामपि पादाभ्यां दूरमार्गं गच्छन्नपि न खिद्यते खेदं न प्राप्नोति । अत्र पादव्यतिरेकेण वाहनादिनापि मार्गगमनस्य संभावितत्वात् अस्थानं व्रजन्नित्युक्तत्वेऽपि भूयः पद्भ्यामिति वक्तव्यम् । तद्विशेषणार्थं चरणत्रेत्यादि वक्तव्यम् । न च पूर्ववदत्रापि क्रियाविशेषणमिति वाच्यम् । वाहनादिना गमनसंभवेन उक्तार्थस्याप्रतीतेः । अत एतदेवोदाहार्यं न तु जगादेत्यर्थः ।

इदानीं निर्हेतोरदुष्टत्वमुदाहरति **ख्यात इति** । चञ्चला लक्ष्मीः चन्द्रं गता सती पद्मगुणान् न भुङ्क्ते । पद्माश्रिता सती चन्द्रसम्बन्धिनीं शोभां न भुङ्क्ते । उमामुखं प्रतिपद्य तु द्विसंश्रयां प्रीतिमवाप । अत्र चन्द्रं गता पद्मगुणान्न भुङ्क्त इत्येतत् रात्रौ पद्मस्य सङ्कोचादित्यादि हेतुं नापेक्षते । पद्माश्रिता चान्द्रमसीमभिख्यां न भुङ्क्ते इत्येतदपि दिवा शशाङ्कस्य निःप्रभत्वादित्यादि हेतुं नापेक्षते, लोकप्रसिद्धत्वात् । अतो न दोष इत्याह **अत्रे**ति ।

**सारबोधिनी**--यत्र विशेषणत्वं न योग्यं, स्वयं तदुदाहरति **चरणेति** । चरणं त्रायत इति चरणत्रं उपानत् । तेन यत् परित्राणं तद्रहिताभ्यामित्यर्थः । अत्र गतेः क्रियायाश्चरणत्रपरित्राणासंभवेन पादपदोपादानमावश्यकमिति पादपदस्य न गतार्थत्वम् । ख्याते प्रसिद्धे । **चन्द्रमिति** । अभिख्यां शोभाम् । अत्र विनापि हेतूपादानं प्रतिपत्तेर्निराकाङ्क्षत्वादिति भावः ।

**अनुकरणे तु सर्वेषाम्**

सर्वेषां श्रुतिकटुप्रभृतीनां दोषाणाम् । यथा

मृगचक्षुषमद्राक्षमित्यादि कथयत्ययम् ।
पश्यैष च गवित्याह सुत्रामाण यजेति च ॥२८५॥

**वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित्क्वचिन्नोभौ ॥ ५६॥**

वक्तृप्रतिपाद्यव्यङ्ग्यवाच्यप्रकरणादीनां महिम्ना दोषोऽपि क्वचिद् गुणः, क्वचिन्न दोषो न गुणः । तत्र वैयाकरणादौ वक्तरि प्रतिपाद्ये च रौद्रादौ च रसे व्यङ्ग्ये कष्टत्वं गुणः ।

**बालचित्तानुरञ्जनी**—इदानीं सर्वेषां दोषाणामदोषत्वनिबन्धनमाह **अनुकरण इति** । सर्वेषामदुष्टतेत्यनुषज्यते । अनुकरणं नाम शब्दस्य ताद्रूप्येणाभिधानम् मृगवच्चक्षुर्यस्यास्तां अद्राक्षमित्येव कथयति ।

एष गवित्याह पश्य सुत्रामाणं इत्याह । अत्र अद्राक्षमिति श्रुतिकटुः । गौरिति वक्तव्ये गवित्यविभक्तिक-निर्देशात् च्युतसंस्कृतिः । सुत्रामाणमिति अप्रयुक्तम् आत्मनेपदस्य प्रयोज्यत्वात् । यजेतेत्यत्रापि च्युत-संस्कृतिः । एतेषामनुकरणतया न दोषत्वमित्यर्थः । इदानीं व्यक्तिविशेषनिष्ठतया यथायोगं दोषाणामदो-दोषत्वमाह **वक्त्रादीति** । आदिशब्दार्थं कथयन् पद्यैकदेशं व्याकरोति । वक्तरि दोषस्य गुणत्वं कुत्रेत्याकाङ्क्षायामाह **तत्रे ति** ।

**सारबोधिनी–सर्वेषामिति** । व्यवहितदोषाणामनुवृत्तये । तदाह **श्रुतिकटुप्रभृतीनामिति** । श्रुति-कटुत्वस्य । गविति च्युतसंस्कृतेः । सुत्रामेति वा प्रयुक्तस्यापवादः । ननु श्रुतिकटुप्रभृतीनामनुकार्यानुकरणेऽपि स्वरूपानपायात् कथमदोषतेति चेन्न । अनुकरणे विरोधिगुणव्यञ्जकस्यापि तच्छब्दस्वरूपस्यैव प्रतिपा-द्यत्वेन न दोषत्वम् । तत्र तदौचित्यात् । अन्यथा तस्य वक्तुमशक्यत्वात् । **गुण इति** । गुणत्वञ्च प्रकृत-रसस्य तेन रूपेणोत्कर्षणात् । **नोभाविति** । विवृणोति **क्वचिदिति** । उत्कर्षापकर्षविरहादनुभयरूपता । तेन गुणाभावस्य दोषत्वं दोषाभावस्य वा गुणत्वं निरस्तम्, विनिगमकाभावात् । अभावस्य तारतम्यानुप-पत्तेश्च । वैयाकरणादावित्यादिपदात् क्रुद्धादिपरिग्रहः । रौद्रादावित्यत्रादिपदात् वीरबीभत्सपरिग्रहः । कष्टत्वं विलम्बेनार्थप्रतीतिजनकत्वम् । श्रुतिकटुत्वञ्च ।

क्रमेणोदाहरणम्

दीधीङ्वेवीङ्समः कश्चिद्गुणवृद्ध्योरभाजनम् ।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते ।।२९६।।

यदा त्वामहमद्राक्षं पदविद्याविशारदम् ।
उपाध्यायं तदास्मार्षं समस्प्राक्षं च सम्मदम् ।।२९७।।

**बालचित्तानुरञ्जनी**—कश्चिन्मन्दभाग्यः दीधीवेव्योर्धातोः समः समानः यतः गुणवृद्ध्योर-भाजनम् । यथा दीधीङ् दीप्तिदेवनयोः, वेवीङ् वेतिनातुल्ये इति पठितौ धातू । अदेङ्लक्षणस्य गुणस्य, आदेच्लक्षणायाः वृद्धेश्च पात्रं न स्तः दीधीवेवीटामिति सूत्रात्, तथा अयमपि गुणस्य औदार्यादेः वृद्धेः संपल्लक्षणायाश्च अभाजनम् । अतस्तत्सदृश इत्यर्थः । कश्चिद्दुर्जनः क्विप्प्रत्ययसदृशः यत्र सन्निहिते सति गुणवृद्धी न स्तः । यथा क्विप्प्रत्ययसन्निधानात् प्रकृतेः गुणवृद्धी न स्तः । क्ङिति चेति प्रतिषेधात्, तथा दुर्जनसंयोगात् अन्यस्यापि गुणवृद्धी न भवत इत्यर्थः । अत्र कष्टत्वं गुणो न दोषः वैयाकरणस्य वक्तृत्वात् । वक्तरि वैयाकरणे उदाहरणमभिधाय प्रतिपाद्ये वैयाकरणे उदाहरणमाह **यदेति** । वैयाकरणं पदविद्या-विशारदं त्वां यदा अद्राक्षं तथा उपाध्यायं अस्मार्षम् । सम्मदं अस्प्राक्षम् । अत्र श्रुतिकटुत्वं गुणो न दोषः वैयाकरणस्य प्रतिपाद्यत्वात् इत्यर्थः ।

**सारबोधिनी––दीधीङीत्यादि** । गुणः पाण्डित्यादिः, इकारादीनामेत्वादिश्च । वृद्धिः संपत्, इकारादीनामैत्वादिश्च । क्विप्प्रत्ययनिभ इति सर्वाकारेण प्राप्तलोप इत्यर्थः । ते गुणवृद्धी । अत्र वैयाकरणो वक्ता । ततोऽतिशयेन वैयाकरणत्वप्रतीतेर्गुणत्वम् । **यदा त्वामिति** । अत्र वैयाकरणे प्रतिपाद्ये गुणत्वम् । तेन तस्य प्रीत्यतिशयात् । व्यङ्ग्यमहिम्नोऽयं पन्थाः ।

अन्त्रप्रोतबृहत्कपालनलकक्रूरक्वणत्कङ्कण-
प्रायप्रेङ्खितभूरिभूषणरवैराघोषयन्त्यम्बरम् ।
पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्लसद्
व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति ॥२९८॥

वाच्यवशाद्यथा

मातङ्गाः किमु वल्गितैः किमफलैराडम्बरैर्जम्बुकाः
सारङ्गा महिषा मदं व्रजथ किं शून्येषु शूरा न के ।
कोपाटोपसमुद्भटोत्कटसटाकोटेरिभारेः पुरः
सिन्धुध्वानिनि हुङ्कृते स्फुरति यत् तद्गर्जितं गर्जितम् ॥२९९॥

अत्र सिंहे वाच्ये परुषाः शब्दाः ।

**बालचित्तानुरञ्जनी**--व्यङ्ग्यवशाद्दोषस्यादोषत्वमुदाहरति **अन्त्रेति** । ताडका अन्त्रैः प्रथितानि कपालानि, तान्येव क्रूरं यथा तथा क्वणत्कङ्कणप्रायाणि भूषणानि, तेषां शब्दैः आकाशं घोषयन्ती पूर्वं पश्चाच्छर्दितं यद्रक्तं तदेव कर्दमः, तेन घनः सान्द्रः प्राग्भारः उत्तरकायः, तत्र घोरं यथा तथा उन्नतं तौ व्यालोलौ यौ, तयोर्भारेण भैरवं वपुर्यस्याः, एतादृशी सती दर्पोद्धतं यथा स्यात्तथा धावति । अत्र श्रुति-कटुत्वादिर्गुणो न दोषः, रौद्ररसस्य व्यङ्ग्यत्वादित्यर्थः ।

वाच्यवशाददोषत्वमुदाहरति **वाच्येति** । हे मातङ्गाः ! वृद्धिं गतैः किम् ? हे जम्बुकाः अफलैः आडम्बरैः किम् ? हे सारङ्गाः हे महिषाः किं मदं व्रजथ ? शून्ये स्थाने के न शूराः ? अथेति प्रश्ने । सर्वेऽपि शूरा इत्यर्थः । क्रोधसंभ्रमसमुत्थितस्कन्धकेसरपङ्क्तेः सत्वारेः सिंहस्य सिन्धुवत् शब्दं कुर्वति हुङ्कृते स्फुरति सति यत् गर्जितं तदेव गर्जितम्, नान्यत् इत्यर्थः । अत्र वाच्यः सिंहसत्त्वोत्कर्षादुक्तसाहशाली वीररौद्रादिरसोचित इति परूषा अपि शब्दाः प्रयुक्ता इति न दोष इत्याह **अत्रेति** ।

**सारबोधिनी**--**अन्त्रेति** । प्रोतं ग्रथितं, नलकं जङ्घास्थि तान्येव क्रूरं यथा स्यात्तथा क्वणत्-कङ्कणानि तत्प्रायाणि बहुलानि प्रेङ्खितभूषणानि तेषां रवैः शब्दैः छर्दितं वान्तम् । घनोऽविरलः, प्राग्भारः क्षरणं धारा वा । अत्रोद्भटा वर्णा ओजो व्यञ्जयन्तः प्रकृते रौद्रबीभत्सयोरानुगुण्यमादधते । **मातङ्गा इति** । आडम्बरैः । द्वितीयगर्जितपदं सफलत्वपरम् । अत्र सिंहे ओजस्विनि वर्णनीये तन्निष्ठौजः-प्रकाशकाः, दीर्घसमासो विकटवर्णाश्च गुणः ।

प्रकरणवशाद्यथा

रक्ताशोक कृशोदरी क्व नु गता त्यक्त्वानुरक्तं जनं
नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः ।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छद-
स्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ॥३००॥

अत्र शिरोधूननेन कुपितस्य वचसि ।

**बालचित्तानुरञ्जनी**—प्रकरणवशात् अदोषत्वमुदाहरति **प्रकरणेति**। हे रक्ताशोक, सा कृशोदरी **अनुरक्तं जनं** त्यक्त्वा क्व नु गता नो, दृष्टा इति वायुकम्पितं शिरः किं वृथैव चालयसि ? उत्कण्ठा-घटमाना ये भ्रमराः तेषां यः समूहः तत्संघट्टनेन दष्टानि पत्राणि यस्य, एवंविधः भवतः पुष्पोद्गमः तत्पादाहतिमन्तरेण कुतः स्यात् ? अत्र प्रकृतेन रक्ताशोककर्तृकेण शिरोविधूननेन कुसुमितस्य कस्यचिद्रागोन्मत्तस्य वचसि "उत्कण्ठाघटमान" इत्यादौ श्रुतिकटुशब्दप्रयोगो गुणः, न दोष इत्याह **अत्रेति**।

**सारबोधिनी**—**रक्ताशोकेति**। रक्तः शोणोऽनुरक्तश्च । अशोको वृक्षविशेषः शोकापनोदकश्च । संघट्टो गाढमेलनम् । अत्र प्रकरणगम्यविप्रलम्भानौचित्येऽपि प्रस्तुतशिरोधूननप्रतिपादितदर्शनापलाप-प्रादुर्भूतक्रोधप्रकर्षकत्वेन दीर्घसमासविकटवर्णयोर्गुणत्वम् तेनोन्मत्तपुरूरवसोऽङ्गस्य क्रोधस्य प्रकर्षकत्वा-दङ्गिनो विप्रलम्भस्यापि प्रकर्षः। नन्वत्र कोपस्य व्यङ्ग्यत्वात् व्यङ्ग्यौचित्यमेवेति चेत् न, वक्त्राद्यौ-चित्याद् व्यतिरिक्तस्थानीयस्य व्यङ्ग्यस्य व्यङ्ग्यपदेन विवक्षणात् गोवृषन्यायात् ।

क्वचिन्नीरसे न गुणो न दोषः । यथा

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥३०१॥

अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टौ । यथा

येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गां च योऽधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः ॥३०२॥

अत्र माधवपक्षे शशिमदन्धकक्षयशब्दावप्रयुक्तनिहतार्थौ ।

**बालचित्तानुरञ्जनी**—दोषोऽपि क्वचिद्गुण इत्युदाहृत्य क्वचिन्न दोषो न गुण इत्युदाहरति **क्वचिदिति** । तस्य सूर्यस्य किरणाः वः शीघ्रं दुरितविघातं कुर्वन्तु । **तस्येति** । कस्य एष, असहायो यः पापसमूहैः विदीर्णान् ग्रस्तान् व्रणयुक्तैः शरीरैः उपलक्षितान् घर्घराप्रकटशब्दान् दीर्घश्वासान् पुरुषान् उल्लाघयन् व्याधिविनिर्मोकं कुर्वन् घटयति, पुनः समीचीनान् करोति । किंविशिष्टस्य तस्यान्तर्मध्ये द्विगुणा [घना या घृणा कृपा] तदायत्ता विघ्नरहिता वृत्तिर्यस्य । कीदृशाः किरणाः, सिद्धसमूहैः दत्तार्घाः । अत्र रसरहितत्वात् शब्दपारुष्यं गुणदोषकक्षामतिक्रम्य ताटस्थ्येन वर्तत इति **न गुणो न** दोष इत्यर्थः । अप्रयुक्तनिहतार्थयोरदोषत्वमुदाहरति **अप्रयुक्तेति** । उमायाः धवः पतिरीश्वरः तत्पक्षे [ध्वस्त-]कामेन येन बलिजितो विष्णोः कायः पुरा त्रिपुरविजयसमयेऽस्त्रीकृतः । उद्वृत्ताः भुजङ्गाः हारवलया यस्य । गङ्गां चयः अधारयत् । अमराः यस्य शिरः शशिमदाहुः । हर इति स्तुत्यं नाम चाहुः । अन्धकासुर-क्षयकरः ईदृशः उमापतिः त्वां त्रायात् । अथ माधवपक्षे सर्वदा समस्ताभिलाषदायी माधवो मुकुन्दः पायात् । परमार्थतः अभवेन जन्मरहितेन येन माधवेन अनः शकटं ध्वस्तं अग्रपादेन क्षिप्तम्, बलिजित बलिनो दानवान् जितवान् कायः स्वशरीरं पुरा अमृतमथनवेलायां स्त्रीकृतः नारीकृतः । अमृतापहारिणो दानवान् स्त्रीरूपो भगवान् व्यामोहयामासेति प्रसिद्धिः । यश्च उद्वृत्तस्य भुजङ्गस्य कालियरूपस्य हारवः हाहेति दीनः शब्दः स एव लयः कालावच्छेदो यस्य, अगं गोवर्धनं गां भूमिं अम्बुधिमग्नां चाधारयत् । यस्य नाम अमराः शशिनं मथ्नातीति शशिमदाहुः तस्य शिरो हतवान् शशिमच्छिरोहर इति स्तुत्यमाहुः । अन्धकानां यादवविशेषाणां क्षयकरः । अत्र माधवपक्षे शशिमदिति राहौ अप्रयुक्तः । अन्धकक्षयशब्दो निहतार्थः । अन्धकशब्दस्य यादवेभ्योऽपि दैत्यविशेषे, क्षयशब्दस्य निवासादपि विनाशे प्रसिद्धिबाहुल्यात् । तथापि श्लेषालङ्काराय गृहीतत्वादनयोरदुष्टत्वमित्याह **अत्रेति** ।

**सारबोधिनी**—नीरसे शृङ्गारादिरसशून्ये, न तु निरास्वादे, तत्र काव्यताविरहात् । **क्वचिन्न** दोषत्वं न गुणत्वम् । यत्र न रसः न वा वक्त्राद्यौचित्यम्, तत्र न गुणः, न दोषः । शीर्णघ्राणेत्यादौ विकटा ओजोव्यञ्जकास्ते च शृङ्गारवीरादिरसानामेकस्याप्यभावान्नापकर्षोत्कर्षकाः प्रकृतस्यास्वाद्यस्य भावस्य माधुर्यौजसोरभावादकिंचित्कराः । नन्वत्रापि दयावीरत्वेन सरसत्वम् ओजस्विनि सूर्ये वाच्ये "सिन्धुध्वानिनी"तिवत् वाच्यौचित्यमस्तीति चेन्न । अनुप्रासमात्रलग्नकत्वेन कवेस्तत्र तथा तात्पर्याभावात् दयावीरस्य ग्रन्थकृतानङ्गीकृतत्वाच्च । न चानुप्राससंपादकत्वेनैव गुणत्वम्, "सोध्यैष्ट वेदानि"त्यत्रापि तथा प्रसङ्गात् । **शीर्णेत्यादि** । उल्लाघयन् नीरोगान् कुर्वन् । द्विगुणा अतिशयिता घृणा कृपा तन्निघ्ना तदायत्ता निर्विघ्ना निरपवादा वृत्तिर्यस्य । घर्मांशोः सूर्यस्य घृणयो रश्मयः अघं पापं तद्विघ्नान्तं विदधतु इत्यन्वयः । श्लेषादावित्यादिपदात् यमकादिपरिग्रहः ।

**येनेति ।** स माधवः पायात् येनानः शकटं ध्वस्तम् । अभवेन जन्मरहितेन बलिमसुरभेदं जयतीति बलिजित् कायः पूर्वं स्त्रीकृतो नारीकृतः । असुराणाममृतपाननिरासाय उद्वृत्तो भुजङ्गः कालियस्तं हतवान् । औद्धत्यस्य विशेषणस्य हननद्वारा । आरवे शब्दब्रह्मणि लयो यस्य, अगं पर्वतं गोवर्द्धनाख्यं, गां पृथिवीं योऽधारयत् । तथा अन्धकादयस्तेषां क्षयं विनाशं कृतवान् । सर्वं ददातीति सर्वदः । पक्षे उमाधवः शिवः, सर्वदा सर्वकालेन । ध्वस्तकामेन बलिजितः श्रीकृष्णस्य कायोऽस्त्रीकृतो बाणत्वमापादितस्त्रिपुरदाहे विष्णुः । भुजङ्ग एव हारो वलयं च यस्य गङ्गा जाह्नवी । यस्य शशिनं मथ्नातीति शशिमद्राहुस्तस्य शिरो हरतीति स्तुत्यं च नाम अमरा आहुः । अन्धकोऽसुरभेदः । क्षयो नाशः । **अत्रेति ।** अलङ्कारकृतचारुत्वनिर्वाहकत्वेन प्रतीतिमान्थर्यस्याप्यदूषणत्वात्तौ न दुष्टाविति बोध्यम् । "दधार हृदये गौरी देवं हिमकरालयम्" इत्यत्र श्लेषनिर्वाहकत्वेन हिकारस्य निरर्थकस्य गुणत्वमिति केचित् । [ तन्न युक्तम् श्लेषनिर्वाहप्रयोजनान्तरसत्त्वेन पादपूरणमात्रप्रयोजनकत्वस्वरूपाभावात् धर्मिसत्तायामेवोत्कर्षकत्वात् ]

अश्लीलं क्वचिद् गुणः । यथा सुरतारम्भगोष्ठ्याम् "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु" इति कामशास्त्रस्थितौ ।

करिहस्तेन संबाधे प्रविश्यान्तर्विलोडिते ।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते ॥३०३॥

शमकथासु

उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे ।
क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते ॥३०४॥

निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥३०५॥

अत्र भाव्यमङ्गलसूचकम् ।

**बालचित्तानुरञ्जनी**–अश्लीलस्यादुष्टत्वमुदाहरति **अश्लीलमिति ।** "तर्जन्यनामिके श्लिष्टे मध्यमा पृष्ठतस्तयोः । करिहस्त इति ख्यातः कामशास्त्रविचक्षणैः" इति लक्षणलक्षितेन करिहस्तेन संबाधे स्मरमन्दिरे विलोडिते सति पुंसो ध्वजः मेहनदण्डः साधनान्तर्विराजत इति सुरतारम्भोचितं वस्तु । तत्र द्व्यर्थैः उभयार्थैः गोपनीयमर्थं सूचयेदिति कामशास्त्रस्थितौ सत्यां 'यस्य ते विध्वजः केतुः संबाधे सैन्यसंमर्दे करिहस्तेन गजशुण्डया क्षोभे सति उपसर्पन् स्वपक्षं प्रत्यावर्तमानः साधनान्तर्बलमध्ये विराजत इत्यनेन वाक्येन क्रीडापरिहारार्थं व्यवधीयते । जुगुप्सादाय्यश्लीलं गुण इत्यर्थः । विरक्तकथायामप्युदाहरति **शमेति ।** उत्तानः वैपरीत्येन स्थितः उच्छूनश्चासौ मण्डूकश्च तस्य विदारितं यदुदरं तत्संनिभे क्लेदिनि स्त्रीव्रणे वराङ्गे अकृमेः कृमिव्यतिरिक्तस्य कस्य सक्तिः जायते न कस्यापि । शमकथात्वादश्लीलमपि गुण

एवेत्यर्थः । अमङ्गलस्य गुणत्वमुदाहरति **निर्वाणेति** । अरीणां प्रशमात् निर्वाणः शान्तः वैरमेव दहनो येषां ते पाण्डुतनयाः माधवेन सह नन्दन्तु । सभृत्याः कुरुराजसुताः दुर्योधनादयः रक्तै रनुरक्तैः प्रकर्षेण साधिता भूयैः, अथवा रक्ता अनुरक्ता प्रसाधिता भूयैः, निवृत्तकलहाः स्वस्था निर्व्याकुला भवन्तु । अत्र रक्तेन रुधिरेण प्रसाधिता अलङ्कृता भूयैः क्षतविग्रहाः शरीराणि येषां स्वस्थाः स्वर्गस्था इत्यमङ्गलं वस्तु । तस्य शत्रुविषये भविष्यदमङ्गलसूचकतया गुणत्वमित्याह **अत्रेति** ।

**सारबोधिनी**—असमर्थानुचितार्थनिरर्थकावाचकानां नित्यदोषत्वेन तानपहायाश्लीलप्रतिप्रसवमाह **सुरतेत्यादि** । सुरतारम्भाय गोष्ठी सुरतारम्भगोष्ठी । द्व्यर्थैरनेकार्थैः, पिशुनयेत् सूचयेत् । करिहस्तो गजशुण्डा कठिनयोनिशैथिल्यापादको बहिःकृतमध्यमाङ्गुलीकस्तर्जन्यनामिकासंयोगश्च । तदुक्तम्—

तर्जन्यनामिके युक्ते मध्यमा स्याद्बहिष्कृता ।
करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः ॥

संबाधे सङ्कटे सङ्कुचिते च विलोडिते चपलिते विकाशिते च, उपसर्पन् समीपे गच्छन् प्रविशंश्च ध्वजः केतुः पुल्लिगं च । साधनं सैन्यं वराङ्गं च कामशास्त्रमर्यादा च । शाब्ददोषत्वम्, उदासीनवचनया स्वार्थसंवृत्या रसोत्कर्षकतया च गुणत्वम् । जुगुप्सोदाहरणमाह **शमेति** । शमाय वैराग्याय कथा शमकथा । **उत्तानेति** । पाटितं विदारितं, इह वैराग्यहेतुघृणोत्पादनया गुणत्वम् । अमङ्गलप्रतिप्रसवमाह **निर्वाणेति** । प्रशमो युद्धसंरम्भनिवृत्तिर्मरणं च । रक्तानुरक्ता, रक्तं रुधिरं च । प्रसाधिताऽलङ्कृता वशीकृता च । विग्रहो युद्धं शरीरं च । स्वस्मिन् आत्मनि प्रकृतौ तिष्ठन्तीति स्वस्थाः स्वर्गगामिनश्च । अवैकल्पिकविसर्गलोपान्न वैरूप्यम् । **अत्रेति** । दुर्योधनामङ्गलस्य नायकमङ्गलत्वेन गुणत्वम् ।

संदिग्धमपि वाच्यमहिम्ना क्वचिन्नियतार्थप्रतीतिकृत्त्वेन व्याजस्तुतिपर्यवसायित्वे गुणः । यथा

पृथुकार्तस्वरपात्रं भूषितनिःशेषपरिजनं देव ।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥३०६॥

प्रतिपाद्यप्रतिपादकयोर्ज्ञत्वे सत्यप्रतीतं गुणः । यथा

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्ति देवं पुराणम् ॥३०७॥

**बालचित्तानुरञ्जनी**—सन्दिग्धस्यापि क्वचिदगुणत्वमुदाहरति **सन्दिग्धमिति** । वाच्यमहिम्ना अभिधेयप्रभावेन नियतस्य एककोटिकस्यार्थस्य प्रतिपत्तिं कृत्वैव, न कदाचिदकृत्वा तस्य वक्ष्यमाणव्याजस्तुति-

पर्यवसायित्व इत्यर्थः। हे नाथ, आवयोः सदनं सममिति यत् साम्यं तत् किं उभयोरैश्वर्यादाहोस्वित् दारिद्र्यादिति प्रमुखतः संदेहेऽपि, राजवेश्मनि ऐश्वर्यस्वभावे न दारिद्र्य नाथैश्वर्येण [?] दारिद्र्यस्वभावे ब्राह्मणवेश्मनि नैश्वर्यमिति निष्कर्षः। ततश्चेयं व्याजरूपा स्तुतिः, यत्र निन्दायां तात्पर्यम्। पृथूनि स्वर्णपात्रानि यत्र, अलङ्कृतः निःशेषः सर्वः परिजनो यत्र, लसन्तः ये करेणवः गजाः तैर्गहनमिति राजमन्दिरे, दरिद्रगृहे च पृथुकानां बालानां अर्थाद् बुभुक्षितानां आर्तस्वरस्य दीनध्वनेः स्थानम्, भुवि उषिताः शय्याद्यभावेन स्थण्डिलशायी निःशेषो मौलिमाल्यविरहितः परिजनो यत्र। वबयोरभेदात् बिले रन्ध्रे सीदन्तीति बिलसदो मूषकादयः, कुत्सायां कप्रत्ययः, तेषां रेणुभिः पांसुभिर्गहनम्। अथवा बिलेषु सत्का विद्यमाना रेणव इति तैः। अत्र सन्दिग्धस्यापि नियतकोटचर्थप्रतिपादनद्वारैव व्याजस्तुतिपर्यवसायित्वात् गुणत्वमेवेत्यर्थः।

अप्रतीतस्य गुणत्वमुदाहरति **यथेति**। अपरिमितानन्दसान्द्रे आत्मन्येव आरमन्ति क्रीडन्त इत्यात्मारामाः। भेदसंसर्गज्ञानं विकल्पः, तत्र ध्येयेन सह एकतापत्तिः समाधिः तत्र, विहितरतयः। ज्ञानस्याधिक्याद्विघटितास्तमसः अज्ञानाद् घना ग्रन्थयो यैः। सत्त्वगुणनिष्ठाः पुरुषाः, तमसां ज्योतिषां वा परस्तात् यंकं वीक्षन्ते, मोहान्धः अयं तममुं पुराणं देवं कथं वेत्ति। अत्र निर्विकल्पसमाधितमःसत्त्वादयः शब्दा योगशास्त्रप्रसिद्धत्वात् अप्रतीता अपि वक्तृबोद्धव्ययोर्व्युत्पन्नत्वाद्गुणा एवेत्यर्थः।

**सारबोधिनी—सन्दिग्धमिति**। सन्देह आपातत इति शेषः। कुत इत्यत आह **नियतेत्यादि**। नियतः प्रकृतोऽर्थः। प्रतिपत्तिर्निश्चयः। हेतुमाह **वाच्येति**। वाच्यो वर्णनीयो राजा, महिम्ना महिमप्रतिपत्त्या, न कविः, स्ववर्णनमभिप्रेत्य अकिञ्चित्करत्वात्। किन्तु राजवर्णनेन दैन्यनाशहेतुत्वात् इति। तर्हि दोषाभाव एवेत्यत आह **व्याजेति**। सम्प्रति बाहुल्येन राजोत्कर्षप्रतीतेर्गुणत्वमित्यर्थः।

ननु नृपतिविषयकभावस्यारसत्वे "शीर्णघ्राणे"त्यादाविवानुभयत्वप्राप्तौ कथं गुणत्वमिति चेन्मैवम्। भावस्य माधुर्यौजोरूपगुणविरहेण श्रुतिकटुप्रभृतीनां गुणव्यञ्जकानां तथात्वेऽपि व्याजस्तुतेरलङ्कारस्य भावोत्कर्षकत्वेन गुणत्वाविरोधात्। **पृथुकार्तेति**। पृथु विपुलं, कार्तस्वराणां सुवर्णानां पात्रं यत्र, पृथुकानां शिशूनां आर्तस्वराणां क्षुत्कातरध्वनीनामधिकरणं च। भूषिता अलङ्कृताः, भूम्यां धरण्यामुषिताश्च। विलसन्त्यः शोभमानाः करेणवो हस्तिन्यः, बिले छिद्रे सीदन्तीति बिलसत्का मूषकास्तेषां रेणुभिर्गहनं, यद्वा बिले सत्कं जलं रेणुश्च ताभ्यां गहनम्।

**प्रतिपाद्येति**। प्रतिपाद्यः शब्दप्रयोगोद्देश्यः, प्रतिपादको वक्ता, ज्ञत्वं तच्छास्त्रपटुत्वम्। **आत्मेति**। आत्मनि चिदानन्दे, आरमन्तीत्यारामाः, यद्वा आत्मैव आरामः क्रीडास्थानम्, येषां ते आत्मारामाः, आत्ममात्रावलम्बिनो निर्विकल्पः समाधिः। तमोग्रन्थिः मिथ्याज्ञानजन्यः संस्कारः। सत्त्वं गुणः तन्निष्ठास्तन्मात्रविश्रान्ताः। कमपि वागाद्यगोचरम्। कथं त एव पश्यन्तीत्यत आह **तमसामिति**। तमसां ज्योतिषां वा परस्तात् परतो वर्तमानं, रजस्तमोभिभूतैरलभ्यमित्यर्थः। अयं दुर्योधनः। अत्र प्रतिपाद्यप्रतिपादकौ सदैवाभिमतौ योगशास्त्रविज्ञाविति न प्रतीतिविलम्ब इत्यत्राप्रतीतं न दोषः। नन्वेवं दोषाभावत्वमेव कथं गुणत्वमिति चेन्न। इतराज्ञातशास्त्रत्वेन स्वज्ञानोत्कर्षद्वारा भावोत्कर्षकत्वात्।

स्वयं वा परामर्शे । यथा

षडधिकदशानडीचक्रमध्यस्थितात्मा हृदि विनिहितरूपः सिद्धिदस्तद्विदां यः ।
अविचलितमनोभिः साधकैर्मृग्यमाणः स जयति परिणद्धः शक्तिभिः शक्तिनाथः ॥३०८॥

अधमप्रकृत्युक्तिषु ग्राम्यो गुणः । यथा

फुल्लुक्करं कलमकूरणिहं वहन्ति जे सिन्धुवारविडवा मह वल्लहा दे ।
जे गालिदस्स महिसीदहिणो सरिच्छा दे किं च मुद्धविअइल्लपसूणपुञ्जा ॥३०९॥

अत्र कलमभक्तमहिषीदधिशब्दा ग्राम्या अपि विदूषकोक्तौ ।

**बालचित्तानुरञ्जनी**—सहृदयविमर्शवेलायां यदप्रतीतं तस्य गुणत्वमाह **यथेति** । षड्भिरधिकाः याः दश नाड्यः, षोडश नाड्य इत्यर्थः। तासां चक्रं मण्डलं पिण्डरूपं तस्य मध्यं हृदयं तत्र स्थितः अत एवात्मा आत्मभूतश्च । हृदि विशिष्टं निहितं रूपं ज्योतिरादिरूप आकारो येन । तं परमेश्वरं विदन्ति ये तेषां सिद्धिदः, सिद्धिं परापरमुक्तिरूपां ददातीति । निश्चलचित्तैः साधकैः अन्विष्यमाणः इच्छाज्ञानक्रिया-शक्तिभिः परिणद्धो व्याप्तः शक्तीनामिच्छादीनामेव नाथः प्रयोक्ता । "शक्तिश्च शक्तिमांश्चेति पदार्थद्वय-मुच्यते । शक्तयोऽस्य जगत्सर्वं शक्तिमांश्च महेश्वरः" इत्युक्तत्वात् । एवंविधो जयति । नाड्यश्च—

इडा च पिङ्गला चैव सुषुम्ना चापराजिता ।
गान्धारी हस्तिजिह्वा च पूषा चैव तथापरा ॥
अलम्बुसा कुहुश्चैव शङ्खिनी दशमी स्मृता ।
तालुजिह्वोऽभजिह्वा च विजया कामदापरा ॥
अमृता बहुला नाम नाड्यो वायुसमीरिताः ।

अत्र नाडीसिद्ध्यादिपदानामागममात्रप्रसिद्धानामपि स्वयं द्रष्टव्यतायां गुणत्वमित्यर्थः । नीचपात्रोक्तिषु ग्राम्यस्य गुणत्वमुदाहरति । जे सिन्धुवारविडवा ये सिन्धुवारविटपाः, कलमकूरणिहं कुसुमकूरं पुष्पोत्करं वहन्ति ते मह मम वल्लहा वल्लभाः ।किञ्च जे ये, गालिदस्स गलितस्य, महिसीदहिणो महिषीदध्नः, सरिच्छा सदृशाः । ते मुद्धविअइल्लपसूणपुञ्जा मुग्धविकसितप्रसूनपुञ्जाः, मम वल्लभाः । अत्र कलमभक्तादिशब्दानां ग्राम्यत्वेऽपि विदूषकेण नीचेन उक्तत्वाद् गुणत्वमेवेत्याह **अत्रेति** ।

**सारबोधिनी**—नाड्यः षोडश । तदुक्तम्

इडा च पिङ्गला चैव सुषुम्ना चापराजिता ।
गान्धारी हस्तजिह्वा च पूषा चैव तथापरा ॥
अलम्बुसा कुहुश्चैव शङ्खिनी दशमी स्मृता ।
तालुजिह्वेभजिह्वा च विजया कामदापरा ॥
अमृता बहुला नाम नाड्यो वायुसमीरिताः ।

तासां चक्रं मणिपूराख्यं तन्मध्ये स्थित आत्मा स्वरूपं यस्य तद्वति हृदि विनिहितरूपः। सिद्धिरणिमादिः। **अधमेति**। अधमोक्तिषु हास्यकरीषु ग्राम्योक्त्या हास्यपरिपोषाद्ग्राम्यस्य गुणत्वमित्यर्थः। **फुल्लेति**।

पुष्पोत्करं कलमभक्तनिभं वहन्ति ये सिन्धुवारविटपा मम वल्लभास्ते ।
ये गालितस्य महिषीदध्नः सदृक्षास्ते किं च मुग्धविचकिलप्रसूनपुञ्जाः ॥

**अत्रेति**। कलमेत्यादिप्राकृतविवरणम्। **विदूषकोक्ताविति**। गुण इति संबध्यते। हास्यरसपरिपोषकत्वादिति शेषः। "स पुनर्वेषभाषाभिर्हास्यकारी विदूषकः" इति तल्लक्षणात्। नेयार्थादीनां नित्यदोषतैव। अत्र केचित् यदि शीघ्रोपस्थितिस्तदा नेयार्थतापि गुणः। "काञ्चीगुणस्थानमनिन्दितायाः" इत्यादौ ग्राम्यस्य जघनपदस्य परिहारेण प्रयुक्तस्य तत्पदस्य कान्तिपोषकत्वात्। न चास्य यौगिकत्वम्, जघनत्वेन प्रतीतेः। एवं विरुद्धार्थविवक्षायां विरुद्धमतिकृतेऽपि गुणत्वमित्याहुः।

न्यूनपदं क्वचिद् गुणः। यथा

गाढालिङ्गनवामनीकृतकुचप्रोद्भूतरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम् ॥३१०॥

क्वचिन्न गुणो न दोषः। यथा

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ॥३११॥

अत्र पिहितेत्यतोऽनन्तरं "नैतद्यतः" इत्येतैर्न्यूनैः पदैर्विशेषबुद्धेरकरणान्न गुणः। उत्तरा प्रतिपत्तिः पूर्वां प्रतिपत्तिं बाधते, इति न दोषः।

**बालचित्तानुरञ्जनी**--क्वचिन्न्यूनपदस्य गुणत्वमुदाहरति **यथेति**। गाढालिङ्गनेन वामनीकृतौ कुचौ यस्याः सा चासौ च प्रोद्भूतः रोमोद्गमो यस्याः सा। सान्द्रो यः स्नेहरसः तस्य अतिरेकेण आधिक्येन विगलत्श्रीमत् नितम्बे अम्बरं यस्याः सा। हे मानद मा मा अति मा अलं मा इति क्षामाक्षरोल्लापिनी प्रियतमा सुप्ता किंनु, मृता किंनु, लीना विलीना नु किम्? शरीरभेदपक्षे आद्यं वितर्कद्वयम्। स्वापो बाह्येन्द्रियव्यापारव्युपरमः सर्वेन्द्रियपरिस्पन्दशून्यता मरणम्। शरीराभेदपक्षे उत्तरं वितर्कद्वयम्। लयः

शरीरैक्यं विलयः आत्मैक्यम्। अत्र मा मेत्यादिनिषेधमात्रवचने वेतेषु 'पीडय' 'आयासये'त्यादिक्रियोपादानाभावेन न्यूनत्वं गुण इत्यर्थः। अस्यैव क्वचिन्न दोषो न गुण इत्येतदुदाहरति। कस्यचिद्विरहिणः पुरूरवसो वा वचनम्। कोपवशात् प्रभावेन दिव्यया शक्त्या तिरोहिता सतीति यत् सा नायिका मह्यं दीर्घं न कुप्यति। स्वर्गायोत्पतिता भवेत्। अस्याः मनः पुनः भावार्द्रम् मे पुरोवर्तिनीं तां विबुधद्विषोऽपि हर्तुं न शक्ताः। एवंविधं मम त्वं नयनयोः अत्यन्तमगोचरं यातेति कोऽयं विधिः? कः प्रकारः? अत्र गुणाभावमाह **अत्रेति**। पिहितेतिशब्दादनन्तरं "नैतद्यतः" इति पदानि, तैर्न्यूनैरपि सद्भिर्न गुणः कश्चिदुत्पादितः, विशेषे विलक्षणे प्रमेयांशे बुद्धिप्रतिभानस्याकरणादित्यर्थः। दोषाभावमाह **उत्तरेति**। दीर्घं न कुप्यतीत्येवमादिका उत्तरा प्रतिपत्तिः तिष्ठेत्कोपेत्यादिकां पूर्वप्रतिपत्तिं बाधते। नैतद्यत इति पदं विना चिरकोपाभावकथनेनैव कुपिता सती तिरोभूतेत्येतद्व्याप्यत इति न दोष इति भावः।

**सारबोधिनी—गाढेत्यादि**। अत्र पीडयेति पदमनुपात्तं वक्त्र्या हर्षमोहातिशयं प्रतिपादयत् गुणतामापद्यते। अध्याहारेण वाक्यार्थप्रतीतिविलम्बेऽपि प्रकृतरसपरिपोषकत्वात् प्रयोजनवती लक्षणा वाश्रयणीयेति भावः। उक्तरूपा प्रिया मम मनसि सुप्ता वा, निश्चलत्वेन वर्तमानत्वात्। सुप्तस्य श्वासादिकमनुभूयत इत्यत आह **मृता नु किमिति**। मृतापि बहिरनुभूयत इत्यत आह **विलीना नु किमिति**। क्षीरनीरवदिति शेषः। **तिष्ठेदिति**। प्रभावोऽन्तर्धानकरणिका विद्या। विधिर्दैवम्। **न्यूनैरनुपात्तैः**। **विशेषबुद्धेरित्यादि**। अत्र वितर्काख्यभावस्य न्यूनैः पदैर्गाढालिङ्गनेत्यत्रेव प्रकर्षकत्वाभावात्। तदाह **उत्तरा प्रतिपत्तिरिति**।

अधिकपदं क्वचिद्गुणः। यथा

यद्वञ्चनाहितमतिर्बहु चाटुगर्भं कार्योन्मुखः खलजनः कृतकं ब्रवीति।
तत्साधवो न न विदन्ति विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न पारयन्ति ॥३१२॥

अत्र 'विदन्ति' इति द्वितीयमन्ययोगव्यवच्छेदपरम्। यथा वा

वद वद जितः स शत्रुर्न हतो जल्पंश्च तव तवास्मीति।
चित्रं चित्रमरोदीद्धा हेति परं मृते पुत्रे॥ ३१३ ॥

इत्येवमादौ हर्षभयादियुक्ते वक्तरि।

कथितपदं क्वचिद् गुणः, लाटानुप्रासे, अर्थान्तरसंक्रमितवाच्ये, विहितस्यानुवाद्यत्वे च।

क्रमेणोदाहरणम्

सितकरकररुचिरविभा विभाकराकार धरणिधर कीर्तिः।
पौरुषकमला कमला सापि तवैवास्ति नान्यस्य ॥३१४॥

ताला जाअंति गुणा जाला दे सहिअएहिँ घेप्पन्ति ।

रइकिरणाणुग्गहिआइँ होन्ति कमलाइँ कमलाइँ ॥३१५॥

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते ।

गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि सम्पदः ॥३१६॥

**बालचित्तानुरञ्जनी**—क्वचिदधिकपदस्य गुणत्वमुदाहरति **अधिकमिति**। वञ्चनायां विरचितबुद्धिः कार्योन्मुखः सन् दुर्जनः बहु प्रियवाग्गर्भं कृतकं यद्वचनं ब्रवीति साधवः तन्न विदन्तीति न, किन्तु विदन्ति। अस्य खलस्य वृथा स्नेहं कर्तुं न पारयन्ति। उपकारमेव कुर्वन्तीत्यर्थः। अत्र द्वितीयं विदन्तीति पदमधिकमपि अन्ययोगव्यवच्छेदार्थमभिहितमिति गुणः । तदभावे साधूनां खलवाक्यपरिज्ञानादवैदग्ध्यप्रसङ्ग इत्याशयेनाह **अत्रेति** ।

उदाहरणान्तरमाह **यथा वेति**। स शत्रुजितः। वद वद। तवास्मि तवास्मीति जल्पन् न हतः। चित्रं चित्रं, पुत्रे मृते सति हा हेति केवलं अरोदीत् । अत्र पादत्रयेण हर्षभयविस्मयशोकानां प्रत्यायकत्वेनाधिकमपि वदेत्यादिपदं गुण एवेत्याह **इतीति**।

कथितपदस्य गुणाभावे त्रीनुपाधीनाह **कथितमिति**।

**सारबोधिनी--यद्वञ्चनेति** । अस्य प्रणयं वृथा कर्तुं न पारयन्तीत्यन्वयः। **अत्र विदन्तीति**। न विदन्ति एवं नेति नञ्द्वयप्रयोगेणापि वेदनातिशये सिद्धे पुनर्विदन्तीति पदं त एव जानन्तीति विशेषलाभायेत्यर्थः। अत एव गुणत्वमिति वदन्ति। **इत्येवमादाविति**। अधिक- पदत्वं गुण इति शेषः। प्रथमे पादे हर्षस्य, द्वितीये भयस्य, चतुर्थे शोकस्य पोषणात् । अधिकपदत्वं गुणः। जतुकाष्ठवदिति शेषः । तदुक्तम् "विषादे विस्मये हर्षे दैन्ये कोपेऽवधारणे । प्रसादनेऽनुकम्पायां द्विस्त्रिरुक्तं न दुष्यति ॥" इति।

**सितकरेति** । सितकरस्य करवत् रुचिरा विभा यस्याः सा। तथा कीर्तिर्विशेषणम्। पौरुषमेवकमलमधिष्ठानं आश्रमः यस्याः सा कमला कमलवती। अर्श आदित्वादच् । तादृशी कीर्तिः, तादृशी च लक्ष्मीस्तवैवास्ति, नान्यस्येत्यन्वयः। अत्र लाटानुप्रासनिर्वाहणाद्गुणत्वम्।

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।

रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि ॥

अत्र द्वितीयकमलपदमाह्लादकत्वलक्ष्मीनिलयत्वादिधर्मान्तरे सङ्क्रमितवाच्यम् । तत्र कथितपदं तन्त्रमिति गुणः ।

**जितेन्द्रियत्वमिति**। गुणाधिके अधिकगुणे गुणैरधिके वेत्यर्थः। अत्र कारणमालायां पूर्वोक्तपदेनैव विनयादिकमुपादेयम् पदान्तरेणोपादाने भिन्नत्वेनावभासप्रसङ्गात् । तथा सत्युत्तरोत्तरं प्रति पूर्वपूर्वस्य हेतुता न प्रतीयेत। तथा च तत्सम्पादकतयाऽस्य गुणत्वम्।

पतत्प्रकर्षमपि क्वचिद्गुणः। यथा, उदाहृते प्रागप्राप्तेत्यादौ ॥३१७॥

समाप्तपुनरात्तं क्वचिन्न गुणो न दोषः। यत्र न विशेषणमात्रदानार्थं पुनर्ग्रहणम् अपि तु वाक्यान्तरमेव क्रियते। यथा, अत्रैव प्रागप्राप्तेत्यादौ ॥३१८॥

अपदस्थसमासं क्वचिद्गुणः। यथा, उदाहृते रक्ताशोकेत्यादौ ॥ १९॥

गर्भितं तथैव। यथा

हुमि अवहत्थिअरेहो णिरंकुसो अह विवेअरहिओ वि।
सिविणे वि तुमम्मि पुणो पत्तिहि भत्तिं ण पसुमरामि ॥३२०॥

अत्र प्रतीहीति मध्ये दृढप्रत्ययोत्पादनाय। एवमन्यदपि लक्ष्याल्लक्ष्यम्।

**सारबोधिनी--प्रागप्राप्तेति**। अत्र चतुर्थपादे गुरुस्मरणेन क्रोधाभावान्मसृणवर्णत्वमेवोचितमिति तस्यादोषत्वम्। विनयप्रकाशकत्वाच्च गुणत्वमिति। **यत्र न विशेषणेत्यादि**। विशेषणस्य विशेष्यसाकाङ्क्षतया विशेष्यपदावृत्तिनैयत्येन विलम्बेन विलम्बात् वा कथान्तरारम्भे पुनरङ्गाङ्गिभावेनाकाङ्क्षावैगुण्यविरहात्। अर्थान्तरैकवाचकादीनां नित्यदोषत्वेन तानपहायापदस्थसमासप्रतिप्रसवमाह **रक्ताशोकेति**। नन्वत्रापदस्थमेव कथं क्रोधप्रस्तावादिति चेन्न। यतो नो दृष्टेति क्रोधोक्तिस्तत्स्थानपरित्यागेन दीर्घसमासस्य तत्राकरणादस्थानगामिता। स्थानौचित्यविवेचनाभावेन क्रोधोन्मादपरिपुष्टिरितीदमुन्मत्तपुरवसो वाक्यम्। यदुक्तम्—

"अस्थानहास्यस्मितनृत्यगीतवागङ्गविक्षेपणरोदनानि" इति। वस्तुतः "शृङ्गारे टवर्गदीर्घसमासानौचित्यादस्थानस्थत्वमिति भास्करः।" केचित्तु, अभवन्मतयोगस्यापि क्वचिददुष्टता। यथा "हिरण्यपूर्वं कशिपुं प्रचक्षते" इत्यत्र। तथाहि, कशिपुपदस्य स्वार्थपरत्वे पुंस्त्वान्वयो न स्यात्। "कशिपु त्वन्नमाच्छादनं द्वयमि"ति नपुंसकानुशासनात्। शब्दपरत्वे तु प्रख्यानक्रियान्वयानुपपत्तिः, संज्ञिन एव संज्ञया व्यवह्रियमाणत्वात्। अदोषत्वं तु लक्षणया झटित्येव धर्मिप्रत्यायनात्। न च प्रयोजनाभावः। शब्दप्रसरस्यैव तत्त्वात् एवं च दशपूर्वरथमित्यादिष्वपीत्याहुः। **गर्भितमिति**। तथैव गुण एव। **भम्मीति**।

भवाम्यपहस्तितरेखो निरङ्कुशोऽथ विवेकरहितोऽपि।
स्वप्नेऽपि त्वयि पुनः प्रतीहि भक्तिं न प्रस्मरामि॥

तंतिमिति पाठे तांतिं चिन्तां, रेखा मर्यादा। कामं प्रति यौवनस्योक्तिरियम्। **अत्र प्रतीहीतीति**। प्रतीहीति सत्यप्रतीतिपरम्। तेन स्वोक्तेरमिथ्यात्वप्रतिपादनायात्र प्रतीहीत्यनेन शपथसमानशीलेन सुहृद्विषयदार्ढ्यावगमः। परत उपादाने तु प्राङ्मिथ्यात्वेन प्रतीतौ तस्याकिञ्चित्करत्वात्। प्रतीतत्वात्तस्य तदाह

**मध्य इति** । त्वमित्यस्य नियताध्याहारेण वाक्यत्वमक्षतम् । अत्र निराकाक्षतैव । एवं धन्यासीत्यत्र गर्भितस्य गुणत्वमविदग्धगोष्ठ्यां शपथेनैव प्रत्यायनात् । **एवमिति** । यथा—"पंथिअ ण एत्थ सत्थरमत्थि" इत्यादौ स्रस्तरव्याजेन स्रस्तरं संभोगं वा श्लिष्टशब्देन याचते, इति पथिकाभिप्रायसन्देहान्नायिकया तथैवोत्तरितमिति सन्देहस्य विवक्षायां च न दोषः । न च "ताएँ गुणग्गहणाएँ" इत्यादौ वचनप्रक्रमभङ्गस्य गुणत्वेन तत्प्रसवौचित्यमिति वाच्यम् । एकवचनेनैव प्रेमैकरूपत्वस्य व्यञ्जनात् । प्रक्रमभङ्गस्याकिञ्चित्करत्वात् । अन्यथा द्विवचनोपादानेऽपि तत्प्रसङ्गादिति ।

**व्यभिचारिरसस्थायिभावानां शब्दवाच्यता ।**
**कष्टकल्पनया व्यक्तिरनुभावविभावयोः ॥ ६०॥**
**प्रतिकूलविभावादिग्रहो दीप्तिः पुनः पुनः ।**
**अकाण्डे प्रथनच्छेदावङ्गस्याप्यतिविस्तृतिः ॥६१॥**
**अङ्गिनोऽननुसन्धानं प्रकृतीनां विपर्ययः ।**
**अनङ्गस्याभिधानं च रसे दोषाः स्युरीदृशाः ॥६२॥**

स्वशब्दोपादानं व्यभिचारिणो यथा

सव्रीडा दयितानने सकरुणा मातङ्गचर्माम्बरे
सत्रासा भुजगे सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि ।
सेर्ष्या जह्नुसुतावलोकनविधौ दीना कपालोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥३२१॥

अत्र व्रीडादीनाम् । 'व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि । मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपालोदरे'इत्यादि तु युक्तम् ।

**बालचित्तानुरञ्जनी**—इदानीं रसस्यैव दोषानुन्मेषयितुमुद्दिशति **व्यभिचारीति** । अत्र व्यभिचार्यादीनां त्रयाणां सामान्यतो विशेषतो वा स्वशब्दवाच्यत्वे त्रयो दोषाः । तत्राद्यमुदाहरति **सव्रीडेति** । कान्तमुखे सलज्जा गजचर्माम्बरे सकृपा सर्पे सभया अमृतस्राविणि चन्द्रे साश्चर्यरसा । विस्मयस्य स्थायित्वेऽपि चमत्कारकारित्वेन उपचारात् रसत्वम् गङ्गावलोकनविधौ सेर्ष्या कपालोदरे दीना नवसङ्गमप्रणयिनी पार्वत्या दृष्टिः वः शिवायास्तु । अत्र व्रीडाकरुणत्रासविस्मयेर्ष्यादीनां व्यभिचारिणां स्वशब्देनाभिधानाद्दोष इत्याह **अत्रेति** । अत्र यद्यपि करुणरसः विस्मयश्च स्थायी, तथापि प्राचुर्यं व्यभिचारिणामिति तदुदा-

हरणत्वव्यञ्जनानुकूलं पाठं परिवर्तयति **व्यानम्रेति**। अत्र कार्यमुखेन व्रीडादीनां प्रतिपादनमतिचमत्कारकारीति सहृदया एव प्रमाणम्।

**सारबोधिनी**—अथ साक्षाद्रसविरोधिनो दोषानाह **व्यभिचारीति**। व्यभिचारिणां स्वशब्दानुपादाने स्वैः स्वैरनुभावै भिव्यक्तौ भावध्वनित्वं स्यादिति भावः। अत एवोक्तम् "व्यभिचारी तथाञ्चित" इति। तथा रसपदेन रसस्योपादाने विभावादिभिरभिव्यक्तिं विना न चर्वणीयता निर्वहति। अत एवोक्तम् "व्यञ्जितश्चर्वणीय" इति। तथा स्थायिनोऽभिव्यक्तावेव रसतां प्राप्नुवन्ति न स्वस्वपदोपात्ताः। तदुक्तम्-"व्यक्तः" स तैरिति एतत्सर्वं व्यञ्जनावृत्तिमाहात्म्यम्। प्रमाणं तु सहृदयहृदयमेवेति ध्येयम्।

**सव्रीडेत्यादि**। नायकप्रथमदर्शनात् व्रीडा। मातङ्गचर्माम्बरदर्शनात् कारुण्यम्। **विभवाभावेन** शोकोदयात्। अम्बरवासिनः कुतोऽत्र संभव इति चन्द्रदर्शनात् विस्मयः। पत्युरन्यस्त्रीसङ्गदर्शनादीर्ष्या। **मणिस्थाने** कपालदर्शनाद्दैन्यम्। **अत्र व्रीडादीनामिति**। शब्दवाच्यत्वमिति शेषः। स्वशब्दानुपादाने अनुभावादिभिः प्रत्यायने तु भावध्वनिः स्यात्तदाह **व्यानम्रेति**।

रसस्य स्वशब्देन श्रृङ्गारादिशब्देन वा वाच्यत्वम्। क्रमेणोदाहरणम्

तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्।
नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः॥ ३२२॥

आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्तिम्।
पश्यैष बाल्यमतिवृत्य विवर्तमानः श्रृङ्गारसीमनि तरङ्गितमातनोति॥ ३२३॥

स्थायिनो यथा

संप्रहारे प्रहरणैः प्रहाराणां परस्परम्।
ठणत्कारैः श्रुतिगतैरुत्साहस्तस्य कोऽप्यभूत्॥ ३२४॥

अत्रोत्साहस्य।

कर्पूरधूलिधवलद्युतिपूरधौतदिङ्मण्डले शिशिररोचिषि तस्य यूनः।
लीलाशिरोंऽशुकनिवेशविशेषक्लृप्तिव्यक्तस्तनोन्नतिरभून्नयनावनौ सा॥३२५॥

अत्रोद्दीपनालम्बनरूपाः श्रृङ्गारयोग्या विभावा अनुभावपर्यवसायिनः स्थिता इति कष्टकल्पना।

**बालचित्तानुरञ्जनी**—द्वितीयमुदाहरति **रसस्येति** । ताम[नङ्ग]जयमङ्गललक्ष्मीं, ईषदुच्चं यद्भुजमूलं तत्र दृष्टां तां नेत्रयोः गोचरे कृते ।

**सारबोधिनी**—**तामनङ्गेति** । तां नेत्रयो गोचरे कृतवतोऽस्येत्यन्वयः । **उच्चेति** । उच्चभुजमूलेन लोकितामवलोकितामित्यर्थः । **आलोक्येति** । अनुरागस्तत्कार्यं पाण्डुता, अतिवृत्यातिक्रम्य वर्तमानः । पुलककटाक्षादिभिश्च्रेष्टमानस्तरङ्गितमविच्छेदारम्भम् । संप्रहारे युद्धे, प्रहरणैरस्त्रैः, प्रहाराणां ठणत्कारैः । **अत्रोत्साहस्येति** । शब्दवाच्यत्वमित्यनुषङ्गः । **कर्पूरेत्यादि** । शिशिररोचिषि चन्द्रे, अभूत्नयनावनौ सा दृष्टिपथमवतीर्णेत्यर्थः । **शृङ्गारयोग्या विभावा इति** । उद्दीपनविभावश्चन्द्रः, आलम्बनं नायिका । **अनुभावेति** । अनुभावाप्रतीत्यास्वादापर्यवसायिनः स्थिता इत्यर्थः । 'पर्यवसायिनः' इति पाठे 'कष्टेन' इति शेषः । न झटिति आक्षेपका इत्यर्थः । न च स्तनोन्नतिव्यञ्जनमेवानुभावः, तस्य दर्शनकार्यत्वेनाप्रतीतेः । वस्तुतो नायकनिष्ठ एव शृङ्गारो व्यञ्जनीयः । 'नयनावनौ सा' इत्यनेन तस्या एवालम्बनत्वेनावगतेः । न च नायकनिष्ठः कश्चिदनुभाव उपात्तः, न वा विभावेन झटिति कश्चिदाक्षेपगम्य इति कष्टेन कल्पना ।

परिहरति रतिं मतिं लुनीते स्खलति भृशं परिवर्तते च भूयः ।
इति बत विषमा दशास्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥३२६॥

अत्र रतिपरिहारादीनामनुभावानां करुणादावपि सम्भवात् कामिनीरूपो विभावो यत्नतः प्रतिपाद्यः ।

प्रसादे वर्तस्व प्रकटय मुदं संत्यज रुषं
प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः ।
निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं
न मुग्धे प्रत्येतुं प्रभवति गतः कालहरिणः ॥३२७॥

अत्र शृङ्गारे प्रतिकूलस्य शान्तस्यानित्यताप्रकाशनरूपो विभावस्तत्प्रकाशितो निर्वेदश्च व्यभिचारी, उपात्तः ।

णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि ।
सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥३२८॥

अत्र सकलपरिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेनोपभोगार्थं वनगमनं चेन्न दोषः ।

**सारबोधिनी**—विभावे तामुदाहरति **परिहरतीति**। वस्तुनि स्पृहा रतिः। **मतिरर्थावधारणम्**। लुनीते छिनत्ति, स्खलति विपर्येति परिवर्तते विशेषदर्शी भवति। अतएव दशा समानं भवति भ्रमविशेषदर्शनाभ्यां सुखदुःखदायित्वात्। अस्य नायकस्य दशा, तन्निष्ठ एव विप्रलम्भो व्यङ्ग्यः। परिहरतीत्यादावपि तस्यैव कर्तृत्वेन दशायामनन्वयात्। अत्र कामिनीरूपो विभावो नास्ति, न च परिहारादिस्तदाक्षेपक इत्यत आह **अत्र रतीति**। करुणादावित्यादिपदाद्भयानकबीभत्सपरिग्रहः। **संशयेन** कतरस्याप्यनिश्चयेन यत्नप्रतिपाद्यः।

प्रकारणाद्यनुसंधानविलम्बगम्यः। **प्रसाद इति**। प्रसादे वर्तस्व प्रसीदेत्यर्थः।

सिञ्चत्वङ्गानीत्यन्वयः। शुष्यन्त्यङ्गानीत्यस्य विशेषणमुपात्त इति। मनागपि तयोरुपादानं वियोगातिरिक्तं सकलमेव शृङ्गाररसमुच्छिनत्तीति भावः। निभृतरमणः प्रच्छन्नकामुकः। **शान्तानुभावाविति**। तेन प्रतिकूलानुभावग्रहणे न प्रकृतरसस्थगनमिति भावः। तयोरेव शृङ्गारानुभावत्वोपायतामाह **इन्धनेत्यादि**। तथा च निर्व्याजवनगमनस्यैव शान्तानुभावत्वात् नासङ्गतिरिति भावः।

दीप्तिः पुनः पुनर्यथा कुमारसंभवे रतिविलापे।

अकाण्डे प्रथनं यथा वेणीसंहारे द्वितीयेऽङ्केऽनेकवीरक्षये प्रवृत्ते भानुमत्या सह दुर्योधनस्य शृङ्गारवर्णनम्।

**सारबोधिनी**--**णिहुएति**। निभृतरमणे लोचनपथे पतिते गुरूणां मध्ये।
सकलपरिहारहृदया वनगमनमेवेच्छति वधूः॥

पुनः पुनर्दीप्तिर्विच्छिद्य विच्छिद्य ग्रहणं वेद्यान्तरसंबन्धेन धाराया विच्छेदात्। प्रबन्ध एवं तथा संभवतीत्याह **रतिविलाप इति**। अत्र स्वसामग्रीलब्धपरिपोषस्यापि करुणस्य। अथ सा पुनरेवंविकलेत्यादिनोद्दीपितस्य पुनर्मधुसंदर्शनेन विच्छेदः। पुनोस्तमवेक्ष्य रुरोद सा भृशमित्यादिनोद्दीपितस्य पूर्वापरानुसंधायिनां सामाजिकानां न समग्रहप्रतिभासः। **अकाण्डेति**। अनवसरे प्रथनं विस्तारः। छेदो विच्छेदः। धारारूढे धारावाहिनि। कङ्कणमोचनाय विवाहदशमदिवसीयोत्सवविशेषाय प्रकर्षाधिरूढे वीररसे तदुचितव्यवहारान्वेषणमेवोचितं नायकस्य, न तु तद्विरुद्धाचरणं अकीर्तिपर्यवसायीति भावः।

अकाण्डे छेदो यथा वीरचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराधिरूढे वीररसे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ।

अङ्गस्याप्रधानस्यातिविस्तरेण वर्णनम्। यथा हयग्रीववधे हयग्रीवस्य।

अङ्गिनोऽननुसन्धानम् । यथा रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः ।

**सारबोधिनी**—अङ्गस्याप्रधानस्य प्रतिनायकादेः हयग्रीवस्य जल-केलि-वन-विहाररतोत्सवादे-र्नायिकापेक्षया विस्तरेण वर्णनं हयग्रीवस्य नायकत्वमेव प्रत्याययति न प्रतिनायकत्वमिति दोषः । न च 'वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपी'त्यादिना विशेष इति वाच्यम् । यद्गुणत्वेन रिपोर्वर्णनेन नायकोत्कर्ष-प्रतिपादनं तत्रैवास्य तात्पर्यात् । न तु वनविहारादावपि । अत एवाह—'तज्जयान्नायकोत्कर्षकथनं च धिनोति नः' इति । अङ्गिनोऽननुसन्धानमित्यपरश्च रसभङ्गहेतुः । सागरिकाया विस्मृतिरिति । बाभ्रव्यस्य सिंहलेश्वरकञ्चुकिन आगमनकाले विजयवर्मवृत्तान्तश्रवणेनेति शेषः । तेन नायिकाप्रतिपाद्य शृङ्गाररसो विच्छिन्नप्रायः स्यादिति । दिव्याः श्रीकृष्णादयः अदिव्याः युधिष्ठिरादयः । दिव्यादिव्या देवत्वेऽपि आत्मनि अभिमानिनः श्रीरामचन्द्रादयः ।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्च वीररौद्रशृङ्गारशान्तरसप्रधाना धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्ताः, उत्तममध्यमाधमाश्च । तत्र रतिहासशोकाद्भुतानि अदि-व्योत्तमप्रकृतिवत् दिव्येष्वपि । किं तु रतिः संभोगशृङ्गाररूपा उत्तमदेवताविषया न वर्णनीया । तद्वर्णनं हि पित्रोः संभोगवर्णनमिवात्यन्तमनुचितम् ।

क्रोधं प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥ ३२६ ॥

**सारबोधिनी**—**वीररौद्रेत्यादि** । धीरोदात्तादिषु यथाक्रममन्वेति **उत्तमेति** । गुणानामुत्कर्षाप-कर्षतदुभयाभावैरुत्तममध्यमाधमत्वानि । उक्तासु प्रकृतिषु विपर्ययाभिधानाय तदौचित्यमनुवदति **तत्रेत्यादि** ।

इत्युक्तवत् भ्रुकुट्यादिविकारवर्जितः क्रोधः सद्यःफलदः स्वर्गपातालगगनसमुद्रोल्ल-ङ्घनाद्युत्साहश्च दिव्येष्वेव । अदिव्येषु तु यावदवदानं प्रसिद्धमुचितं वा तावदेवोपनिबद्धव्यम् । अधिकं तु निबध्यमानमसत्यप्रतिभासेन "नायकवद्वर्तितव्यं न प्रतिनायकवत्" इत्युपदेशे न पर्यवस्येत् । दिव्यादिव्येषु उभयथापि । एवमुक्तस्यौचित्यस्य दिव्यादीनामिव धीरोदात्ता-दीनामप्यन्यथावर्णनं विपर्ययः । तत्रभवन् भगवन् इत्युत्तमेन, न अधमेन मुनिप्रभृतौ न राजादौ भट्टारक इति नोत्तमेन राजादौ प्रकृतिविपर्ययापत्तेर्वाच्यम् । एवं देशकालवयो-जात्यादीनां वेषव्यवहारादिकमुचितमेवोपनिबद्धव्यम् ।

अनङ्गस्य रसानुपकारकस्य वर्णनम्। यथा कर्पूरमञ्जर्यां नायिकया स्वात्मना च कृतं वसन्तवर्णनमनादृत्य बन्दिवर्णितस्य राज्ञा प्रशंसनम्।

**बालचित्तानुरञ्जनी**—वर्णने दोषमाह **अधिकन्त्विति**। मनुष्येष्वधिकवर्णने असत्यत्वेन, रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशे पर्यवसानं न स्यादित्यर्थः। दिव्यादिव्येष्वपि नियममाह **दिव्येति**। दिव्यप्रतिबद्धं अदिव्यप्रतिबद्धञ्च। दिव्यादीनामुक्तविपरीतवर्णनं विपर्यय इत्याह **एवमिति**। एवं प्रकृतिं विचार्य तस्या आमन्त्रणविषयं विपर्ययमाह **तत्रेति**। अत्रायं सम्बन्धः, प्रभृतौ विषये तत्रभवन् भगवन् इति उत्तमेन द्विजातिना वाच्यम्, अधमेन म्लेच्छेन तु न वाच्यम्। उत्तमेनापि भगवन् इति मुनिप्रभृतावेव वाच्यं, न राजादौ। राजादौ भट्टारकेति न वाच्यं अपि तु देवेति। अत्रोत्तमेनेत्यनुषज्यते। अधमेन तु भट्टारकेति राजादिविषये वाच्यमेव। मुनिप्रभृतौ परमेश्वरेति केनापि न वाच्यम् प्रकृतिविपर्ययापत्तेरिति। एवं देशादिष्वपि अनुचितवर्णने विपर्ययप्रसङ्गात् तत्तदुचितमेव वर्णनीयमित्याह **एवमिति**। अनङ्गस्याभिधानमुदाहरति **अनङ्गस्येति**। अनङ्गस्येत्यस्य व्याख्यानं रसानुपकारकस्येति। वर्णनं प्रशंसनम्। कर्पूरमञ्जर्यां नायिकया स्वात्मना स्वसंबन्धिना च कृतं वसन्तवर्णनमनादृत्य "जह किल णिवेदिदं बन्दीहिं" इत्यारभ्य विदूषकोक्तिपर्यन्तेन ग्रन्थेन राज्ञा कृतं बन्दिवर्णितस्य वसन्तस्य यद्वर्णनं [प्रकृतरसस्यानुपकारकत्वात्] तदनुचितमित्यर्थः।

**सारबोधिनी**—अवदानं वृत्तं कर्म। इदानीमामन्त्रणौचित्यमाह **तत्रेत्यादि**। तत्रभवन् भगवन् इति उत्तमेन वाच्यं नाधमेनेत्यन्वयः। उत्तमेनापि मुनिप्रभृतौ प्रयोज्यम्, न राजादावित्याह **मुनीति**। भट्टारकपदं राजादावुत्तमेन न वाच्यम्, किन्त्वधमेन। परमेश्वर इत्युत्तमेन न मुनिप्रभृतौ वाच्यम्, किन्तु देवतादावेवेत्याह **भट्टारकेति**। **एवमिति**। दिवि मानुषवाग्वेषादिवर्णनं देशानुचितम्, वसन्ते मेघादिवर्णनं कालानुचितम्, जरायां संभोगादिवर्णनं वयोऽनुचितमित्यादि।

"ईदृशाः" इति। नायिकापादप्रहारादिना नायककोपादिवर्णनम्। उक्तं हि ध्वनिकृता

"अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत् परा॥" इति।

इदानीं क्वचिददोषा अप्येते, इत्युच्यन्ते।

**न दोषः स्वपदेनोक्तावपि सञ्चारिणः क्वचित्।**

**यथा**

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वससरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः॥ ३३०॥

अत्रौत्सुक्यशब्द इव तदनुभावो न तथाप्रतीतिकृत्। अत एव 'दूरादुत्सुकम्' इत्यादौ व्रीडाप्रेमाद्यनुभावानां विवलितत्वादीनामिवोत्सुकत्वानुभावस्य सहसाप्रसरणादिरूपस्य तथाप्रतिपत्तिकारित्वाभावादुत्सुकमिति कृतम्।

**बालचित्तानुरञ्जनी**—"रसे दोषाः स्युरीदृशा" इत्युक्तं, तत्र ईदृशाः एवंप्रकाराः इत्यनेन संग्राह्यं दर्शयति **नायिकेति**। नायिका पादप्रहारं करोति तदा नायककोपादिवर्णनमनुचितमित्यर्थः। आदिपदेन रावणस्य नायिकां प्रति नायकत्वकरणमभिप्रेतम्। तदुक्तम्—

सन्ति सिद्धरसप्रख्या ये च रामायणादयः।
कथाश्रया न तैर्योज्या स्वेच्छा रसविरोधिनी ॥इति॥

अत्र संमतिमाह **उक्तं हीति**। परा उपनिषत्। परं रहस्यमित्यर्थः। अत्र व्यभिचार्यादीनां त्रयाणां शब्दवाच्यत्वे त्रयो दोषकल्पनया अनुभावविभावयोर्व्यक्तौ द्वाविति यच्च व्यञ्जकमिति वदन्ति[?] **क्वचनादोषत्वं** वक्तुमुपक्रमते। **दृष्ट्वेति**। क्वचित् 'आत्त' इत्यधिकमिति प्रयोगे अनुभावप्रयोगादपि। यत्र स्वयं शब्दोपादानं उचितम् स चेतोभिरत्र न दोष इत्यर्थः[?]। तदुदाहरति **यथेति**। नवे सङ्गमे औत्सुक्येन कृतत्वरा। सहोत्पन्नया जनितया। तैस्तैर्बन्धुवधूजनस्य वचनैः पुनः आभिमुख्यं नीता। अग्रे वरं शिवं दृष्ट्वा गृहीतभयरसा संरोहद्रोमा आलिङ्गिता गौरी वः शिवाय भूयात्। अत्रौत्सुक्यनाम्नो व्यभिचारिभावस्य स्वशब्देनोपादानं न दोष इत्याह। औत्सुक्यनाम्नो व्यञ्जकेनानुभावेन नयनप्रसारणेन औत्सुक्यं प्रकाश्यतां किमौत्सुक्यशब्दोपादानेनेत्याह **अत्रेति**। तस्यौत्सुक्यनाम्नो व्यभिचारिणः संबन्धी अनुभावः नयनप्रसारणादिः। औत्सुक्यस्य इच्छालौल्यप्रकारत्वात् तत्प्रकाशनक्षमस्यानुभावस्याभावात् औत्सुक्यशब्दोपादानमुचितमेवेति भावः। उक्तेन योगान्तरेण संबध्यते **अत एवेति**। व्रीडाहर्षकोपासूयाप्रसादानां व्यभिचारिणां संबन्धिनो ये अनुचक्षुषो विवलनस्फारणारुणत्वाञ्चितभ्रूलतात्वबाष्पाम्बुपूर्णत्वलक्षणाः। तेषां यथा व्रीडादिव्यभिचारिप्रकाशकत्वं न तथा नयनप्रसरणादिरूपव्यापारस्य औत्सुक्यव्यञ्जकत्वम् सामर्थ्याभावात्। अतः औत्सुक्यमित्येव प्रयुक्तं न पुनर्दूरादुत्थितमित्याद्यनुभावेनाभिव्यञ्जितमित्यर्थः।

**सारबोधिनी**--प्रतिप्रसवमाह **इदानीमिति**। **औत्सुक्येति**। सहभुवा सहोत्पन्नया। **अत्रौत्सुक्यशब्द इति**। औत्सुक्यानुभावरूपायास्त्वराया भयेनापि संभवात्। तथा चानुभावमात्रोपादाने भयाद्वोत्कण्ठातो वेति संशये प्रतिपत्त्यप्ररोह एव भवेत् न रसप्रतिपत्तिरिति स्वशब्दोपादनं कृतम्। एतदेव काव्यान्तरप्रयोगेन द्रढयति **अत एवेति**।

**सञ्चार्यादेर्विरुद्धस्य बाध्यस्योक्तिर्गुणावहा ॥ ६३ ॥**

बाध्यत्वेनोक्तिर्न परमदोषः, यावत् प्रकृतरसपरिपोषकृत्। यथा

'क्वाकार्यं शशलक्ष्मणः क्व च कुलम्' इत्यादौ ॥३३१॥

अत्र वितर्कादिषु, उद्गतेष्वपि चिन्तायामेव विश्रान्तिरिति प्रकृतरसपरिपोषः।

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः ।
आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥३३२॥

इत्यादौ साधारणत्वं पाण्डुतादीनामिति न विरुद्धम् ।

सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः ।
किन्तु मत्ताङ्गनापाङ्गभङ्गलोलं हि जीवितम् ॥३३३॥

इत्यत्राद्यमर्धं बाध्यत्वेनैवोक्तम् । जीवितादपि, अधिकमपाङ्गभङ्गस्यास्थिरत्वमिति प्रसिद्धभङ्गरोपमानतयोपात्तं शान्तमेव पुष्णाति । न पुनः शृङ्गारस्यात्र प्रतीतिस्तदङ्गाप्रतिपतेः । न तु विनेयोन्मुखीकरणमत्र परिहारः शान्तश्रृङ्गारयोर्नैरन्तर्यस्याभावात् । नापि काव्यशोभाकरणम् रसान्तरादनुप्रासमात्राद् वा तथाभावात् ।

**बालचित्तानुरञ्जनी**—व्यभिचार्यादीनां प्रतिकूलानामपि बाध्यत्वार्थं स्वशब्देनोपादानं न दोषः किंतु गुण एवेत्याह **सञ्चार्यादेरिति** । पद्यं व्याकरोति **बाध्यत्वेनेति** । प्रकृतरसविरुद्धोऽपि व्यभिचार्यनुभावादिर्यदा बाध्यत्वेन निबध्यते तदा प्रकृतरसस्यैव प्राधान्यमिति न दोषः किन्तु गुण एवेत्यर्थः । तदुदाहरति **यथेति** । वीचीतरङ्गन्यायेन उन्मग्ननिमग्ने वितर्कौत्सुक्यादौ न विश्रान्तिरित्येवकारार्थः । प्रकृतस्य रसस्य विप्रलम्भश्रृङ्गाररसस्य परिपोषः । ननु बाध्यत्वाभावेऽपि विरुद्धयोः क्वचित् समावेशोऽस्तीति ध्वनिकारेणोक्तमित्याशङ्क्याह **पाण्डु क्षाममिति** । हे सखि तव पाण्डु क्षामं कृशं वदनं सरसं हृदयं अलसं वपुश्च हृदयमध्ये क्षेत्रे अन्यशरीरे चिकित्स्यः असाध्यो रोगः राजयक्ष्मा उपपतिशरीरेणाऽपि चिकित्स्यः चिन्तादिः तमावेदयति । अत्र पाण्डुतादयो मरणकारणराजयक्ष्मप्रभवा अपि भवन्ति उपपतिचिन्तातोऽपि भवन्तीत्येवं करुणविप्रलम्भसाधारणा इति न विरोधः । असाधारणत्वस्यैव विरोधस्फूर्तिकरणत्वात् । अतो ध्वनिकारोक्तमसङ्गतमिति भावः । ध्वनिकारेणैव स्थलान्तरे वाच्यत्वाभावेऽपि विरोधोऽङ्गीकृतः । स च परिहृतः । तद्दूषयितुमाह **सत्यमिति** । स्त्रियः रम्याः इति सत्यम् विभूतयोऽपि रम्या इति सत्यम्, किंतु जीवितं मत्तकामिनीकटाक्षचञ्चलम् । पूर्वार्द्धे वाविरोधः उत्तरार्द्धे वेति विकल्प्याद्यं दूषयति **अत्रेति** । सत्यमित्यर्थाङ्गीकारात् वाच्यत्वेनैव श्रृङ्गारविभावादिकमुक्तमित्यर्थः । द्वितीयं दूषयति **जीवितेति** । प्रसिद्धेन तेन गुणेन अधिकत्वलक्षणेन यदुपमानता तया उपात्तं अस्थिरत्वं कर्तृ शान्तमेव पुष्णाति । **न पुनरिति** । तस्य शृङ्गाररसस्य यदङ्गं जीवितस्थैर्यादि तस्याप्रतीतेः विरोधलेशोऽपि नास्तीति भावः । एवं विरोधाभावमभिधाय—

विनेयानुन्मुखीकर्तुं काव्यशोभार्थमेव वा । तद्विरुद्धरसस्पर्शस्तदङ्गानां न दुष्यतीति ध्वनिकारोक्तपरिहारद्वयमध्ये आद्यं दूषयति **न त्विति** । गुडजिह्विकान्यायेन विनेयान् शिष्यान् श्रृङ्गाररसेनोन्मुखीकृत्य शान्तरसोपदेश इति परिहारो न संभवतीत्यर्थः । तत्र हेतुमाह **शान्तेति** । एकस्य प्ररोचनायामन्यस्य तात्पर्ये तयोर्नैरन्तर्यं वाच्यम्, तन्न सम्भवति । विरुद्धत्वेनोभयविनाशप्रसङ्गादिति

भावः। द्वितीयं दूषयति **नापीति** । रसान्तरात् शृङ्गारव्यतिरिक्तात् रसात् तदभावे अनुप्रासमात्रात् मत्ताङ्गनापाङ्गेतिरूपाद्वा। तथाभावात् काव्यशोभाया अभावात् इत्यर्थः।

**सारबोधिनी—सञ्चार्यादेरिति**। विरुद्धस्य प्रकृतरसविरोधिरसाङ्गभूतस्य यदि स्वभावत एव बाध्यत्वं न तथा विरोध इत्यन्यथा व्याचष्टे **बाध्यत्वेनेति**। तथा निर्देष्टव्यम् यथा बाध्यतावगमः स्यात्। गुणपदं विवेचयति **न परमित्यादि**। **क्वाकार्यमित्यादि**। अत्र वितर्कमतिशङ्काधृतीनां शान्तसञ्चारिणां शृङ्गारपरिपन्थिनामपि तत्परिपोषकता, तेषां चिन्तायामेव विश्रान्तेः। एवं शृङ्गारस्य परिपुष्टिः। विपक्ष-जयपूर्वकराज्यलाभस्येव। तदाह **वितर्कादिष्वित्यादि**। प्रकृतरसो भावशबलः। विरुद्धरसाङ्गोपादानं प्रकृतरसपरिपोषकत्वेन गुणायेत्यत्र परोदाहृतमन्यथा समर्थयति **पाण्डु क्षाममिति**। हे सखि! तव हृन्मानसं अन्तः क्षेत्रियरोगमावेदयतीति सम्बन्धः। शरीरान्तरचिकित्स्यः क्षेत्रियरोगः। अत्र व्याधेः करुण-रसोचितस्य शृङ्गाराङ्गत्वेन समारोपोऽदोषत्वे हेतुरिति ध्वनिकारः। तन्न, करुण इव शृङ्गारप्रकर्षेऽपि पाण्डुतादीनामनुभावानामुचितत्वात्। अत एव 'व्याध्युन्मादापस्मारजाड्यप्रसरणादिभिः विप्रलम्भोऽभिनेतव्य' इति भरतः। तेनात्र विरोध एव नास्तीत्यलं तत् समर्थनप्रयासेनेत्याह **इत्यादाविति**। सञ्चार्यादेरित्यत्रादि-ग्रहणात् विरुद्धस्य विभावस्य बाध्यत्वोक्तौ गुणावहत्वमाह **सत्यमित्यादि**। अत्र पूर्वार्द्धे शृङ्गारस्य अपरार्द्धे शान्तस्य विभावः। अनयोर्विरुद्धत्वेऽपि पूर्वार्द्धस्य बाध्यत्वेनाभिधानान्न दोषत्वम्, अपि तु गुणत्वम्, शान्तपरिपोषकत्वात्। सर्वा रामादयः सत्येव जीविते तदर्थमुपादेयाः। जीवितञ्चातिभङ्गुरमिति किं-कृतं तासामुपादेयत्वम्। अतो रम्यत्वेऽपि निष्फला एवेति पर्यवसानम्। ननु मत्ताङ्गनापाङ्गभङ्गस्योपा-दानत्वावगतौ कथं शान्तस्य प्राधान्यमित्याह **जीवितमित्यादि**। अपरिभिन्नक्रमे। अधिकमपीत्यर्थः। इति-शब्देनाधिकास्थिरत्वपरामर्शः। इत्यधिकास्थिरत्वेन प्रसिद्धो यो भङ्गुरोऽपाङ्गभङ्गस्तस्य यदुप-मानत्वं तेनोपात्तम् तदनुपादानत्वम् "उपमानानि सामान्यवचनैरि"त्यनुशासनात्। **शान्तमेवेत्यादि**। यथा अपाङ्गभङ्गोऽस्थिरस्तथा जीवितमिति जीविते क्षणस्थायित्वप्रत्ययेनेत्यर्थः, तत्प्रत्यये त्वपाङ्गभङ्गादीनां निष्फलत्वावगतिः शान्तमेव रसं पुष्णातीत्यर्थः। ननु शान्तशृङ्गारयोर्द्वयोरपि रसत्वेन [एकेनापरस्य] बाधने किं विनिगमकमित्यपेक्षायामाह **न पुनरिति**। शृङ्गारयोग्यविभावाद्यकरणादित्यर्थः। अथ विनेयानां सुकुमारमतीनां राजपुत्राणां शृङ्गारलम्पटानां प्रवृत्त्यन्यथानुपपत्त्या अनु-भूयमानायाः काव्यशोभायाः शृङ्गारैकनिर्वर्त्यत्वेन चावश्यं शृङ्गाराङ्गानामाक्षोभो न वक्तव्य इति ध्वनिकारमतं निराकरोति **न त्विति**। रसान्तरेणाव्यवधानेन प्रतीतिनैरन्तर्यम् तेन यस्याङ्गानि प्रतीयन्ते स एव रस इति। शान्त एव रसो न शृङ्गारः। तेन शृङ्गारस्य विनेयोन्मुखीकरणे काव्यशो-भायां च हेतुत्वमत्र नास्तीति बोध्यम्। विनेयोन्मुखत्वे काव्यशोभायां चोपपादकमाह **रसान्तरादिति**। एतयोरुपपत्तिरास्वादमात्रादेव, न त्वास्वादविशेषात्तदभावस्थले तयोरभावप्रसङ्गात्। आस्वादमात्रं तु प्रकृते शान्तादेवाक्षतमिति समाधानार्थः। अनुप्रासानतिरिक्तरसवादिनां सांप्रदायिकानां मतेऽनुप्रास एवास्वादबीजमिति मधुरानुप्रासेन तदुभयनिष्पत्तिरित्यत आह **अनुप्रासमात्राद्वेति**। मात्रपदेन विभावा-दिव्यङ्ग्यरसादिव्यवच्छेदः।

**आश्रयैक्ये विरुद्धो यः स कार्यो भिन्नसंश्रयः।**
**रसान्तरेणान्तरितो नैरन्तर्येण यो रसः॥६४॥**

वीरभयानकयोरेकाश्रयत्वेन विरोध इति प्रतिपक्षगतत्वेन भयानको निवेशयितव्यः। शान्तशृङ्गारयोस्तु नैरन्तर्येण विरोध इति रसान्तरमन्तरे कार्यम्। यथा नागानन्दे शान्तस्य जोमूतवाहनस्य 'अहो गीतम् अहो वादित्रम्' इत्यद्भुतमन्तर्निवेश्य मलयवतीं प्रति शृङ्गारो निबद्धः।

न परं प्रबन्धे यावदेकस्मिन्नपि वाक्ये रसान्तरव्यवधिना विरोधो निवर्तते। यथा

भूरेणुदिग्धान् नवपारिजातमालारजोवासितबाहुमध्याः।
गाढं शिवाभिः परिरभ्यमाणान् सुराङ्गनाश्लिष्टभुजान्तरालाः॥
सशोणितैः क्रव्यभुजां स्फुरद्भिः पक्षैः खगानामुपवीज्यमानान्।
संवीजिताश्चन्दनवारिसेकैः सुगन्धिभिः कल्पलतादुकूलैः॥३३४॥

विमानपर्यङ्कतले निषण्णाः कुतूहलाविष्टतया तदानीम्।
निर्दिश्यमानान् ललनाङ्गुलीभिर्वीराः स्वदेहान् पतितानपश्यन्॥३३५॥

अत्र बीभत्सशृङ्गारयोरन्तर्वीररसो निवेशितः।

**बालचित्तानुरञ्जनी**—इदानीं रसविरोधं संक्षिप्य परिहारोपायमाह **आश्रयेति**। द्विधा हि रसविरोधः एकाश्रयत्वमूलो नैरन्तर्यमूलश्च। तत्र पूर्वस्मिन्नाश्रयभेद एव परिहारः।

**यत्तूक्तम्**

विरुद्धैकाश्रयो यस्तु विरोधिस्थायिनो भवेत्।
स हि भिन्नाश्रयः कार्यस्तस्य दोषेऽप्यदोषता॥ इति।

अत्र रसान्तरेण विरुद्धरसेन अन्तरितो व्यवहितः कार्यः। यच्चोक्तम्

रसान्तरान्तरितयोरेकवाक्यस्थयोरपि।
निवर्तते हि रसयोः समावेशे विरोधितेति॥

तत्र वीरभयानक इत्यादिग्रन्थे भयानकग्रहणं करुणस्याप्युपलक्षणम्।

**भूरेण्विति**। भूरेण्वित्यादिविशेषणैरतीव दूरापेतत्वमसंभावनास्पदत्वमुक्तम्। स्वदेहान् इत्यनेन चैकत्वाभिमानादेकाश्रयैक्यम्। अन्यथा विभिन्नविषयत्वात् को विरोधः स्यात्।

ननु वीर एवात्र रसो न शृङ्गारो न बीभत्सः किं तु रतिजुगुप्से वीरं प्रति व्यभिचारीभूते। सत्यम्, तथापि प्रकृतोदाहरणता तावदुपपन्ना, यतस्तदङ्गयो रतिजुगुप्सयोरपि वीररसव्यवहितयोर्न विरोधः। **वीररस इति**। "वीराः स्वदेहान्" इत्यादिना तदीयोत्साहाद्यवगत्या कर्तृकर्मणोः समस्तवाक्यार्थानुयायितया प्रतीतिरिति शृङ्गारबीभत्सयोरन्तरेऽनिवेशितस्यापि सुतरां वीरस्य व्यवधायकता प्रतीयते।

**सारबोधिनी**--एवं रसाङ्गानां विरोधं समर्थ्य रसयोर्विरोधं समर्थयति **आश्रयैक्य इति**। विरोधो द्विधा, दैशिकः कालिकश्च। आद्यं समाधत्ते **भिन्नसंश्रय इति**। द्वितीयं समाधत्ते **रसान्तरेणेति**। नैरन्तर्ये तु यो रसो विरुद्धः स रसान्तरेणान्तरितः कार्य इति पूर्वेणान्वयः। भयानकस्य प्रतिपक्षगतत्वेनोपन्यासे नायकवीररसपुष्टिः। **एकस्मिन् इति**। एकक्रियासामीप्ये इत्यर्थः। **भूरेणिवति**। पतितान् स्वदेहान् वीरा अपश्यन् इत्यर्थः। बाहुमध्यं वक्षः। शिवाः शृगाल्यः। क्रव्यभुजां मांसाशिनाम्। दुकूलं पट्टवस्त्रम्। **अत्रेति**। बीभत्सशृङ्गारयोः पतितस्वदेहसुराङ्गनालम्बनभेदेन व्यवस्थितयोः अन्तर्मध्ये वीररसो निवेशित इति। ननु कथमत्र वीररसप्रतीतिः ? वीरशब्दमात्रेण तदर्थाप्रतीतेः। मैवम्, साहसनिपातजन्यस्वर्गलाभरूपानुभावस्याक्षेपलब्धगर्वादिः सञ्चारिणश्च संभवात्तत्प्रतीतेः। न च प्राकरणिकत्वात् वीरस्य प्राधान्यम्। एतद्वाक्यात् बीभत्सशृङ्गारसामग्र्योरेवोत्कटत्वेन प्रतीयमानत्वात्। वीरसामग्र्याः पुनराक्षिप्यमाणत्वेनानुत्कटत्वात्। अत्र हि शृङ्गारबीभत्ससामग्रीतश्चित्रो रस इति संप्रदायः।

**स्मर्यमाणो विरुद्धोऽपि साम्येनाथ विवक्षितः।**
**अङ्गिन्यङ्गत्वमाप्तौ यौ तौ न दुष्टौ परस्परम्॥६५॥**

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥३३६॥

एतद् भूरिश्रवसः समरभुवि पतितं हस्तमालोक्य तद्वधूरभिदधौ। अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति।

दन्तक्षतानि करजैश्च विपाटितानि प्रोद्भिन्नसान्द्रपुलके भवतः शरीरे।
दत्तानि रक्तमनसा मृगराजवध्वा जातस्पृहैर्मुनिभिरप्यवलोकितानि॥३३७॥

अत्र कामुकस्य दन्तक्षतादीनि यथा चमत्कारकारीणि तथा जिनस्य। यथा वा परः शृङ्गारी तदवलोकनात् सस्पृहस्तद्वत् एतद्दृशो मुनय इति साम्यविवक्षा।

**बालचित्तानुरञ्जनी**—**पूर्वावस्थेति**। रशनोत्कर्षादिना स्मर्यमाणेन शृङ्गाराङ्गेनापि इदानीं विध्वस्ततया प्रकृष्टां शोकविभावतां प्रतिपद्यमानेन करुण एव पोष्यते।

**दन्तक्षतानीति**। बोधिसत्त्वस्य सिंहीं स्वकिशोरभक्षणप्रवृत्तां प्रति निजं शरीरं वितीर्णवतः केनचिच्चाटुकं क्रियते। प्रोद्भूतः सान्द्रपुलकः परार्थसंपत्तिजेनानन्दभरेण यत्र। रक्ते रुधिरे मनोऽभिलाषो यस्याः। अनुरक्तं च मनो यस्याः। मुनयश्चोद्बोधितमदनावेशाश्चेति विरोधः। "जातस्पृहैः" इति च "वयमपि यदि कदाचिदेवं कारुणिका भविष्यामस्तदा सत्यतो मुनयः" इति मनोराज्ययुक्तैः। समासोक्तेश्चालङ्कारान्नायिकावृत्तान्तप्रतीतिः। **पर इति**। दन्तक्षतयुक्तकामुकव्यतिरिक्तः तदवलोकनात् कामुकदन्तक्षतादिदर्शनात्। **एतद्दृशेति**। जिनदन्तक्षतादिदर्शनेन। अत्र शृङ्गारतुल्यत्वेन शान्तो विवक्षितः।

**सारबोधिनी**–अविरोधस्य प्रकारान्तरमाह **स्मर्यमाण इति**। **अत्रेति**। पूर्वावस्था रशनोत्कर्षणादिः। शृङ्गाराङ्गं तदनुभावः। **परिपोषयतीति**। अत्यन्तसुखहेतोर्विच्छेदस्य शोकोपोद्बलकत्वात्। **दन्तक्षतानीत्यादि**। करजा नखाः। विपाटितानि विदारितानि। रक्तं रुधिरमनुरक्तं च। मृगराजः सिंहः मृग इति पुंजातिविशेषो नृपश्च। अपिर्विरोधे, गतस्पृहाणां मुनीनां तदुद्रेकात्। प्रसूय बुभुक्षया निजापत्यमेव भोक्तुमारभमाणायै सिंहिकायै तदपत्यरक्षणाय स्वाङ्गमर्पितवन्तं जिनं प्रति कस्यचिदियमुक्तिः। अत्र जिनदेहे सिंहीदन्तनखक्षतानि बीभत्सप्रतिपादकान्यपि कान्तादत्तदन्तक्षतरूपशृङ्गारानुभावसाम्येनोक्तानि तस्य प्रकर्षातिशयं प्रतिपादयन्ति। अत एव सस्पृहतदवलोकनेन रागिजनतुल्यता मुनीनामपीति साम्यविवक्षेत्याह **अत्र कामुकस्येत्यादि**। ननु दयावीरस्य विस्मयोत्थापकत्वात् जिनविषयकरतावङ्गतस्य। तत्र च दयावीरशृङ्गारयोरङ्गतेति अङ्गत्वं प्राप्तयोरेवोदाहरणत्वेन तृतीयप्रकारासंभव इति चेत्, मैवम्, ब्राह्मणानां सन्ध्यावन्दनमिव बौद्धस्य दयालुत्वं स्वभाव इति दयाया विस्मयानुत्थापकत्वात्। **मिश्रास्तु** उक्तदोषादिदमस्य नोदाहरणम्। किन्तु

"सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविखण्डितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे॥"

इति शृङ्गाररौद्रयोः साम्यविवक्षणाददोषत्वमित्याहुः। **अङ्गिनीति**। अङ्गिनि विरुद्धयोरङ्गत्वं द्विधा भवति तुल्यकक्षतया परस्याङ्गभावमापाद्य वा।

क्रामन्त्यः क्षतकोमलाङ्गुलिगलद्रक्तैः सदर्भाः स्थलीः
पादैः पातितयावकैरिव गलद्बाष्पाम्बुधौताननाः।
भीता भर्तृकरावलम्बितकरास्त्वच्छत्रुनार्योऽधुना
दावाग्निं परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव॥३३८॥

अत्र चाटुके राजविषया रतिः प्रतीयते। तत्र करुण इव शृङ्गारोऽप्यङ्गमिति तयोर्न विरोधः। यथा

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥३३९॥

इत्यत्र एहीति क्रीडन्ति गच्छेति क्रीडन्तीति क्रीडनापेक्षयोरागमनगमनयोर्न विरोधः ।

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोप्याददानोऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शांभवो वः शराग्निः ॥३४०॥

इत्यत्र त्रिपुररिपुप्रभावातिशयस्य करुणोऽङ्गम् तस्य तु शृङ्गारः, तथापि न करुणे विश्रान्तिरिति तस्याङ्गतैव । अथवा प्राक् यथा कामुक आचरति स्म तथा शराग्निरिति शृङ्गारपोषितेन करुणेन मुख्य एवार्थ उपोद्बलयते । उक्तं हि

'गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते' ॥इति।

प्राक् प्रतिपादितस्य रसस्य रसान्तरेण न विरोधः, नाप्यङ्गाङ्गिभावो भवति, इति रसशब्देनात्र स्थायिभाव उपलक्ष्यते ।

इति काव्यप्रकाशे दोषदर्शनो नाम सप्तम उल्लासः ।

**बालचित्तानुरञ्जनी**--परस्परविरोधिनोरपि रसयोर्भावयोर्वाङ्गिनि भावे रसे वाङ्गभावप्राप्तौ **न दोषः** । यथा 'क्रामन्त्य' इति । होमाग्निधूमकृतं बाष्पाम्बु, यदि वा बन्धुगृहत्यागदुःखोद्भवम् । भयं कुमारीजनोचितः साध्वसः । अनभ्यस्तगमनतया भयाविसंष्ठुलगतितया च विवाहे त्रिरग्निप्रदक्षिण-निमित्तं च भर्तृकरावलम्बनम् । **करुण इति** । रतेरङ्गिन्याः करुणशृङ्गारौ अङ्गमिति न विरोधः ।

**एहि गच्छ इति** । आगमनगमनयोर्विरुद्धयोरपि क्रीडाङ्गत्वेनानूद्यमानयोः समावेशे सति न विरोधः । तद्वत्क्रामन्त्य इत्यादावपि करुणशृङ्गारयोरनूद्यत्वम् रतेरेव प्राधान्येन वाक्यार्थत्वात् । विरुद्धानामपि अन्यमुखप्रेक्षित्वेन परतन्त्रीकृतानां स्वात्मपरामर्शेऽपि अविश्रान्तानां का कथाऽन्योन्यरूपचिन्तायां येन विरोधः स्यात् ।

तत्र करुणे विश्रान्त्यभावे हेतुमाह **अथवेति** । अथवेत्यव्ययसमुदायो यस्मादित्यर्थे "अथवा श्रेयसि केन तृप्यत" इत्यत्रेव।

**क्षिप्तो हस्तेति** । वहनैः क्षेपो विधूननं भयहेतुकमिति करुणाङ्गम् । उपलालनाप्रवृत्तस्य तु वल्लभस्य करप्रहरणासहनं क्षेपो नायिकान्तरसंपर्कसमुत्थेर्ष्याकोपनिमित्तो विप्रलम्भसूचकः । **त्रिपुररिपुप्रभावातिशयस्येति** । रतिरूपभावस्य प्रेयोऽलङ्कारविषयस्य वाक्यार्थीभूतस्याङ्गिनः । **करुणोऽङ्गमिति** । विप्रलम्भापेक्षया तस्य निकटत्वं महेश्वरप्रभावं प्रति सोपयोगत्वात् ।

ननु 'गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्' इति उक्तन्यायेन करुणश्रृङ्गारयोः परस्परमत्र नाङ्गाङ्गिभावेन भवितव्यमित्यत आह **उक्तं हीति** । **गुणः कृतात्मेति** । अङ्गभूतान्यपि रसान्तराणि स्वविभावादिसामग्र्या स्वावस्थायां यद्यपि लब्धपरिपोषाणि चमत्कुर्वन्ति, तथापि स चमत्कारस्तावत्येव न परितुष्य विश्राम्यति, किं तु चमत्कारान्तरमनुधावति । सर्वत्र चाङ्गाङ्गिभावेऽयमेवोदन्त इति भावः ।

उपसंहरन्नाह **प्राक् प्रतीति** । **रसशब्देनेति** । रसानां स्थायिनो भावा उपचारात् रसशब्देनोक्ताः । सूत्रे रसीकरणयोग्यत्वात् । तेषामङ्गत्वे निर्विरोधत्वमेव, ततो रसानां स्थायिसंचारिभावेनाङ्गाङ्गिताऽपि युक्तैवेति भावः । एतेन "बहूनां समवेतानां रूपं यस्य भवेद् बहु । स मन्तव्यो रसः स्थायी शेषाः संचारिणो मताः ।।" इति मतं स्वीकृतम् ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां बालचित्तानुरञ्जिन्यां दोषदर्शनो नाम सप्तम उल्लासः ।

**सारबोधिनी—क्रामन्त्य इति** । स्थलीरिति कर्मपदम् । सदर्भत्वम् तदास्तरणेन, तद्वत्त्वे नवधूमेन भयेन च बाष्पपतनम् । **उद्यद्विवाहा इवेति** । तत्कालेऽपि भर्तृकरावलम्बनादिसंभवात् । **अग्निमिति** । परितःशब्दयोगे द्वितीया । **न विरोध इति** । परस्परविरुद्धयोरपि सामन्तयोर्नृपतिकार्यसंपादनमिवेत्यर्थः । नन्वन्यपरयोर्विरुद्धैकस्वभावयोः कथं स्वभावत्याग इति दृष्टान्तेन परिहरति **एहीति** । अत्र क्रीडाङ्गत्वेनोपात्तानां विरुद्धस्वभावानामपि आगमनगमनादीनां यथा न विरोधस्तथेहापीत्याह **इत्यत्रेति** । द्वितीयभेदमुदाहरति **क्षिप्त इति** । हस्तावलग्नः क्षिप्त इति योज्यम् । एवमुत्तरत्रापि व्युत्क्रमेण संबन्धः । अवधूतो निराकृतः । **तस्य तु शृङ्गार इति** । अङ्गमिति शेषः । नन्वेवमपि श्रृङ्गारेण परिपुष्टं करुणं प्रधानमेव, न तु प्रभावातिशयेऽङ्गमत आह **तथापीति** । श्रृङ्गारापेक्षया प्रधानत्वेऽपि प्रभावातिशयेऽङ्गत्वमिति भावः । **अथवेति** । प्रथमपक्षे एकस्य द्वयं, परपक्षे विशिष्टवैशिष्टयमिति पक्षयोर्भेदः । गुणो विशेषणम् । संस्कारोऽन्येन परिपुष्टिः । तथा स्वसंस्कारेण । ननु विगलितवेद्यान्तरत्वं रससस्वरूपमत एकदा द्वितीयाभावात् कथं विरोधः, कथं वाङ्गिभावादिकमित्यत आह **प्रागिति** ।

इति सारबोधिन्यां सप्तम उल्लासः ।

FOOT NOTES

१–मुखायेदम् A. २–अत्र साधुत्वज्ञानाभाव: A. B. ३–C reads अत्रसाधुत्वज्ञानाभाव: । ४–तत्सामान्यभावाभावान्न A. ५–A and B read अप्रयुक्तत्वम् । ६–B reads additionally "नापर: । एतत्पद्यकर्तुरेव प्रयोगेण दैवतादेरपि पुंस्त्वादौ प्रयुक्तत्वसम्भवात् । ७–A reads यथायमिति additionally. ८–A and B has this additional reading" निरर्थकमिति । निरर्थकं छन्द:, पूरणमात्रफलकम् । अत्र तत्पदव्यतिरेकप्रयुक्तान्वयाबोधकत्वाभावान्निराकांक्षत्वमेव दूषकताबीजम् । ९–प्रसिद्धार्थस्य शाब्दबोधकं निहतार्थं सामग्रीसाद्गुण्येन प्रागप्रसिद्धस्य प्रतिपत्तौ नायं दोष: A. १०–अपि चात्रानादर: A. B. ११–धर्म-धर्मिणो: A. १२–स्यादेव इदंत्वसमर्थोदाहरणमेव तर्हि कथमवाचक प्रसंगेऽसमर्थोदाहरणमिति चेत् B. १३–ननु वस्तुनि त्रित्वम्, A, B. १४–तदव्याप्ते: A. १५–Bonits this lines १६–ग्राम्यम् A. १७–अथ भवेदिति A. १८–महिमत्वं A. १९–वा प्रप्तत्वा A. २०–न तु तत्सदृशस्येति A. २१–तल्प्रत्ययार्थ: A. २२–तान्तिं ग्लानिं निषेधो A. २३–विधेयत्वाप्रतिपत्ति: ।

———

## अथ अष्टम उल्लासः

एवं दोषानुक्त्वा गुणालङ्कारविवेकमाह

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः ।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥६६॥**

आत्मन एव हि यथा शौर्यादयो नाकारस्य तथा रसस्यैव माधुर्यादयो गुणाः, न वर्णानाम् । क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनात् 'आकार एवास्य शूरः' इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततकृतित्वमात्रेण 'शूरः' इति क्वापि शूरेऽपि मूर्तिलाघवमात्रेण 'अशूरः' इति, अविश्रान्तप्रतीतयो यथा व्यवहरन्ति तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरादिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि, मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादि रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते न तु वर्णमात्राश्रयाः । यथैषां व्यञ्जकत्वं तथोदाहरिष्यते ।

**बालचित्तानुरञ्जनी**—एवं दोषविवेकं विधाय गुणविवेकं निरूपयिष्यन् गुणलक्षणमाह **य इति** । अङ्गिनः शरीरिणः आत्मभूतस्योत्कर्षहेतवो ये धर्मास्ते गुणाः । यदाह "तद[म]र्थमवलम्बन्ते येऽङ्गिनं ते गुणा" इति । अवलम्बितः समवायवृत्त्या वर्त्तमानः । अत्रात्मदृष्टान्तेन शब्दार्थयुगलक्षणं काव्यं शरीरमिव, श्रुतिकटुत्वादयो ये दोषाः श्वित्रादय इव, माधुर्यादयो गुणाः शौर्यादय इव, अनुप्रासोपमालङ्काराः कङ्कणहारादय इव रसादिध्वनिरीत्यैवेति प्रदर्शितमिति द्रष्टव्यम् । ननु रसस्य माधुर्यादयो गुणा इत्यसङ्गतम्, वामनादिभिर्वर्णगुणत्वेन प्रतिपादितत्वाच्च 'मधुरा वर्णा' इति प्रयोगदर्शनादित्यत आह **आत्मन एवेति** । शवशरीरे शौर्याद्यभावाद्यथा आत्मन एव शौर्यादयः तथा रसस्यैव माधुर्यादयो न त्ववयवस्थानीयानां वर्णानामित्यर्थः । तर्हि कथं मधुरा वर्णा इत्यत आह **क्वचिदिति** । अविश्रान्तप्रतीतयः अविचक्षणाः भ्रान्तिवशात् अशूरं शूरं, शूरं वाऽशूरं व्यवहरन्ति यथा तथा रसपर्यन्तविश्रान्तप्रतीतिवन्ध्या वामनादयोऽपि अमधुरान् वर्णान् मधुरान् वर्णयन्तीत्यर्थः । यदि माधुर्यादयो रसधर्माः किमन्तर्गडुभिर्वर्णैरित्यत आह **समुचितैरिति** । यतः शौर्यादेरात्मधर्मत्वनियमः, अतः समुचितैराकारैः शौर्यादयो व्यज्यन्ते तथा वर्णैरपि माधुर्यादयः । यथा शौर्यादय आकारमात्राश्रया न भवन्ति तथा माधुर्यादयोऽपि वर्णाश्रया न भवन्तीत्यर्थः । माधुर्यादीनां व्यञ्जकत्वं कथमित्यत आह **यथैषामिति** । एषां वर्णानाम् । तथैवोदाहरिष्यते ।

**सारबोधिनी**—दोषानुक्त्वेत्यवसरसङ्गतिसूचनम् । अत्र केचित्—गुणालङ्कारयोर्नास्ति भेदः, काव्योत्कर्षकत्वाविशेषादित्याहुः । तान् निराचष्टे **गुणालङ्कारविवेकमिति** । विवेकश्च परस्परवैधर्म्यज्ञाना-

धीन इति तदाह **ये रसस्येति**। अत्र शरीरे आत्मवत् काव्ये प्राधान्येन स्थितस्य रसस्य ये धर्माः साक्षात् तदाश्रिता इत्यर्थः। ननु वामनादयो वर्णादीनामेव धर्मा गुणा इति वदन्ति, तेन तद्धर्मा एव ते कथं रसस्येत्युच्यते, इत्यत आह **अचलेति**। अचलस्थितयः अपृथकस्थितयः, नियतस्थितय इति यावत्। नैयत्यं च रसेन तदुपकारेण च, ये रसं विना नावतिष्ठन्ते, अवस्थिताश्चावश्यं रसमुपकुर्वन्तीत्यर्थः। अत एवानयोर्व्यतिरेकमलङ्कारे वक्ष्यति, एवं च रसोत्कर्षहेतुत्वे सति रसधर्मत्वं गुणलक्षणमित्याहुः। अपरे तु रसस्य धर्मा गुणास्ते चोत्कर्षरूपाः, स्वव्यञ्जकस्य काव्यस्योत्कर्षकाश्च। तदाह **उत्कर्षहेतव इति**। तेन दोषव्यवच्छेदः। उत्कर्षहेतुष्वलङ्कारेष्वतिप्रसङ्गवारणार्थं **अचलस्थितय इति**। अचला नियता स्थितिर्येषां ते तथा रसविशेषनियतविशेषा इत्यर्थः। शृङ्गारादौ वीरादौ च माधुर्यस्य ओजसश्च नियतत्वादलङ्काराणां च सर्वेषां सर्वरसोत्कर्षकत्वात्। नन्वयं स रशनेत्यादावङ्गतां प्राप्तवति शृङ्गारे माधुर्यस्य व्यञ्जकवर्णविरहेण माधुर्यस्य चलस्थितावव्याप्तिरित्यत आह **अङ्गिन इति**। अङ्गिन्येव स्थितिनियमो नत्वङ्ग इति वदन्ति। वामनादिभिर्वर्ण[धर्म]त्वेन गुणानां निरूपणेऽपि अचलस्थितित्वेन रसधर्मत्वं साधितम्। तत्र योग्यं दृष्टान्तमाह **आत्मन एवेति**। अस्य व्यवहारकर्तुः विश्रान्ता विषयादन्यत्राप्रसारिणी तदन्याविश्रान्ता एवं प्रतीतिर्येषाम्, भ्रान्ता इत्यर्थः। अमधुरादिरसाङ्गानां तद्व्यञ्जकत्वेनोपात्तानां उपकरणानामित्यस्याप्ययमेवार्थः। तेषां वर्णानां माधुर्याद्यमाधुर्यादि च व्यवहरन्तीत्यन्वयः।

**रसपर्यन्तेति**। रसस्य पर्यन्ते सीमायां विश्रान्ता तदन्यत्राप्रसारिणी रसमर्यादाग्राहिणी या प्रतीतिस्तया वन्ध्यास्तद्धीनाः। **अत एवेति**। रसनैयत्यादेवेत्यर्थः। **न तु वर्णेति**। अत्रानैयत्यादिति भावः। ननु यद्येवं तदा कथं वर्णादीनां समुचितत्वं कथं वा व्यञ्जकत्वमत आह **यथैषामिति**।

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**

**हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥६७॥**

ये वाचकवाच्यलक्षणाङ्गातिशयमुखेन मुख्यं रसं संभविनमुपकुर्वन्ति ते कण्ठाद्यङ्गानामुत्कर्षाधानद्वारेण शरीरिणोऽपि, उपकारका हारादय इवालङ्काराः। यत्र तु नास्ति रसस्तत्रोक्तिवैचित्र्यमात्रपर्यवसायिनः। क्वचित्तु सन्तमपि नोपकुर्वन्ति।

**बालचित्तानुरञ्जनी**—गुणालङ्कारविवेकस्य वक्तव्यत्वात् तस्य तदुभयस्वरूपपरिज्ञानपूर्वकत्वादकाण्डेऽपि अलङ्कारलक्षणमुपक्षिपति **उपकुर्वन्तीति**। तं अङ्गिरसं सन्तं, न पुनरविद्यमानम्, उपकारापेक्षाया अभावात्, जातुचित् न सर्वदा, 'क्वचित्तु सन्तमपि नोपकुर्वन्ती'ति वक्ष्यमाणत्वात्, संयोगवृत्त्योपकुर्वन्त्यलङ्काराः, न तु गुणवत्समवायवृत्त्या। यदाहुः 'अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवदि'ति श्लोकं व्याकरोति **य इति**। वाचकः शब्दो वाच्योऽर्थः तत्स्वरूपे रसाङ्गे तयोरतिशयनमुखेनोपकुर्वन्ति तेऽलङ्कारा इति संबन्धः। शौर्यादिभिरात्मैवालङ्कार्यः, न त्वचेतनम्। शवशरीरं पतितशरीरं वा कटकादिवत् हास्यावहम्, अनौचित्यात्। इत्थमलङ्कारैरलङ्कार्यो रस एवेत्यर्थः। ननु यत्र रसो नास्ति तत्र किमलङ्काराणां कृत्यमित्याह **यत्र त्विति**। यत्र चित्रकाव्ये स्फुटप्रतीतिको रसो नास्ति तत्र उक्तिवैचित्र्यमात्रविश्रान्ता इत्यर्थः। रसस्य सत्त्वेऽपि कदाचिदलङ्काराणामुपयोगो नास्तीत्याह **क्वचित्त्विति**।

**सारबोधिनी**—अलङ्कारेषूक्तगुणधर्मराहित्यं दर्शयितुमलङ्कारस्वरूपमाह **उपकुर्वन्तीति** । तं रसं जातुचित् कदाचित्, तेनालङ्कारा रसं विना अवतिष्ठन्ते, अवश्यं च नोपकुर्वन्ति । न वा रसं साक्षादिति, द्वारेण । गुणेभ्यो **विलक्षणा एवेति** ध्येयम् । अतिशय उत्कर्षणम् । 'तत्'पदेन अङ्गि-परामर्शः । तदाह **मुख्यमिति** । स तु प्रकृते रस इत्याह **रसमिति** । सन्तमित्यस्यार्थः संभविनमिति । **यत्र त्विति** । वैचित्र्यं शब्दानां सुश्रवत्वबन्धकौशलादि, अर्थानामीषन्मनोहारिता । जातुचिदिति विवृणोति **सन्तमपीत्यादि** । अत्राप्युक्तिवैचित्र्यपर्यवसिताः ।

यथाक्रममुदाहरणानि

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३४१ ॥

इत्यादौ वाचकमुखेन

मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं
प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव ।
हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो
न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥३४२ ॥

इत्यादौ वाच्यमुखेनालङ्कारौ रसमुपकुरुतः ।

**बालचित्तानुरञ्जनी**—रसस्य सतः उपकारकस्थानमुदाहरति **अपसारयेत्यादि** । हे सखे! कर्पूरं दूरीकुरु ! हारं दूरत एव कुरु । कमलैः किम्, मृणालैरलमलम् । बाला दिवानिशमिति वदति । अत्र कोमलानुप्रासरूपोऽलङ्कारो **वाचकमुखेन** शब्दालङ्कारतया विप्रलम्भशृङ्गारात्मनो रसस्योपकारी-त्याह **इत्यादाविति** । वाच्यालङ्कारस्य उपकारकत्वमुदाहरति **मनोराग इति** । मनोरागस्तीव्रं विषमिव सततं प्रसरति । प्रमाथी मनोरागकम्पितोऽग्निश्च निर्धूमं ज्वलति । बलीयान् ज्वर इव इतः प्रत्यङ्गं हिनस्ति । तातो मां त्रातुं न प्रभवति अम्बा च न, भवती च न । अत्र विषमिवेत्यार्थ उपमालङ्कारः ।

**सारबोधिनी**—**यथेति** । उपकारकत्वानुपकारकत्वलक्ष्यप्रदर्शनाय उपक्रमः । तत्र प्रथमं कल्प-माह **अपसारयेति** । घनसारः कर्पूरः । अत्र कोमलया वृत्त्या, अनुप्रासेन शब्दानामलङ्करणं विधाय विप्रलम्भ उत्कृष्यते ।

अर्थोपकारद्वारतामाह **मनोराग इति** । विसर्पति सर्वतः प्रसरति । विधुत उत्तेजितः । न तातः, नन्दनाय मत्प्रतिप्रसवात् । न चाम्बा, सापि तदनुगामिनी । न भवती, पित्रोः संमतेऽर्थे सख्या अकिञ्चित्करत्वात् । माधवानुरक्ताया मालत्या लवङ्गिकां प्रतीयमुक्तिः । अत्र मालोपमया तीव्र-विषादिधर्मं मनोरागे प्रत्याय्य तद्द्वारा विप्रलम्भ उत्कृष्यत इत्यर्थः । नीरसे उक्तिवैचित्र्यं 'शीर्ण-घ्राणाङ्घ्री'त्यादौ सुप्रसिद्धमिति नोदाहृतम् ।

चित्ते विहट्टदि ण टुट्टदि सा गुणेसु सेज्जासु लोट्टदि विसट्टदि दिम्मुहेसु ।
बोलम्मि वट्टदि पवट्टदि कव्वबन्धे झाणे ण टुट्टदि चिरं तरुणी तरट्टी ॥३४३॥

इत्यादौ वाचकमेव ।

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥३४४॥

इत्यादौ वाच्यमेव न तु रसम् । अत्र बिसलता न जीवं रोद्धुं क्षमेति प्रकृताननुगुणोपमा ।

**बालचित्तानुरञ्जनी**—अर्थालङ्कारैरनुपकारमुदाहरति **चित्ते इति** । चित्ते विहट्टदि दुरुत्पाटा भवति । गुणेसु गुणेषु सा न टुट्टदि, पर्यवसानं न प्राप्नोति । सेज्जाइ शय्यायां, लुट्टदि लुठति । दिम्मुहेसु दिङ्मुखेषु विसप्पदि विसर्पति । बोल्लम्मि वचने, वट्टदि वर्त्तते । कव्वबन्धे काव्यबन्धे पवट्टदि प्रवर्तते । झाणे ध्याने ण टुट्टदि न त्रुट्यति । चिरं तरुणी तरट्टी प्रगल्भा । अत्र शब्दालङ्कारेण प्रवर्त्तितेन न श्रृङ्गारस्योपकारः, कथितवर्णानुप्रासत्वात् इत्याह **इत्यादौ वाचकमेवेति** । वाच्यालङ्कारस्यानुपकारकत्वमुदाहरति **मित्र इति** । सूर्ये क्वापि गते सति, मुकुलिते कमलकानने ताम्यति सति, भ्रमरेषु क्रन्दत्सु सत्सु, कान्तसङ्गतां सारसीं अग्रे दृष्ट्वा विरहिणा चक्रवाकेन मृणाललता नास्वादिता, न त्यक्ता । केवलं निर्गच्छतो जीवस्य अर्गलेव वक्त्रे विनिहिता । अत्रोपमालङ्कारोऽर्थालङ्कारः । स च न रसोपकारीत्याह **इत्यादाविति** । [ कथं ? ] वाच्यं नोपकारकमित्याशङ्क्याह **अत्रेति** । न क्षमा, नोचिता । विप्रलम्भश्रृङ्गारे प्राणनिर्गमस्यापि वर्णनीयत्वात् । अत्र प्रकृतस्य रसस्याननुगुणोऽयमुपमालङ्कार इत्यर्थः ।

**सारबोधिनी—चित्त इति** । चिहुट्टदि नखोत्कृतं चर्म चिहुट्टदि इति प्रसिद्धिः । तद्वदाचरति चमत्करोतीति वा । ण खुट्टदि, न हसति शय्यायां लुठति । विकसति दिङ्मुखेषु प्रकाशिता भवति । वचने प्रवर्तते । नैव वचनविषयीभवति प्रवर्तते, काव्यबन्धस्यैव विषयीभवति । ध्याने न त्रुट्यति ध्यानेऽपि सैव विषयीभवति । तरट्टी प्रगल्भा जाता । अत्र सा मम सर्वत्रानुषज्यते इति तात्पर्यम् । इदं विरहिणो नायकस्य वचनम् । वाचकमेवेत्यनेन रसव्यवच्छेदः । अत्रौजोव्यञ्जकस्य परुषानुप्रासस्यातिमधुरे विप्रलम्भेऽनुपकारकत्वात्; प्राकृतस्यौजोगुणप्रधानत्वात् तद्व्यञ्जकत्वेनादोषत्वाच्च ।

**मित्रेति** । मित्रे सूर्य एव मित्रे सुहृदि । बद्धानने मुद्रितपद्म एव मौनिनि । भ्रमरेष्वेव क्रन्दत्सु । अत्र प्रकृते रसे मित्रादिशब्दश्लेषादिमूलातिशयोक्तिसमर्पितः कश्चिदतिशयो न स्फुरेत् । यदि वा स्फुरेत् यतो मित्रस्य सुहृदः प्रतिकर्तुरभावे विरहोद्रेकः समुचित इत्याद्यतिशयः सम्भवतीति तथापि जीवरोध-

कत्वस्य साधर्म्यस्य प्रकृते उपमेये सम्भवाभावेन असम्भवन्त्युपमा अननुगुणा नानुकूल्यमाधत्त इत्यर्थः। अपि च विप्रलम्भे प्राणापगमस्यापि वर्णनीयत्वात् प्रतिबन्धवर्णने तदपकर्षः स्फुट एवोत्यतो नानुगुण्यम्, उक्तिवैचित्र्यं तु करोत्येवेति दिक्।

एष एव च गुणालङ्कारप्रविभागः। एवं च "समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः, ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरिति गड्डलिकाप्रवाहेणैवैषां भेदः" इत्यभिधानमसत्।

**बालचित्तानुरञ्जनी**—अनेनैव प्रकारेण भेदो न प्रकारान्तरेणेति प्रतिपादयितुं निगमयति **एष इति**। समवायवृत्त्यैव गुणालङ्काराणां स्थितिरिति मतं दूषयितुमाह **एवञ्चेति**। दृष्टान्तीकृतानां गुणानां वृत्तिभेदमभ्युपगच्छामः। दार्ष्टान्तिकानां प्रभेदो गतानुगतिकतामात्रप्रयुक्त इति परकीयं मतमसदित्यर्थः। अस्त्विति कामचारे लोट्। उभयेषामलङ्काराणां गुणानाञ्च। गड्डरिका मेषी। प्रयोजनमनतिसन्धाय यस्मिन् मार्गे लगति इतरा अपि मेष्यस्तमेव प्रधानमनुसरन्ति। अयं गड्डरिकाप्रवाह आसीदित्यत्रोक्तिरुक्तैव द्रष्टव्या।

**सारबोधिनी**—आचार्यान्तरोक्तं गुणालङ्कारयोर्भेदकाभिधानं दूषयितुमुपन्यस्यति **एवञ्चेति**। एवं मदुक्तरीत्या भेदे व्यवस्थिते यत्तैरुक्तं समवायसंयोगाभ्यां गुणालङ्कारयोर्भेद इति लौकिकी स्थितिस्तद्वदत्रापि समवायसंयोगकृत एव भेदो भविष्यति गुणालङ्कारयोरिति। तद् दूषयति **ओजः प्रभृतीनामिति**। काव्ये गुणालङ्काराणां शब्दार्थाभ्यां पृथक्सिद्धिराहित्येन संयोगाभावादपृथक्सिद्धत्वेन समवाये सिद्धे दृष्टान्तवैषम्येन न तथात्वमित्यर्थः। इति हेतोः हेतुशून्यवचसां भेदाभिधानं तदसदित्यन्वयः। **गड्डरिकाप्रवाह इति**। भेदकं विना भेदवादात् इदमित्थमिति हेतुशून्यं वचो गड्डरिका, तस्य गुरुगौरवेणानुमोदनं प्रवाहः। यद्वा गड्डरिका मेषी, अविच्छेदेन तदनुगमनं प्रवाहः।

यदप्युक्तं "काव्यशोभायाः कर्तारो धर्मा गुणास्तदतिशयहेतवस्त्वलङ्काराः" इति तदपि न युक्तम्। यतः किं समस्तैर्गुणैः काव्यव्यवहारः, उत कतिपयैः। यदि समस्तैः, तत् कथमसमस्तगुणा गौडी पाञ्चाली च रीतिः काव्यस्यात्मा। अथ कतिपयैः, ततः

अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः ॥३४५॥

इत्यादावोजःप्रभृतिषु गुणेषु सत्सु काव्यव्यवहारप्राप्तिः।

**बालचित्तानुरञ्जनी**—इदानीं वामनालङ्कारनिरूपितं गुणविभागं दूषयितुमनुवदति **यदपीति**। **समस्तगुणानां** काव्यशोभाहेतुत्वे अव्याप्तिमाह **यदीति**। ओजःप्रभृतिकतिपयगुणा गौडी माधुर्यादिकतिपयगुणा पाञ्चालीति तयोः काव्यत्वं न स्यादिति अव्याप्तिरित्यर्थः। द्वितीयमतिव्याप्त्या दूषयति **अथेति**। इत्यादावपि कतिपयगुणसद्भाववर्णन्येव [?]।

**सारबोधिनी**—इदानीं वामनाद्युदीरितं भेदलक्षणं दूषयितुमुपन्यस्यति **यदप्युक्तमिति** । तद्दूषयति **तदपि न युक्तमिति** । तथा च यदि समस्तैर्गुणैस्तदा अव्याप्तिरुतासमस्तैस्तदाऽतिव्याप्तिरित्याह **किं समस्तैरित्यादि** ।

स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनो ।
अस्या रदच्छदरसो न्यक्करोतितरां सुधाम् ॥३४६॥

इत्यादौ विशेषोक्तिव्यतिरेकौ गुणनिरपेक्षौ काव्यव्यवहारस्य प्रवर्तकौ ।

इदानीं गुणानां भेदमाह

**माधुर्यौजःप्रसादाख्यास्त्रयस्ते न पुनर्दश ।**

एषां क्रमेण लक्षणमाह

**आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ॥६८॥**

शृङ्गारे अर्थात् सम्भोगे । द्रुतिर्गलितत्वमिव । श्रव्यत्वं पुनरोजःप्रसादयोरपि ।

**बालचित्तानुरञ्जनी**—अस्या अधररसः सुधामवधीरयतितराम् । अत्र पूर्वार्धे स्वर्गप्राप्तिर्वरवर्णिनीति सामानाधिकरण्योक्तिर्विशेषोक्तिरलङ्कारः । एकगुणहानिकल्पनायां गुणसाम्यदार्ढ्यं विशेषोक्तिरिति वामनेनोक्तत्वात् । द्वितीयार्धे व्यतिरेकालङ्कारः । गुणनिरपेक्षौ वैदर्भीनिर्दिष्टसमस्तगुणनिरपेक्षौ स्फुटप्रकाशमानगुणस्पर्शशून्यावित्युक्तत्वात् । तावपि काव्यस्य शोभातिशयहेतू इत्यर्थः । इदानीं वामनादिभिरुक्तं भेदप्रकारं दूषयितुं स्वमतानुमतं गुणविभागमाह **इदानीमिति** । ते त्रय एव गुणा न पुनर्दशेति वामनादिमतनिराकरणम् । आह्लादकत्वं चित्तस्येति शेषः । द्रुतिर्द्रवः । तत्कारणम्, विप्रलम्भेऽतिशयान्वितं माधुर्यमिति वक्ष्यमाणत्वात् । अत्र शृङ्गारशब्देन संभोग एव गृह्यत इत्याह **अर्थादिति** । ननु अन्तःकरणस्य द्रवहेतुत्वं कथमित्यत आह **द्रुतिरिति** । औपचारिकः प्रयोग इति यावत् । श्रव्यत्वमेव माधुर्यमिति भामहेनोक्तम्, तदसङ्गतम्, अतिव्याप्तेरित्याह **श्रव्यत्वमिति** । न केवलं सम्भोग एव माधुर्यं द्रुतिकारणम् ।

**सारबोधिनी**—एवं गुणलक्षणं दूषयित्वा अलङ्कारलक्षणं दूषयति **स्वर्गप्राप्तिरिति** । अनेन मानुषदेहेन न तु दिव्येन । एतद्देहः स्वर्गप्राप्त्यभावे कारणम्, तस्मिन् सति तदभावात् विशेषोक्तिः, व्यतिरेकश्च स्फुट एव । **गुणनिरपेक्षाविति** । तथा चात्रालङ्कारलक्षणाव्याप्तिः स्यात्तद्यतोऽत्र प्रसादादेरभावात् गुणाहितशोभाया अभावात् तदतिशयाभावः । 'गुणाहितशोभाया अतिशयकर्त्तारो धर्मा अलङ्काराः' इति तन्मते तल्लक्षणात् । ननु प्रसादादेरभावेऽप्यन्यगुणसत्त्वान्नैवमिति चेन्न । गुणसाकल्यस्य विवक्षितत्वात् । वामनमते वैदर्भ्या रीतेरेव काव्यत्वात् । अत्र च काव्यव्यवहारः सकलसहृदयसंवेद्य एव । किं च तत्सत्त्वेऽप्यलङ्कारः तन्नापेक्षते । तन्नैरपेक्ष्येणैवालङ्कारतश्चमत्कारादिति । **माधुर्येत्यादि** । आख्यापदं परमतेन सह संज्ञामात्रेणाभेदसूचकम् । संज्ञायामभेदेऽपि संज्ञिषु परं भेद एवेत्यर्थः । **दशेति** परोक्ताः । तदुक्तम्—

श्लेषः प्रसादः समता माधुर्यं सुकुमारता ।
अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥
इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः ।

नन्वाह्लादो यद्यानन्दस्तदा रसानतिरेकः सर्वरससाधारण्यं च स्यात् तस्य च तद्रूपत्वादित्यत आह **द्रुतिरिति** । इह हि सामाजिकानां चित्तेषु नवरसीजन्यास्तिस्रोऽवस्थाः द्रुतिर्विस्तारो विकासश्चेति । तत्र शृङ्गारकरुणशान्तेभ्यो द्रुतिः, वीरबीभत्सरौद्रेभ्यो विस्तारः, हास्याद्भुतभयानकेभ्यश्च विकास इति । येन हास्ये वदनविकासः, अद्भुते नयनविकासः, भयानके द्रुतापसरणमिति त्रिष्वेव वदननयनगमनेषु प्रसारिता विकास इति । **अर्थादिति** । विप्रलम्भे अतिशयस्य वक्ष्यमाणत्वात् । **श्रव्यत्वमिति** । तेन 'श्रव्यं नातिसमस्तार्थशब्दं मधुरमिष्यत' इति यन्मधुरलक्षणं तदुपेक्षितम् । किं शृङ्गाराश्रितत्वमेवास्य ? नेत्याह **करुण इति** । तन्माधुर्यम् । आतिरेक्ये हेतुमाह **अत्यन्तेति** । अश्रुपातादिहेतुत्वात् ।

**करुणे विप्रलम्भे तच्छान्ते चातिशयान्वितम् ।**

अत्यन्तद्रुतिहेतुत्वात् ।

**दीप्त्यात्मविस्तृतेर्हेतुरोजो वीररसस्थिति ॥६९॥**

चित्तस्य विस्ताररूपदीप्तत्वजनकमोजः ।

**बीभत्सरौद्ररसयोस्तस्याधिक्यं क्रमेण च ।**

वीराद् बीभत्से ततो रौद्रे सातिशयमोजः ।

**शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ॥७०॥**

**व्याप्नोत्यन्यत् प्रसादोऽसौ सर्वत्र विहितस्थितिः ।**

अन्यदिति । व्याप्यमिह चित्तम् । सर्वत्रेति । सर्वेषु रसेषु सर्वासु रचनासु च ।

**बालचित्तानुरञ्जनी**—करुणादावपीत्याह **करुण इति** । तन्माधुर्यं संभोगात् करुणे ततोऽपि विप्रलम्भे ततोऽपि शान्ते अतिशयान्वितमित्यर्थः । ओजो लक्षयति **दीप्तीति** । दीप्त्यात्म यच्चित्तं तस्य विस्तृतिर्विस्तारः तस्या हेतुः । वीरे रसे स्थितिर्यस्य । प्रसादं व्याकरोति । चित्तं तदिह व्याप्यम् अन्यदित्यभिधीयते । सर्वत्र सर्वेषु रसेषु सर्वासु च रचनासु विहिता स्थितिर्यस्य । यदा वीररौद्रादिषु चित्तं व्याप्नोति तदा शुष्केन्धनस्याग्निवत् । अनेन, प्रसादेन ओजसा सह संबन्ध उक्तः । यदा तु शृङ्गार-करुणादिषु, तदा स्वच्छजलवत् इत्यनेन माधुर्येण संप्लव इत्युक्तम् ।

**सारबोधिनी**—**दीप्तीति** । दीप्तिरूपा ज्वलद्रूपा या आत्मनश्चित्तस्य विस्तृतिः तस्या हेतुरित्यर्थः । इदमत्र विधातव्यम् । हास्ये शृङ्गाराङ्गतया माधुर्यं प्रकृष्टम्, विकासधर्मतया ओजोऽपि ।

प्रकृष्टे भयानके भग्नचित्तवृत्तिस्वभावत्वेऽपि विभावस्य दीप्तरसतया ओजः प्रकृष्टं माधुर्यमल्पमिति तयोर्माधुर्यमोजोऽपि वर्तत इति । एवमद्भुतेऽपीति प्राञ्चः । तेन हास्यादित्रये द्वौ द्वौ गुणाविति बोध्यम् । **शुष्केन्धनाग्निवदिति** । प्रसादः स्वच्छता । यदा वीररौद्रादिषु चित्तं व्याप्नोति तदा **शुष्केन्धनाग्निवदिति** । यदा शृङ्गारकरुणादिषु तदा **स्वच्छजलवदिति** । **सर्वेष्वति** । झटिति प्रतीयमानत्वं रसेषु, झटिति प्रत्यायकत्वं रचनासु च । तदुक्तम्--"समर्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति । स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः ।।इति।

**गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता ।।७१।।**

गुणवृत्त्या, उपचारेण । तेषां गुणानाम् । आकारे शौर्यस्येव । कुतस्त्रय एव न दश इत्याह

**केचिदन्तर्भवन्त्येषु दोषत्यागात्परे श्रिताः ।**
**अन्ये भजन्ति दोषत्वं कुत्रचिन्न ततो दश ।।७२।।**

बहूनामपि पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चारोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रितशैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः ।

**बालचित्तानुरञ्जनी**--ननु माधुर्यादिव्यवहारः शब्दार्थयोरेव दृश्यते तत्कथं रसादिविषयमित्यत आह **गुणवृत्त्येति** । अत्राप्युक्तस्यैव दृष्टान्तस्यानुषङ्ग इत्याह **आकार इति** । आत्मगुणोऽपि शौर्यादिः यथोपचारेण शरीरे प्रतीयते तद्वदित्यर्थः । 'न पुनर्दशे'त्युक्तम्, तत्समर्थनार्थं पद्यमवतारयति **कुत इति** । केचिदत्रोक्ता गुणाः केषुचित् उक्तेषु गुणेषु अन्तर्भवन्ति । उपलक्षणं चैतत्, अलङ्कारेऽप्यन्तर्भावस्य वक्ष्यमाणत्वात् । केचिदौचित्यमात्रपर्यवसिता इत्याद्यनुसंधेयम् । परे इतरगुणा दोषाणां लिखितपठितानां परित्यागात् पारिशेष्येण पर्यवसितदोषाभावरूपत्वेनैव स्वीकृताः । अन्ये गुणतया अभिमन्यमानाश्च । केचित्तु दोषत्वं भजन्ते । कुत्रचिदुदाहरणविशेषे । अतो न दश, अपि तु त्रय एवेत्यर्थः । वामनादिभिरुक्ताः, 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः'।। इत्यादिना । ते त्रिधा भवन्ति । केचित् त्रिष्वेवान्तर्भूताः । केचित् दोषाभावरूपत्वेनाश्रिताः । केचित् दोषरूपा इति । तत्रान्तर्भावं तावत् दर्शयति **बहूनामिति** ।

यत्रैकपदवद् भान्ति पदानि सुबहून्यपि ।
अनपेक्षितसन्धीनि स श्लेषः परमो गुणः ।।
आरोहन्त्यवरोहन्ति क्रमेण पदानि यत्र सः ।
समाधिर्नाम स गुणः पूता येन सरस्वती ।।

विकटत्वञ्च बन्धस्य कथयन्ति उदारताम् ।
शैथिल्यमोजसा मिश्रं प्रसादं च प्रवक्ष्यति ॥

इत्यादि लक्षणलक्षितानां श्लेषादीनामोजस्यन्तर्भावः दीप्त्यात्मविस्तृतिहेतुत्वादित्यर्थः ।

**सारबोधिनी**--ननु यदि ते न शब्दार्थयोस्तत्कथं काव्यलक्षणे सगुणावित्युक्तवानसीत्यत आह **गुणवृत्त्येति**। तद्व्यञ्जकत्वेन तद्वत्त्वमुपचर्यत इति भावः । **केचिदिति** । अन्तर्भवन्ति एतल्लक्षणे क्रोडीकृतत्वादिति शेषः। ये शब्दगुणा दश ते त्रिधा व्यवतिष्ठन्ते । केचित् त्रिष्वेवान्तर्भूताः । केचित् दोषाभावरूपेणाश्रिताः । केचित् दोषरूपा इति । तत्रान्तर्भावं दर्शयति **तथाहीत्यादि** । एकवद्भासनं संधि-सौष्ठवादेकस्थानीयवर्णविन्यासात् । यथा—

उन्मज्जज्जलकुञ्जरेन्द्रबहलास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः ।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायं तथा
मन्ये प्रेङ्खदसंख्यशङ्खधवला वेलेयमुज्जृम्भते ॥

इत्यत्र गाढबन्धतया व्यक्तमेवौजो वर्णनीयम् । अत एवोक्तम्--"शिलष्टमस्पष्टशैथिल्यमि"ति । आरोहो गाढता, अवरोहः शैथिल्यम्, तयोः क्रमः । क्रमेणातन्निबन्धः, आरोहपूर्वकोऽवरोहस्तत्पूर्वक आरोहो वा । यथा--

चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥

इत्यत्र सञ्चूर्णितान्ते आरोहः, सुयोधनान्ते अवरोहः पुनस्तवान्ते पूर्वः, भीमेत्यन्ते परः । अत्रापि गाढबन्धत्वं व्यक्तमेव । तत्सम्बन्धेनैव शैथिल्यस्यापि गाढत्वात् गुणत्वम् । विकटत्वं विच्छेदात् पदानां नृत्यत्प्रायत्वम् । यथा—

"स्वचरणविनिविष्टैर्नूपुरैर्नर्तकीनां झटिति रणितमासीत् तत्र चित्रं कलं च ।" इति

**ओजोमिश्रितेत्यादि** । क्रमनियमाभावात् समाधितो भेदः । यथा—

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चलति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥

अत्र यो य इत्यत्र शैथिल्यम् । शस्त्रमित्योजः, पुनर्बिभर्तीत्यत्र पूर्वम् । अन्यवर्णद्वये परम् । एवमुत्तरत्रापि । **तेषामिति** । तेषां गाढबन्धतया दीप्त्यात्मविस्तृतिहेतुत्वात् । ओजसि ओजःप्रतिपाद्ये व्यञ्जकशब्दार्थविशेषेऽन्तर्भाव इति । एवञ्च तेषु भाक्त ओजोव्यवहार इति भावः ।

पृथक्पदत्वरूपं माधुर्यं भङ्ग्या साक्षादुपात्तम् । प्रसादेनार्थव्यक्तिर्गृहीता । मार्गाभेदरूपा समता क्वचिद्दोषः । तथाहि 'मातङ्गाः किमु वल्गितैः' इत्यादौ सिंहाभिधाने मसृणमार्गत्यागो गुणः । कष्टत्वग्राम्यत्वयोर्दुष्टताभिधानात्तन्निराकरणेनापारुष्यरूपं सौकुमार्यम् औज्ज्वल्यरूपा कान्तिश्च स्वीकृता । एवं न दश शब्दगुणाः ।

**बालचित्तानुरञ्जनी**--'बंधे पृथक्पदत्वं च माधुर्यमुदितं बुधैः' इत्यादिना माधुर्यमङ्गीकृतमित्याह **पृथगिति** । साक्षादुपात्तं कण्ठेनोक्तमित्यर्थः । न त्वाह्लादकत्वं माधुर्यमिति यौष्माकीणं लक्षणीयम् । वामनीयं तु पृथक्पदत्वमिति । कथं तेन तस्य साक्षादुपादानत्वमित्यत आह **भङ्ग्येति** । पर्यायत्वेनेत्यर्थः । पृथक्पदत्वनिबन्धनेऽपि कश्चिदाह्लादोऽस्तीति मतान्तरं माधुर्यानुप्रवेशीति भावः । "यत्रार्थव्यक्तिहेतुत्वात् सोऽर्थव्यक्तिः स्मृतो गुण" इति लक्षिता अर्थव्यक्तिः प्रसादेऽन्तर्भूतेत्याह **प्रसादेनेति** । गृहीता सङ्गृहीता । द्वितीयमाह **मार्गेति** । "प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः । दुर्बन्धो दुर्विभावश्च समतेति गुणो मतः ।" इत्यादिलक्षणलक्षिता समता क्वचिद्दोषः, तत्त्यागो गुण इत्यर्थः । तदुदाहरति **तथाहीति** । अत्र मार्गभिदस्यैव रसावहत्वात् । मसृणस्यारब्धस्य यस्त्यागः स प्रत्युत गुण एव । साहसत्वस्य सिंहस्य वाच्यत्वादिति भावः । तृतीयमाह **कष्टत्वेति** । "बन्धस्याजरठत्वञ्च सौकुमार्यमिति स्मृतम् । औज्ज्वल्यं कान्तिरित्याहुः" इत्यादि लक्षणलक्षिते सौकुमार्यकान्ती कटुत्वग्राम्यत्वयोः निराकरणात् स्वीकृते इत्यर्थः । निगमयति **एवमिति** । उक्तप्रकारेण शब्दगुणा न दश । किन्तु त्रय एवेत्यर्थः ।

**सारबोधिनी**--**पृथक्पदत्वमिति** । पृथक् पदानि यस्य स पृथक्पदस्तस्य भावस्तत्त्वम् । तदुक्तं साहित्यदर्पणे "माधुर्यव्यञ्जकत्वं यदसमासस्य वर्णितम् । पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।।" इति [८।१२] अथवा भङ्ग्या पर्यायेणेत्यर्थः, तथा च माधुर्यव्यञ्जके औपचारिको माधुर्यव्यवहार इति । प्रसादाख्यगुणेन तद्व्यञ्जकेन यत्र झटित्यर्थप्रतीतिहेतुत्वं स गुणोऽर्थव्यक्तिस्तस्य प्रसादेऽन्तर्भाव इत्यर्थः, तद्रूपत्वात् तस्येत्याह **प्रसादेनेत्यादि** । तद्व्यञ्जकवर्णेन तद्व्यवहार इत्यर्थः । गुणस्य दोषत्वं वैचित्र्यावहमिति विदितचरमपि पूर्वं व्याचष्टे **मार्गभेद इति** । यया रीत्योपक्रमस्तया रीत्या समापनं मार्गभेदः । तस्य दोषत्वं दर्शयति **मातङ्गा इति** । अत्र मसृणवर्णैरुपक्रमः । सिंहाभिधानेऽपि यदि तथैव स्यात् तदावक्तृवाच्यप्रबन्धानामौचित्येन यद्रचनादीनामौचित्यं तद् भज्येत । प्रत्युत तत्र मार्गभेदे गुणत्वम् तद्दर्शयति **सिंहाभिधान इति** । कोपाटोपेत्यादौ मसृणवर्णत्यागो गुणः । मसृणाः कोमलाः । सिंहापेक्षया मृदुत्वेन मातङ्गादीनां मृदुभिरेव वर्णैरुपक्रमः । सिंहे तु कोपसंबन्धात् त्यागः समुचित इति । अभिन्नाया रीतेरुपयोगस्तु वृत्त्यनुप्रासालङ्कारान्तर्भावेनेत्यवधेयम् । दोषाभावत्वेन सङ्ग्रहणमाह **कष्टत्वेत्यादि** । श्रुतिकटुत्वं कष्टत्वम् । अपारुष्यं परुषवर्णाभावः । हालिकादिसाधारणपदविन्यासवैपरीत्येनालौकिकशोभाशालित्वमौज्ज्वल्यम् ।

'पदार्थे वाक्यरचनं वाक्यार्थे च पदाभिधा ।

प्रौढिर्व्याससमासौ च साभिप्रायत्वमस्य च ।।'

इति या प्रौढिः, ओज इत्युक्तं तद् वैचित्र्यमात्रम् न गुणः। तदभावेऽपि काव्यव्यवहारप्रवृत्तेः। अपुष्टार्थत्वाधिकपदत्वानवीकृतत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यरूपं सौकुमार्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्यलङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा अर्थव्यक्तिः, दीप्तरसत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि विचित्रत्वमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं न पुनर्गुणः। कः खल्वनुन्मत्तोऽन्यस्य प्रस्तावेऽन्यदभिदध्यात्। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत् कथं काव्यमित्यर्थदृष्टिरूपः समाधिरपि न गुणः।

**बालचित्तानुरञ्जनी**—एवं शब्दगुणानन्तर्भाव्यार्थगुणानप्यन्तर्भावयति **पदार्थ इति**। साभिप्रायत्वमस्य चेति पद्यशेषः। पदार्थे वाक्यरचनं यथा—

लोचनेनैव जानन्ति लोके ये केचन ध्वनिम्।
भुजङ्गा एव ते किं तन्मुग्धे द्वारि भृशन्तु ते॥
प्रष्टव्योऽयं प्रणयकलहे स्पष्टमर्थः सुधांशु-
रित्यालापो रहसि शिवयोः पेशलत्वायतां नः॥

अत्र कपोलस्थलेन तमोलग्नचन्द्रलेखामुद्रा नखक्षतशङ्कया क्षीयत इति वाक्यार्थज्ञानमिति पदमभिहितम् [?]। एवमन्यत्राप्युदाहर्तव्या। प्रौढेर्गुणत्वं दूषयति **या प्रौढिरिति**। वैचित्र्यमात्रत्वमेवोपपादयति **तदभावेऽपीति**। यदभावे काव्यव्यवहारस्यैव विसंवादः। स गुण इत्यङ्गीकारादिति भावः। आद्यदोषपञ्चमनिरासेन प्रौढिदोषस्य[?]। इत्याह **अपुष्टेति**। विशेषणानां यत् साभिप्रायरूपं पुष्टार्थत्वं [तत्-] परिहारादाक्षिप्यते। एवं सर्वत्र द्रष्टव्यम्। अर्थव्यक्तिकान्तिरूपगुणद्वयस्वीकारमाह **अभिधेति**।

मन्दाकिन्याः पयसि भगवान् क्लृप्तनित्याभिषेको
बिभ्रद् दोल्लातटभुवि जटाः शीकरानुद्वमन्तीः।
रेखामिन्दोर्भुजगवलयं तस्य शार्दूलकान्तिं
महामस्यामपि परिजनान् श्रद्धधानान् पुनातु [?]॥

इत्यत्र या अर्थव्यक्तिः सा स्वभावोक्त्यलङ्कारेण विषयापद्वारा[?] स्वीकृतप्राया, उभयोरेकविषयत्वात्।

भानैरन्तः शबलितभुवः स्पष्टदृष्टैः प्रसत्या
हंसद्वन्द्वः सविधपुलिनादादरेणाजगाम ।
मन्दोल्लासे महति ललितानुद्वमन्तस्तरङ्गा-
नाश्लिष्यन्ते कथमपि मया नर्मदायाः प्रवाहाः[?] ॥

इत्यत्र दीप्तरसाकारा कान्ती रसध्वनिना सूचिता ।

क्रीडावल्ये कुसुमपरिकरे चामराणां च पार्श्वे
वैलक्षण्याकारशाली विवलितनृपनः स्मेरवक्त्रोविचित्रा ।
चूडालङ्कारमिह हस्तिविगलितं निह्नुतं हैमवत्या
नृत्यान्ते दत्त पुनरपि शिरसि स्थापयित्वा पुनातु[?] ॥

अत्र दीप्तरसाकारा कान्तिर्गुणीभूतव्यङ्ग्येन सङ्गृहीतेत्यर्थः । स्वरूपवर्णनपूर्वकं तस्य गुणत्व-मेव नास्तीत्याह **क्रमेति** । क्रमस्य कौटिल्यं अतिक्रमः । तस्यानुल्बणत्वमस्पष्टत्वं, तत्रोपपत्तिर्युक्तिः तस्या योगः सद्भावः तद्रूपा या घटना तदात्मा श्लेष इत्यर्थः । अस्योदाहरणं दृष्ट्वैकासनेत्यादि **पूर्वमुक्तम्** । अत्र क्रमकौटिल्यरूपोऽतिक्रमोऽस्ति । पिहितनयनामतिक्रम्यान्यस्याश्चुम्बनादतिक्रमः । अतिक्रमस्यास्पष्ट-त्वमप्यस्ति । पिहितनयनया अज्ञानात् । एवं कृतेऽनया न ज्ञास्यत इत्युपपत्तिरप्यस्ति । अथवा क्रमस्य कौटिल्यञ्च अनुल्बणत्वं च तेषां चतुर्णां घटनात्मा श्लेष इति । अत्रापि इदमेवोदाहरणम् । एवंविधं श्लेषं विनापि काव्यव्यवहारदर्शनात् । श्लेषो वैचित्र्यमात्रं न गुण इत्यर्थः । समताया दोषाभावरूपत्वमाह **अवैषम्येति** । वर्णनीयत्वेन प्रस्तुतस्य यावत् समाप्तिः तावत् तथैव वर्णनमवैषम्यम् ।

यत्सत्यं वद बुद्बुदेन किमयं वज्रोपलः स्पर्धते
पिच्छास्य प्रतिगर्जितुं सुरधनुर्लेखा न किं लज्जते ।
खद्योतेन नखम्पचस्य खदिरांगारासकोमत्सरा
धिवक्षद्दश्यमिमामिमरकवयता पापीयसी प्रेयसी[?]॥

इत्यत्र यदवैषम्यलक्षणं साम्यं तस्य दोषाभावरूपत्वम् । न गुणत्वमित्यर्थः । समाधेरपि गुणत्वा-भावमाह **अर्थेति** । अर्थदृष्टिः समाधिरिति वामनसूत्रम् । तत्रायोनिरन्यच्छायायोनिरित्यर्थो द्विविधः । तत्रा-द्यो यथा "आमेखलं सञ्चरतां घनानामि"त्यादि हिमवद्वर्णना । द्वितीयो यथा

यत्र प्रियाणामभिसारहेतो रथ्याः प्रकाशघाते [हानेरिव ?] साम्यसूथाः ।
उद्यत्पयोहीनसुमेरुसानून् सिद्धाङ्गनाः सस्पृहमाश्रयन्ते [?] ॥

इति मेरुवर्णनम् । उभयदर्शनाभावे काव्यमेव न प्रवर्त्तत इति । समाधिर्न गुणः ।

**सारबोधिनी**—अर्थगुणानपि दूषयति **पदार्थ इत्यादि** । एकपदार्थस्य बहुभिः पदैर्बहूनां च पदार्था-नामेकेनाभिधानं पदार्थे वाक्यरचनम् वाक्यार्थे च पदाभिधा । क्रमेणोदाह्रियते । चन्द्र इत्येकपदार्थे 'अथ

नयनसमुत्थं ज्योतिरि'ति । द्वितीयं यथा, 'कान्तार्थिनी तु या याति सङ्केतं साभिसारिके'त बहुषु पदार्थेषु अभिसारिकारूपपदाभिधानम् । एकवाक्यार्थस्य अनेकवाक्येन प्रतिपादनं व्यासः । तथा अनेकवाक्यार्थस्य एकेन प्रत्यायनं समासः । क्रमेण यथा

अयं नानाकारो भवति सुखदुःखव्यतिकरः
सुखं वा दुःखं वा भवति न भवत्येव च ततः ।
पुनस्तस्मादूर्ध्वं भवति सुखदुःखं किमपि त-
त्पुनस्तस्मादूर्ध्वं भवति न च दुखं न च सुखम् ॥

अत्रादृष्टवैचित्र्यात् सुखदुःखवैचित्र्यमित्येकवाक्यार्थोऽनेकवाक्येन प्रपञ्चित इति व्यासः । तथा "ते हिमालये"त्यादौ एकवाक्ये बहुवाक्यार्थनिबन्धात् समासः । प्रौढिः प्रतिपादनवैचित्र्यम् तदेवौज इत्युक्तं वामनादिभिः । उक्तिवैचित्र्यं सौष्ठवम् । गुणत्वाभावे हेतुमाह **तदभावेऽपीति** । **अपुष्टे-त्यादि** । साभिप्रायत्वादीनामपुष्टार्थत्वविरहाद्यात्मकत्वेन तेषामपुष्टार्थत्वादीनां त्यागात् साभिप्रायत्वादीना-माश्रयणमित्यर्थः । अर्थवैमल्यं यावदर्थपदता । यथा काञ्चीपदम् न तु 'काञ्चीगुणस्थानमि'ति । एकस्यै-वार्थस्य भङ्ग्यन्तरेण पुनः कथनमुक्तिवैचित्र्यम् । यथा "यदि दहत्यनल' इत्यादौ ।

अकाण्डे शोकदायिताभावोऽपारुष्यम् । यथा मृते 'यशःशेष' इति । अग्राम्यत्वं वाचि वैदग्धी । यथा 'कामं कन्दर्पचण्डालो मयि वामाक्षि निर्दयः । त्वयि निर्मत्सरो दिष्टचे'त्यत्र स्वीकृतानीति । तेषां तदनन्यत्वात् । वस्तुनो वर्णनीयस्य डिम्भादेः स्वभावोऽसाधारणं रूपं, तस्य स्फुटत्वं वर्णनीयव्यक्तीकरणम्– यथा 'पारावतः परिभ्रम्य रिरंसुश्चुम्बति प्रियामि'त्यत्र । **दीप्तेति** । दीप्तरसत्वं झटिति प्रतीयमानरस-कत्वम् । ध्वनिगुणीभूतव्यङ्ग्याभ्यां रसपदस्य प्रत्येकमन्वयः । गुणाश्रयस्य न गुणत्वमिति भावः ।

**क्रमेत्यादि** । क्रमः क्रियापरम्परा । कौटिल्यं विदग्धचेष्टितम् । अनुल्बणत्वमस्फुटत्वम् । उपपत्तिः उपपादकयुक्तिविन्यास एषां योगः संबलनम्, स एव रूपं यस्या घटनायास्तद्रूपः श्लेषः । यथा––

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा–
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसा–
मन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥

इत्यत्र दर्शनादयः क्रियाः । पश्चादागत्य नयनपिधानं विदग्धचेष्टितम् । अस्य चेष्टितस्य लोक-स्थाने दर्शनात् अस्फुटत्वं तस्य एकासनसंस्थितिरित्युपपादकयुक्तिः । विचित्रत्वमात्रमिति कवेर्वैदग्ध्य-प्रतिपादनादिति शेषः । अनन्यसाधारणरसोपकारित्वविरहात्तथाप्रतिसन्धानेनास्वादव्यवधानानुगुणत्वम् । अवैषम्यं प्रक्रमाभेदः । यथा 'उदेति सविता ताम्र' इत्यादौ । प्रस्तावभङ्गेन न परं रसो हीयते कविरप्यपरा-ध्यतीत्याह **अनुन्मत्त इति** । **अर्थस्येति** । तदेकप्रतिभातोऽर्थोऽयोनिः अन्यवर्णनमुपजीव्य वर्णितोऽन्यच्छाया-योनिः । क्रमेण यथा, "सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम् ।" इत्यादौ । द्वितीयो यथा–

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥

इति च । हूणो म्लेच्छविशेषः । स्वभावादति गौरो मदरक्तः । सद्यः श्मश्रुपाटेन व्यक्तरोमकूपस्तच्चिबुकतुल्यत्वेन नारङ्गस्य वर्णनं नान्येन कृतमित्ययोनिः । परत्र नयननीलोत्पलयोः सादृश्यमन्येनापि वर्णितमित्यन्यच्छायायोनिः । **यदीति** । तेन काव्यनिर्वाहहेतोरर्थदृष्टेर्न गुणत्वमिति भावः ।

**तेन नार्थगुणा वाच्याः**

वाच्याः वक्तव्याः ।

**प्रोक्ताः शब्दगुणाश्च ये ।**
**वर्णाः समासो रचना तेषां व्यञ्जकतामिताः ॥ ७३ ॥**

के कस्य इत्याह

**मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।**
**अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथा ॥ ७४ ॥**

टठडढवर्जिताः कादयो मान्ताः शिरसि निजवर्गान्त्ययुक्ताः, तथा रेफणकारौ ह्रस्वान्तरिताविति वर्णाः समासाभावो मध्यमः समासो वेति समासः, तथा माधुर्यवती पदान्तरयोगेन रचना माधुर्यस्य व्यञ्जिका ।

**बालचित्तानुरञ्जनी**—उक्तमर्थमर्थगुणानभिधाय लक्षणमुपसंहरति **तेनेति** ।

राजा भोजो गुणानाह विंशतिं चतुरश्च यान् ।
वामनो दश तान् वाग्मी तत्र त्रीनेव भामहः ॥

इत्युक्तरीत्या अर्थगुणा न वाच्याः । उक्तप्रकारेण शब्दगुणत्रयेणैव गुणान्तराणामुत्पत्तिसंभवादिति भावः । उक्तानां माधुर्यादिशब्दगुणानामभिव्यञ्जकाः क इत्याकाङ्क्षायामाह **प्रोक्ता इति** । माधुर्यौजःप्रसादाख्या ये गुणा उक्ताः तेषां वर्णाः समासाः व्यञ्जकत्वं प्राप्ता इत्यर्थः । कस्य गुणस्य के वर्णादयोऽभिव्यञ्जकाः, इत्याकाङ्क्षोत्तरेण पद्यमवतारयति **क इति** । वृत्तिः समासस्तस्याभावः । अवृत्तिः दीर्घसमासं विहाय मध्यमवर्त्तिनी वृत्तिर्वा । घटना रचनाः । **तथेति** । माधुर्यानुगुणपदान्तरयोग इति शेषः । पद्यं व्याकरोति **रणाविति** । णकारस्याङ्गीकाराट्टवर्णचतुष्टयनिषेधः । स्पर्शा इत्यस्य व्याख्यानं कादय इति । रचना माधुर्यवती संधिसौष्ठववतीत्यर्थः ।

**सारबोधिनी**—न वक्तव्या न वक्तुं योग्या इत्यर्थः । तर्हि कथं माधुर्यादीनां शब्दगुणत्वव्यवहार इत्यत्र आह **प्रोक्ता इति** । उपचारेणेति शेषः । न तु व्यञ्जकत्वेन तद्वत्त्वमुक्तम् । तत्र के व्यञ्जकाः कथं वा

व्यञ्जकत्वमित्याह **वर्णा इति**। इता गता इत्यर्थः। **मूर्ध्नीति**। स्पर्शा वर्गाः। **समासाभाव इति**। अत्राभावपदं ईषदर्थकम्। तथा चाल्पः समास इति बोध्यम्। तेन वर्णाः समासो रचनेत्यनेन त्वविरोधः। तथेत्यस्यार्थमाह **माधुर्यवतीति**। **पदान्तरयोग इति**। यथा अलङ्कुविरत्यत्र पदयोः संधौ मधुरवर्णोत्पत्तिः।

उदाहरणम्

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तनानि ॥३४७॥

**बालचित्तानुरञ्जनी**—उदाहरति **अनङ्गेति**। अनङ्गरङ्गप्रतिमं आनताङ्ग्याः तदङ्गम् भङ्गीभिः वलिभिः तथाऽङ्गीकृतं यथा एताः भङ्ग्यः यूनां मनांसि शान्तापरचिन्तनानि सहसा कुर्वन्ति। अत्र गकारतकारौ स्पर्शविशेषौ, स्वशिरसि ङकारनकारौ धारयत इति तयोर्माधुर्यव्यञ्जकत्वमित्यर्थः।

**सारबोधिनी—अङ्गेति**। तदनुभवैकगोचरं अङ्गीकृतं स्वयमादरेण गृहीतम्, यथाऽङ्गीकारप्रकारेणैता भङ्ग्यः।

**योग आद्यतृतीयाभ्यामन्त्ययो रेण तुल्ययोः।**
**टादिः शषौ वृत्तिदैर्घ्यं गुम्फ उद्धत ओजसि ॥७५॥**

वर्गप्रथमतृतीयाभ्यामन्त्ययोः, द्वितीयचतुर्थयोः, रेफेण, अध उपरि उभयत्र वा यस्य कस्यचित् तुल्ययोः, तेन तस्यैव संबन्धः टवर्गोऽर्थात् णकारवर्जः शकारषकारौ दीर्घसमासः, विकटा संघटना, ओजसः।

उदाहरणम्—मूर्ध्नामुद्वृत्तकृत्तेत्यादि ॥३४८॥

**बालचित्तानुरञ्जनी**—ओजोगुणव्यञ्जकत्वमाह **योग इति**। वर्गेषु आद्यः प्रथमो **वर्णः** ककारादिः, पश्चात् तृतीयो गकारादिः, अन्त्ययोर्योगो नैरन्तर्यम्। अत्यन्तश्च स्वस्वापेक्षायां प्रथमः स्यात्। शकारादिर्द्वितीयः स्यात् न वकारादिः[?] किञ्च रेफेण योगः स्यात् निर्देशाभावात् वर्णस्य अधः उपरि उत यस्य कस्यचिदक्षरस्य रेफेण योगः न पुनर्नियतस्य। किं च तुल्ययोगः नेह स्यात्। प्रयत्नसादृश्यं तुल्यत्वम्। किं तर्हि तदाकारेण केनचिद् योग इत्याशङ्क्य व्याकरोति **वर्गेति**। माधुर्ये लघोर्णकारस्योपयोगात्तद्वर्गष्टवर्गः स्वीकर्तव्यः इत्याह **टवर्ग इति**। शकारषकारौ तालव्यमूर्धन्यौ ऊष्माणौ। उदाहरति **मूर्ध्नामिति**। अत्र तवर्गस्य तृतीयेण दकारेण तच्चतुर्थस्य धकारस्य योगः। मिथ्येत्यशतवर्गप्रथमेन[?] तकारेण द्वितीयस्य धकारस्य मूर्ध्नामिति रेफेणादौ योगः। अन्ध्रीत्युपदि(?) उद्धुरेति तकारस्य तकारेणैव योगः। ह्रासपिशुनशब्दयोः शकारः, दोष्णामिति षकारः, "पट्टुरटत्क्रूरधारः कुठार" इत्यत्र टवर्गः। समासदैर्घ्ये सङ्घटनौद्धत्यम्।

**सारबोधिनी—वर्गप्रथमेत्यादि** । वर्गस्यैव प्रकृतत्वात् । तुल्यपदस्याभेदाभिधानतात्पर्यमाह **तेन तस्येति** ।

**श्रुतिमात्रेण शब्दात्तु येनार्थप्रत्ययो भवेत् ।**

**साधारणः समग्राणां स प्रसादो गुणो मतः ॥७६॥**

समग्राणां रसानां सङ्घटनानाञ्च । उदाहरणम्

परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥३४९॥

**बालचित्तानुरञ्जनी**—प्रसादस्याभिव्यञ्जकमाह **श्रुतीति** । श्रुतमात्रवर्णाः अर्थप्रतीतिहेतवः प्रसादस्य व्यञ्जका इत्यर्थः । उदाहरति **परीति** । पीनस्तनजघनसङ्गात् उभयतः परिम्लानम् । कृशस्य मध्यस्य । अतः परिमिलनं अप्राप्य हरितम् । श्लथभुजलताक्षेपवलनैः व्यस्तन्यासमिदं नलिनीपत्रशयनं कृशाङ्ग्याः सन्तापं वदति । अत्र शब्दानामहमहमिकया अर्थं धन्यांधनौत्सुक्यात् [ध्वननौ०?] प्रसादः । 'सङ्गात् कृशाङ्ग्या' इत्यादौ माधुर्योचिता वर्णाः, मध्यमः समासः, सङ्घटना चानुद्धता ।

**सारबोधिनी**—प्रसादाभिव्यञ्जकमाह **श्रुतिमात्रेणेति** । श्रुतिमात्रेण वर्णादयोऽर्थप्रतीतिहेतवः सन्तः प्रसादव्यञ्जका इत्यर्थः । **परिम्लानमिति** । उभयतः स्तनजघनस्थानयोः शयनाय दत्तः शयनमध्यभागः । तनोः क्षीणस्य । परिम्लानमामर्दनम् । न्यासो रचना । व्यस्तं विपरीतम् । आक्षेपोऽभिघातः, स च श्लथः शिथिलः अबलप्रयोज्यत्वात् तेन जातानि वलनानि उद्वर्तनानि ।

यद्यपि गुणपरतन्त्राः सङ्घटनादयस्तथापि

**वक्तृवाच्यप्रबन्धानामौचित्येन क्वचित् क्वचित् ।**

**रचनावृत्तिवर्णानामन्यथात्वमपीष्यते ॥७७॥**

क्वचिद्वाच्यप्रबन्धानपेक्षया वक्त्रौचित्यादेव रचनादयः । यथा

मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसङ्घट्टचण्डः ।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽसौ ॥३५०॥

अत्र हि न वाच्यं क्रोधादिव्यञ्जकम् । अभिनेयार्थं च काव्यमिति तत्प्रातिकूला उद्धता रचनादयः । वक्ता चात्र भीमसेनः ।

**बालचित्तानुरञ्जनी**—ननु सङ्घटनानां गुणव्यञ्जकत्वेन तदधीनत्वं युज्यते क्वचित्तु स्वातन्त्र्यमपि दृश्यते तत्कथं घटत इत्यत आह **यद्यपीति**। उपाधिवशात् क्वचित् एतेषां अन्यथात्वं गुणपरतन्त्रत्वाभाव उचितमित्यर्थः। वक्त्रौचित्यादन्यथात्वमुदाहरति **क्वचिदिति**। मन्थेन आयस्तं यदर्णवाम्भः तस्य प्लुत्या कुहरेषु रन्ध्रेषु चलन् यो मन्दरः तस्य शब्दवत् धीरः गम्भीरः। कोणैः सह ये आघाताः तेषु सत्सु गर्जन्तः प्रलयकाले घनाः मेघाः तेषां घटाः समूहाः। अन्योन्यसंघट्ट इव चण्डः। कृष्णायाः द्रौपद्याः, क्रोधस्याग्रदूतः, कुरुकुलस्य निधने उत्पातनिर्घातवातः। अस्मत्सिंहनादस्य प्रतिध्वनेः सखा अयं दुन्दुभिः केन ताडितः। अत्र वाच्यनिरपेक्षत्वं दर्शयति **अत्रेति**। प्रश्नरूपं वाच्यं क्रोधादिव्यञ्जकं यतो न भवति, अतः सङ्घटनादीनां स्वातन्त्र्यमित्यर्थः। प्रबन्धानपेक्षित्वं च दर्शयति **अभिनेयार्थमिति**। अभिनेयार्थे हि नाटकादौ उद्धतरचनादयो नेष्यन्ते किन्तु तत्प्रतिकूला उद्धता रचनादयः वक्त्रौचित्यादेव संभवन्तीत्यर्थः। कथं तर्हि तेषामौचित्यमत्रेत्यत आह **वक्त्रेति**। भीमसेनस्य उद्धतवक्तृत्वात्तत्रोचिता इति भावः।

**सारबोधिनी**—प्रतिप्रसवमाह **यद्यपीत्यादि**। गुणपरतन्त्राः तद्व्यञ्जनायैव निर्मातव्याः। **क्वचित् क्वचिदिति**। तेनामीषां गुणव्यञ्जकत्वनियमे वक्त्राद्यौचित्यबाधकायोग एवौत्सर्गिकः, न तु व्यभिचारेण तद्व्यञ्जकत्वमिति भावः। वक्ता कविस्तन्निबन्धश्च तयोश्च रसादिवृत्त्यादिधीरोदात्तत्वादिभेदाद् बहुविधमौचित्यम्। वाच्यं वर्णनीयम्। प्रबन्धो नाटकादिः। **मन्थायस्तेति**। मन्थो मन्थनं आयस्तमान्दोलितम्, प्लुतं व्याप्तं, कुहरं यस्येति बहुव्रीहिः। पुनश्चलन्मन्दरपदेन सह कर्मधारयः। कोणो वादनदण्डः। आघातस्ताडनम्।

भेरीशतसहस्राणि ढक्काशतशतानि च।
एकदा यत्र ताड्यन्ते कोणाघातः स उच्यते॥

सङ्घट्टः आमर्दः। कृष्णा द्रौपदी। क्रोधस्तत्फलं कुरुकुलविनाशः अग्रदूतो भविष्यदर्थस्य प्रथममावेदकः। उत्पातोऽमङ्गलहेतुः। निर्घातवातः वातजन्यो निर्घातः। मेघानां वातानाञ्चान्योन्यसङ्घट्टश्चण्डध्वनिर्निर्घातः। अयं शब्दायमानः। तेन मन्दरध्वानसिंहनादाभ्यामुपमितिरित्युपपत्तिः।

**अत्र हीति**। वाच्यस्य प्रश्नात्मकत्वात् न क्रोधव्यञ्जकत्वमित्यर्थः। **अभिनेयार्थमिति**। अङ्गादिक्रियया नायकाद्यारम्भानुकरणमभिनयः। काव्यं नाटकम्। दीर्घसमासेऽर्थप्रतिपत्तौ विलम्बेनाभिनयेन झटिति प्रत्याययितुमशक्यत्वात्, तन्नोचितमित्याह **तत्प्रतिकूला चेति**। रसानौचित्यमाह **भीमसेन इति**। रौद्ररसप्रधानस्य धीरोद्धतस्य तस्येत्थमुद्धताभिधानस्वभावत्वात्। एवञ्च कृते तदालम्बनकं रसादिकमभिव्यक्तं भवतीति भावः।

क्वचिद्वक्तृप्रबन्धानपेक्षया वाच्यौचित्यादेव रचनादयः। यथा

प्रौढच्छेदानुरूपोच्छलनरयभवत्सैंहिकेयोपघात-
त्रासाकृष्टाश्वतिर्यग्वलितरविरथेनारुणेनेक्ष्यमाणम्।
कुर्वत् काकुत्स्थवीर्यस्तुतिमिव मरुतां कन्धरारन्ध्रभाजां
झाङ्कारैर्भीममेतन्निपतति वियतः कुम्भकर्णोत्तमाङ्गम्॥ ३५१॥

क्वचिद्वक्तृवाच्यानपेक्षाः प्रबन्धोचिता एव ते । तथाहि, आख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः, कथायां रौद्रेऽपि नात्यन्तमुद्धताः, नाटकादौ रौद्रेऽपि न दीर्घसमासादयः, एवमन्यदप्यौचित्यमनुसर्तव्यम् ।

**इति काव्यप्रकाशे गुणालङ्कारभेदनियतगुणनिर्णयो नाम अष्टम उल्लासः ॥८॥**

**बालचित्तानुरञ्जनी**—वाच्यौचित्यादन्यथात्वमुदाहरति **क्वचिदिति** । प्रौढो यः छेदः छेदनं तदनुरूपः उज्ज्वलनरयः प्रज्वलितमनोवेगः तस्मात् भवः नवः सैंहिकेयोपघातत्रासः तस्मात् आकृष्टाः अश्वास्तैस्तिर्यग्विवलितो रविरथो यस्य एवंविधेन अरुणेन ईक्षमाणम् । काकुत्स्थवीर्यस्तुतिं कुर्वद् दशकन्धरारन्ध्रस्थितानां वायूनां झाङ्कारैः भीमं भयङ्करं कुम्भकर्णशिरः आकाशात् पतति । अत्र वक्ता मध्यम एव नोद्धतः । अतो वाक्यौचित्यादेव उचिता इति भावः । क्वचित् प्रबन्धौचित्यादन्यथात्वमुदाहरति **क्वचिदिति** । आख्यायिका हर्षचरित्रादि । कथा बृहत्कथादि । नाटकादावित्यादिशब्दात् प्रकरणादिपरिग्रहः । कपटयान् [?] प्रवेशादौ प्रातीतिकत्वत्रानुगुण्येन[?] वर्णसङ्घटनादिकमूहनीयम् । यथा रत्नावल्यामित्याह **एवमिति** ।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां गुणालङ्कारभेदनियतगुणनिर्णयो नामाष्टम उल्लासः ।

**सारबोधिनी—प्रौढेति** । इदं वृत्या[?]रावणस्य पद्यम् । वक्ता चात्र वैतालिकः । प्रौढो बलवता प्रयुक्तः । तदनुरूपमुच्छलनं ऊर्ध्वप्रसरणं, तत्र यो रयस्तेन भवदिति त्रासविशेषणम् । आकृष्टा गमनात् प्रतिषिद्धा अश्वा यत्र तथा तिर्यग्वलितो रविरथो येनारुणेन तिर्यग्विवलनं वक्रतया संस्थापनम् । भयानुभावोऽयम् । अत्र वाच्यस्य कुम्भकर्णोत्तमाङ्गस्य भीमत्वेनौजस्वित्वादुचिता समुद्धता रचना । **प्रबन्धोचिता एव ते इति** । ते रचनादयः । **नाटकादाविति** । अभिनेयप्रत्यनीकत्वान्न दीर्घसमासादयः । इदं प्रतिकूलं त्रर्णव्याख्यानप्रस्तावे वेणीसंहारस्थं 'देशः सोऽयमि'त्युदाहार्यात्र विकटवर्णत्वं दीर्घसमासत्वं वोचितमिति स्वोक्तविरुद्धमिति ध्येयम् ।

इति सारबोधिन्यामष्टम उल्लासः ।

## अथ नवम उल्लासः

गुणविवेचने कृतेऽलङ्काराः प्राप्तावसरा इति संप्रति शब्दालङ्कारानाह—

**यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते ।**

**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा ।।७८।।**

तथेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च । तत्र पदभङ्गश्लेषेण यथा

नारीणामनुकूलमाचरसि चेज्जानासि कश्चेतनो
वामानां प्रियमादधाति हितकृन्नैवाबलानां भवान् ।
युक्तं किं हितकर्तनं ननु बलाभावप्रसिद्धात्मनः
सामर्थ्यं भवतः पुरन्दरमतच्छेदं विधातुं कुतः ।।३५२।।

**बालचित्तानुरञ्जनी**—अथ सप्तमोल्लासव्याख्या [नवमोल्लासव्याख्या]

गुणविवेकानन्तरमलङ्काराणां कः प्रस्ताव इत्यत आह **गुणेति** । तददोषौ शब्दार्थौ—इत्यादिनिर्देशक्रमेणालङ्कारनिरूपणस्यायमेवावसर इत्यर्थः ।

पठन्ति शब्दालङ्कारान् बहूनन्यान्मनीषिणः
परिवृत्तिसहिष्णुत्वान्न ते शब्दैकभागिन ।। इति
ते च वक्रोक्त्यनुप्रासौ यमकं श्लेष इत्यपि ।
चित्रञ्च पञ्चमं षष्ठोऽप्यभ्यासः पुनरुक्तिवत् ।। इति

यदुक्तं तदन्येनान्यथोक्तम्, अन्येनान्यथा योज्यते इति आवृत्या योज्यम् । श्लेषो वक्ष्यते । काकुरुक्ता । अन्येन जनेन अन्यथोक्तं यद्वाक्यं अन्येन श्लेषेण काक्वा वान्यथा योज्यते सा वक्रोक्तिरित्यर्थः । तथा द्विधेत्येतद् व्याकरोति **तथेति** । श्लेषो द्विविधः । भग्नपदोऽभग्नपदश्च । तत्र भग्नपदश्लेषेण वक्रोक्तिमुदाहरति **तत्रेति** । नारीणामङ्गनानाम् । अनुकूलमाचरसि चेत् जानासि ज्ञातेति लोके व्यवह्रियसे । अरीणामनुकूलं नाचरसि चेत् तर्हि जानासि इत्यन्यथा कुर्वाणो द्वितीय आह **कश्चेतन इति** । चेतनः कः वामानां प्रतिकूलानां प्रियमादधाति, न कोऽपीत्यर्थः । एवं च नारीणामित्यस्य पदस्य न वैरिणामिति पदभङ्गे अन्यथा योजना । प्रतिकूलार्थं वामानामिति पदं अङ्गनार्थत्वेनान्यथा कुर्वन् आद्य आह **हितकृदिति** । भवान् अबलानां स्त्रीणां नैव हितकृत्, न हितकारी भवतीत्यर्थः । हितकारिवाचकं हितकृदिति पदं हितं कृन्तति छिनत्ति इत्यर्थपरतया अङ्गनावाचकम् ।

अबलापदं बलाभावपरतया चान्यथा कुर्वन् द्वितीय आह **युक्तमिति**। बलस्य सामर्थ्यस्य अभावेन प्रसिद्ध आत्मा यस्य तस्य दुर्बलस्य हितकर्तनं हितच्छेदनं किं युक्तम्? न युक्तमित्यर्थः। सामर्थ्यवाचकबलपदं बलासुरवाचकतया अन्यथा कुर्वन् आद्य आह **सामर्थ्यमिति**। भवतः इन्द्रमतविच्छेदं विधातुं कुतः सामर्थ्यमित्यर्थः।

**सारबोधिनी—प्राप्तावसरा इति**। तेनालङ्कारनिरुक्तावसर एव सङ्गतिरिति व्यक्तमुक्तं **शब्दालङ्कारानिति**। काव्यलक्षणे शब्दस्य प्रागुपादानादिति शेषः। शब्दचित्रमर्थचित्रमिति यच्चित्रभेदद्वयमुक्तं तस्य भेदा उल्लासाभ्यां वक्तव्या इत्यपि ध्वनितम्। **यदुक्तमिति** वक्तृश्रोतृनिर्वाह्योऽयमलङ्कारः। अन्यथा अन्याभिप्रायेण वक्तुरन्याभिप्रायकं वाक्यमन्येन श्रोत्राऽन्यथा समर्थितमित्यर्थः। **अन्येनेति**। तेन स्वोक्तं स्वयमन्यथाकरणेनापह्नुतौ नातिव्याप्तिः। यथा—

काले पयोधराणामपतितया नैव शक्यते स्थातुम्।
उत्कण्ठिताऽसि तरले नहि नहि सखि पिच्छिलः पन्थाः॥

अत्र पत्यभिप्रायकं स्ववचनं पतनाभावे स्वेनैव समर्थनात्। श्लेषेण वक्तुरविवक्षितेन शब्दस्य प्रतिपाद्यान्तरेण। तथा ताभ्यामुपाधिभ्यामित्यर्थः। तदाह **श्लेषेत्यादि**।

**नारीणामित्यादि**। नारीणां स्त्रीणां अनुकूलमाचरसि चेत् यदि जानासि विज्ञोऽसि। विज्ञ एव स्त्रीणामनुकूल इत्यर्थः। यद्वा जानासीत्यादि उत्तरदातुरेव वचनम्। तेन नार्यभिप्रायकमिदं वचनं विपक्षाभिप्रायेण अबलानामित्यनेन तत्पुनरोजोऽभावतात्पर्यकेण बलाभावेत्यनेन तदपि बलपदस्यासुरपरेण पुरन्दर इत्यनेन पदेनान्यथा योजितम्। नारीणामिति स्त्रीणां पदभङ्गेन वैरिणामभावस्य बोधनात् श्लेषः। वामाः स्त्रियो विपक्षाश्च। हितकृदिति करोतिकृन्तत्यो रूपम्। अबलाः स्त्रियो बलशून्याश्च। बलमोजो बलोऽसुरभेदश्च। अत्र नारीणामिति पदभङ्गमुपजीव्य प्रवृत्तानां श्लेषान्तराणां स एव मूलमिति तेनैव व्यवहारः।

अभङ्गश्लेषेण यथा

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥ ३५३॥

**बालचित्तानुरञ्जनी—**अपदभङ्गश्लेषेण वक्रोक्तिमुदाहरति **अभङ्गेति**। ईदृशी दारुणा क्रूरा बुद्धिः तव केन निर्मिता दत्ता? क्रूरार्थं दारुणेति पदं काष्ठार्थपरतया अन्यथा कुर्वन् द्वितीय आह **त्रिगुणेति**। सत्त्वरजस्तमोमयी बुद्धिः श्रूयते न क्वचिद् दारुमयी काष्ठमयी श्रूयत इत्यर्थः।

**सारबोधिनी—अहो इति**। दारुणा हिंस्रा काष्ठेन च। त्रिगुणा सत्त्वरजस्तमोमयी। अत्र दारुणपदस्य दारुणेत्यस्य दारुमयत्वेनान्यथायोजनम्।

काक्वा यथा

गुरुजनपरतन्त्रतया दूरतरं देशमुद्यतो गन्तुम् ।
अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ ।। ३५४ ।।

**वर्णसाम्यमनुप्रासः**

स्वरवैसादृश्येऽपि व्यञ्जनसदृशत्वं वर्णसाम्यम् । रसाद्यनुगतः प्रकृष्टो न्यासोऽनुप्रासः ।

**बालचित्तानुरञ्जनी**--वक्रोक्तिमुदाहरति **काक्वेति** । हे सखि ! गुरुपरतन्त्रतया दूरतरं देशं गन्तुमुद्यतः असौ प्रियः नैवैष्यति नागमिष्यति इति नायिकोक्तौ तत्सखी काक्वा अन्यथयति । मधुकरकुलेन कोकिलैश्च मनोहरे वसन्तसमये नैवैष्यति । नकारशिरसि काकुप्रयोगात् सर्वप्रकारमेष्यत्येवेत्यर्थः ।

एवं वक्रोक्तिमभिधाय अनुप्रासं लक्षयति **वर्णेति** । व्याकरोति **स्वरेति** । स्वराणामचां वैसादृश्ये वैलक्षण्येऽपि यद् व्यञ्जनानां हलां हलां सादृश्यं तदिह वर्णसादृश्यं विवक्षितम् स्वरसाम्ये वैचित्र्याभावादित्यर्थः । अनुप्रासशब्दं निर्वक्ति **रसेति** ।

**सारबोधिनी**--काकुवक्रोक्तिमुदाहरति **गुरुजनेति** । नायिकया नैष्यतीति निषिद्धे तत्सखी काक्वाऽन्यथा योजयति नैष्यतीति, एष्यत्येव । अनुप्रासं लक्षयति **वर्णसाम्यमिति** । यमकेऽतिव्याप्तिरित्यत आह **स्वरवैसादृश्येऽपीति** । अत्र स्वरसादृश्यं न प्रयोजकम्, कुलालकलत्रमित्यादिष्वपि दर्शनात् । यमके तु समानानुपूर्वीकत्वनियमः । अत एव यमके वक्ष्यति "वर्णानां सा पुनः श्रुतिरि"ति । **साम्यमिति** । तत्त्वं तु समानश्रुतिमत्वमित्यर्थः । संभवत्स्वरसादृश्यं तु तत्प्रकर्षकम् । अत एव व्यञ्जनसाम्यमित्यपहाय वर्णसाम्यमित्युक्तम् । **रसादीति** । अनुशब्दोऽनुगमार्थः । प्रशब्दः प्रकर्षार्थः । आसशब्दो न्यासार्थः । अनुगमनं रसादेः, प्रकर्षश्च सहृदयहृदयावर्जकत्वेनेति ।

**छेकवृत्तिगतो द्विधा ।**

छेका विदग्धाः । वृत्तिर्नियतवर्णगतो रसविषयो व्यापारः । गत इति छेकानुप्रासो वृत्त्यनुप्रासश्च ।

किं तयोः स्वरूपम् इत्याह

**सोऽनेकस्य सकृत् पूर्वः**

अनेकस्य अर्थात् व्यञ्जनस्य सकृदेकवारं सादृश्यं छेकानुप्रासः ।

**बालचित्तानुरञ्जनी**--अस्य द्वैविध्यप्रतिपादकं सूत्रमुपादाय व्याकरोति **छेकेति** । छेकाश्च वृत्तयः ताः गतः प्राप्त इति समासः । छेकगतानुप्रासः वृत्तिगतानुप्रासश्चेति अनुप्रासो द्विविध इत्यर्थः । उभयोः

स्वरूपं किमित्याशङ्कायां आद्यस्वरूपप्रतिपादकं सूत्रमुपादाय व्याकरोति **किं तयोरित्यादिना**। पूर्वः आद्यः छेकानुप्रास इत्यर्थः। अर्थात् सामर्थ्यात्।

**सारबोधिनी**—नियतरसविशेषव्यञ्जकत्वेन परिगणिता वर्णाः तद्गतस्तन्निष्ठो व्यापारः सहकारी, आनुपूर्वीविशेषः स एव वृत्तिः। गतो ज्ञातः। अर्थात् आभ्यामुपाधिभ्याम्। तदाह **छेकानुप्रास इत्यादि**। उदाहरणम्

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम्॥ ३५५॥

**एकस्याप्यसकृत्परः॥ ७९॥**

एकस्य, अपिशब्दादनेकस्य व्यञ्जनस्य द्विर्बहुकृत्वो वा सादृश्यं वृत्त्यनुप्रासः।

तत्र

**माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते।**
**ओजः प्रकाशकैस्तैस्तु परुषा**

उभयत्रापि प्रागुदाहृतम्।

**बालचित्तानुरञ्जनी**—उदाहरति **तत इति**। अरुणस्य यः परिस्पन्दः चलनं तेन मन्दीकृतं वपुर्यस्य एवंविधश्चन्द्रः स्मरक्षीणकान्ताकपोलपाण्डुतां दध्रे। अत्र परिस्पन्दमन्दीत्यत्र नकारदकारात्मकस्य व्यञ्जनसमुदायस्य सकृत् सादृश्यं कामक्षामेति ककारमकाररूपस्य गण्डपाण्डिवति णकारडकाररूपस्य सादृश्यमिति मन्तव्यम्। द्वितीयस्वरूपप्रतिपादकं सूत्रमुपादाय व्याकरोति **एकस्येति**। उक्तसमुच्चयार्थः **अपिशब्दादिति**। अशक्तत्वं निश्चिनोति अपि शब्द इत्याह **द्विरिति**। ननु कीदृशी वृत्तिः कतिविधेत्यत आह **तत्रेति**। माधुर्यव्यञ्जकैः 'मूर्ध्नि वर्गान्त्यगा' इत्यादिप्रतिपादितैर्वर्णैः युक्ता उपनागरिकावृत्तिः। तथा चोक्तम्—

स्वरूपसंयोगयुतां मूर्ध्नि वर्गान्त्ययोगिभिः।
स्पर्शैर्युतां च मन्यन्ते उपनागरिकां बुधाः॥ इति।

ओजप्रकाशकैः 'योग आद्य तृतीयाभ्यामि'त्यादिनिर्णीतैः वर्णैर्युक्ता परुषा वृत्तिरित्यर्थः। उभयत्रापि किमुदाहरणमित्याकाङ्क्षायामाह **उभयत्रेति**। नागरिका वैदर्भी। तस्या उदाहरणम्—

अनङ्गरङ्गप्रतिमं तदङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।
कुर्वन्ति यूनां सहसा यथैताः स्वान्तानि शान्तापरचिन्तितानि॥ इति

परुषा गौडी। तस्या उदाहरणम्
मूर्ध्नामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधारा
धौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम्।
कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां
दोष्णां चैषां किमेतत् फलमिह नगरीरक्षणे यत् प्रयासः॥
इत्युदाहृतमित्यर्थः।

**सारबोधिनी—ततोऽरुणेति** । स्पन्दमन्दीत्यत्र कामकामिनीत्यत्र नकारदकारयोः ककारमकारयोरप्यनेकस्य सकृत् साम्यम् ।

**एकस्यापीति** । अत्रैकस्य सकृत् साम्येऽपि वृत्तित्वमिच्छन्ति । यथा 'व्याधूतचूताङ्कुरेत्यादौ । वृत्तिं विभजते **माधुर्येति** ।

**कोमला परैः ॥ ८० ॥**

परैः शेषैः । तामेव केचित् ग्राम्येति वदन्ति । उदाहरणम्

अपसारय घनसारं कुरु हारं दूर एव किं कमलैः ।
अलमलमालि मृणालैरिति वदति दिवानिशं बाला ॥ ३५६ ॥

**केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।**

एतास्तिस्रो वृत्तयः, वामनादीनां मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः ।

**बालचित्तानुरञ्जनी—**वृत्यन्तरप्रतिपादकं सूत्रमुपादाय व्याकरोति **कोमलेति** । परैर्माधुर्यौजोव्यतिरिक्तैः प्रत्यायकैर्वर्णैः युक्ता कोमला नाम वृत्तिः । अस्या एव संज्ञान्तरं केचिदाहुरित्याह **तामिति** ।

शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया ।
ग्राम्यां वृत्तिं प्रशंसन्ति काव्येष्वादृतबुद्धयः ॥ इति

उद्भटादयः कोमलामेव ग्राम्येति वदन्तीत्यर्थः । कोमला पाञ्चाली । तामुदाहरति **अपसारयेति** । अत्र रेफस्य लकारस्य बहुलकृत्वः सादृश्यात् वृत्यनुप्रासः । उपनागरिकापरुषाकोमला वृत्तयोऽनुप्रासस्याङ्गभूताः । एतासां काव्यात्मभूताभिः वैदर्भ्यादिभिरेकत्वमुक्तवान् तदुपसङ्ग्रहार्थं यत्सूत्रं तदुपादाय व्याकरोति **केषामिति** ।

**शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः ॥ ८१ ॥**

शब्दगतोऽनुप्रासः शब्दार्थयोरभेदेऽप्यन्वयमात्रभेदात् लाटजनवल्लभत्वाच्च लाटानुप्रासः । एष पदानुप्रास इत्यन्ये ।

**पदानां सः**

स इति लाटानुप्रासः ।

**बालचित्तानुरञ्जनी**—एवं वार्णमनुप्रासमभिधाय शाब्दमनुप्रासमाह **शाब्दस्त्विति**। व्याकरोति। **तात्पर्यमात्रस्य भेदे** सति शब्दार्थपौनरुक्त्यं लाटानुप्रास इति लक्षणम्। मात्रशब्देन शब्दार्थयोरभेदस्वीकारात् यमकव्यावृत्तिः। तात्पर्यार्थस्य भिन्नत्वात् पौनरुक्त्यनिवृत्तिरिति द्रष्टव्यम्। अस्यैव संज्ञान्तरमाह **एष इति**। यदाह उद्भटः

स्वरूपार्थाविशेषेऽपि पुनरुक्तिफलान्तरम्।
शब्दानां वा पदानां वा लाटानुप्रास इत्यपि॥

कथं पदानुप्रासत्वमस्येत्यत आह **पदानामिति**। तच्छब्दार्थमाह **स इति**।

**सारबोधिनी**—एवं वर्णानुप्रासं लक्षयित्वा शब्दानुप्रासं लक्षयति **शाब्दस्त्विति**। शब्द्यते प्रकाश्यते अनेनेति शब्दः। पदं प्रातिपदिकम्। तुर्भिन्नक्रमः। लाटानुप्रासः पुनः शाब्दः शब्दगतो न वर्णनिष्ठः। ततश्छेकवृत्तिभ्यामस्य भेद इति। **तात्पर्यमात्रत** इति। मात्रशब्देन शब्दार्थयोरभेदस्वीकारात् न यमकेऽतिप्रसक्तिः। तत्र भिन्नार्थकत्वस्वीकारात्तु अर्थे सतीति स्मर्तव्यम्।

उदाहरणम्

यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य॥३५७॥

**पदस्यापि**

अपिशब्देन स इति समुच्चीयते। उदाहरणम्

वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः।
सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्॥३५८॥

**वृत्तावन्यत्र तत्र वा।**

**नाम्नः स वृत्त्यवृत्त्योश्च।**

एकस्मिन् समासे भिन्ने वा समासे समासासमासयोर्वा नाम्नः प्रातिपदिकस्य न तु पदस्य सारूप्यम्। उदाहरणम

सितकरकररुचिरविभा विभाकराकार धरणिधरकीर्तिः।
पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥३६९॥

**तदेवं पञ्चधा मतः॥८१॥**

**बालचित्तानुरञ्जनी**—कदाचित् पदानामपि लाटानुप्रासः संभवतीत्यर्थः । उदाहरति **यस्येति ।** यस्य पुरुषस्य सविधे निकटे, दयिता नास्ति तस्य तुहिनदीधितिश्चन्द्रः दवदहनः दावाग्निर्भवति । **यस्य** सविधे निकटे दयिता अस्ति तस्य पुनर्दवदहनः तुहिनदीधितिर्भवति । अत्र अन्वयमात्रभेदादयमनुप्रासः । न केवलं बहूनामेव पदानाम् अपितु एकस्यापीत्याह **पदस्यापीति** । **स इति** । लाटानुप्रासः । तदुदाहरति **वदनमिति** । तस्याः वरवर्णिन्याः सुन्दर्याः वदनं सुधाकरः । सत्यं निश्चितम् । निष्कलङ्कः सुधाकरः क्वान्यत्र भवेत् इति । तात्पर्यार्थभेदात् सुधाकरपदस्य एकस्यानुप्रासः । एवं प्रसङ्गादस्य पदानुप्रासतां **प्रदर्श्य** शब्दानुप्रासतापक्षं शिक्षयितुमाह **वृत्ताविति** । वृत्तिः समासः । वृत्तावित्येकस्य विवक्षितत्वात् एकस्मिन् समास इत्यर्थः । तत्रेति वृत्तिपरामर्शः **अन्यत्र तत्रेति** । भिन्ने समास इत्यर्थः । **वृत्त्यवृत्त्योः** समासासमासयोरित्यर्थः । सूत्रं व्याकरोति **एकस्मिन्निति** । प्रातिपदिकस्येत्यनेन लुप्तविभक्तिकं **पदं** गृह्यते । केवलस्य प्रातिपदिकस्य प्रयोगाभावात् । **पदस्येति** । श्रूयमाणविभक्तिकस्येत्यर्थः । उदाहरति **सितेति** । विभाकरस्य सूर्यस्य आकार इवाकारो यस्य तस्य संबोधनम् । धरणिधर भूपते ! तव चण्ड-किरणवत् रुचिरा कान्तिर्यस्याः सा कीर्तिः । पौरुषकारसंपत् सापि कमला छत्रचामरादिचिह्ना प्रसिद्धा लक्ष्मीश्चास्ति नान्यस्य । अत्र कर-करशब्दयोः एकत्र समासे सादृश्यम् । विभाविभाकरेत्यत्र विभा-शब्दयोर्भिन्ने समासे सारूप्यम् । पौरुषकमला कमलेत्यत्र कमलाशब्दयोः समासासमासयोः । आद्यस्य समासे द्वितीयस्यासमासे त्रैविध्यम् । पदविषयस्य लाटानुप्रासस्य द्वैविध्यस्य उक्तत्वात् । छेकानुप्रासः वृत्त्यनुप्रासश्च । अनेन सह पञ्चविधत्वमित्युपसंहरति **तदेवमिति** ।

**सारबोधिनी—यस्येत्यादि** । दवदहनतुहिनदीधित्योरुद्देश्यविधेयभावविपर्यासेन तात्पर्यादन्वय-भेदः । अत एव न पुनरुक्तता । **पदस्यापीति** । तेन बहुपदारब्धत्वेऽप्ययं भवतीति दर्शितम् । **यथा वदन-मिति** । अत्र प्रथमसुधाकरपदस्य विधेयपरत्वं द्वितीयस्यानुवाद्यपरत्वम् ।

सूत्रे पाश्चात्यमपि तत्रेति पदं प्रथमं व्याचष्टे **एकस्मिन्निति** । ननु स्वाद्यन्तस्य नामत्वे पदादस्य न भेद इत्यत आह **नाम्नः प्रातिपदिकस्येति** । प्रत्ययरहितस्य प्रकृतिभागस्य प्रातिपदिक-त्वात् । तदाह **न तु पदस्येति** । **पौरुषकमलेति** । नन्वत्र द्वितीयकमलभागस्य पदत्वे नामानुप्रासता न स्यात्, न च प्रकृत्यंशमादाय तथा । तदा पदानुप्राससुधाकरपदयोरपि तत्त्वप्रसङ्गादिति चेन्न । पौरुष कमलं यस्याः सा तथा । कमला कमलवतीत्यर्थः । मत्वर्थीयाच्प्रत्ययात्, तथा च स्त्रीप्रत्ययतद्धितप्रत्ययप्रकृत्योः कमलभागयोरनुप्रासः । अत्रैकत्र समासे करयोर्भिन्ने समासे विभेति भागयोः, समासासमासयोस्तु कमलयोः साम्यम् । **तदेवमिति** । अयं लाटानुप्रासः ।

**अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः ।**

**यमकम्**

सनरसमरसोऽयमित्यादावेकेषामर्थवत्त्वे, अन्येषामनर्थकत्वे भिन्नार्थानामिति न युज्यते वक्तुम् इति, अर्थे सतीत्युक्तम् । सेति सरो रस इत्यादिवैलक्षण्येन तेनैव क्रमेण स्थिता ।

**बालचित्तानुरञ्जनी**--इदानीं यमकं लक्षयति **अर्थे सतीति**। भिन्ना अर्था येषां ते। वाहिताग्न्यादित्वात् परनिपातः। तत्तु लाटानुप्रासव्यावृत्त्यर्थम्। तत्र भिन्नार्थत्वाभावात्। साम्येऽपि क्रमव्यत्ययान्न यमकम्। येनैव क्रमेण पूर्वं श्रुतिः तेनैव क्रमेण पुनः श्रुतिर्यमकमिति।

**सारबोधिनी**--**पुनः श्रुतिरिति**। अत्र श्रुतिसाम्यं प्रयोजकम्। तेन वर्णभेदे श्रुत्यैकत्वेऽपि यमकं यथा-भुजलतां जडतामबला जनः इति लकारडकारयोः। तदुक्तम्-लोर्डसोरलोस्तथेति [?] तथेति श्रुतिसाम्यमित्यर्थः। **अर्थभिन्नानामिति**। एकार्थकभिन्नानामित्यर्थः। तेन लाटानुप्रासे न प्रसङ्गः। उभयोरेकस्य वा निरर्थकत्वे सङ्ग्रहश्च। तेनैव क्रमेण स्थिता पूर्वानुपूर्वी सजातीयानुपूर्विविषयिका।

**पादतद्भागवृत्ति तद्यात्यनेकताम्॥८३॥**

प्रथमो द्वितीयादौ द्वितीयस्तृतीयादौ तृतोयश्चतुर्थे प्रथमस्त्रिष्वपीति सप्त। प्रथमो द्वितीये तृतोयश्चतुर्थे प्रथमश्चतुर्थे द्वितीयस्तृतीये, इति द्वे। तदेवं पादजं नवभेदम्। अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे।

द्विधा विभक्ते पादे प्रथमादिपादादिभागः पूर्ववत् द्वितीयादिपादादिभागेषु, अन्तभागोऽन्तभागेष्विति विंशतिर्भेदाः। श्लोकान्तरे हि नासौ भागावृत्तिः। त्रिखण्डे त्रिंशत् चतुःखण्डे चत्वारिंशत्।

**बालचित्तानुरञ्जनी**--यमकविभागप्रतिपादनपरं सूत्रमुपादत्ते **पादेति**। तत् यमकं पादवृत्ति पादभागवृत्ति चेति द्विविधम्। तच्च प्रत्येकमनेकरूपतां यातीत्यर्थः। तत्र पादवृत्तेर्नव भेदानाह **प्रथम इति**।

प्रथमद्वितीयपादयोरैक्ये मुखाख्यं यमकम् (१)
प्रथमतृतीययोरैक्ये संदंशाख्यं यमकम् (२)
प्रथमचतुर्थयोरैक्ये आवृत्याख्यं यमकम् (३)
द्वितीयतृतीययोरैक्ये गर्भाख्यं यमकम् (४)
द्वितीयचतुर्थयोरैक्ये संदष्टकाख्यं यमकम् (५)
तृतीयचतुर्थयोरैक्ये पुच्छाख्यं यमकम् (६)
चतुर्णामैक्ये पङ्क्त्याख्यं यमकम् (७)
प्रथमचतुर्थयोर्द्वितीयतृतीययोश्चैक्ये परिवृत्ताख्यं यमकम् (८)
प्रथमद्वितीययोस्तृतीयचतुर्थयोश्चैक्ये युग्माख्यं यमकम् (९)
एवं नव।

अत्रैव भेदद्वयमाह **अर्द्धेति**। पादानां परस्परं वैलक्षण्ये सत्यपि एकाक्षरत्वेन पूर्वापरार्द्धयोरैक्ये अर्द्धवित्रृत्याख्यं यमकम् (१०), समानवर्णत्वेन श्लोकद्वयोरैक्ये श्लोकावृत्त्याख्यं यमकम् (११)

एवं एकादशपादवृत्तिभेदान् प्रदर्श्य पादभागवृत्तिभेदान् प्रदर्शयति **द्विधा विभक्तेति**। श्लोके प्रथमादयस्ते पादाश्च। द्विधा विभक्तानां तेषां आदिभागः पूर्ववत् पादयमकन्यायेन, द्वितीयादयश्च ते पादाश्च तेषामादिभागेषु अन्तभागः प्रथमादिपादान्तभागः द्वितीयादिपादान्तभागेषु च यम्यते । एवं चत्वारः, आद्यन्तभेदात् । आद्यन्तयोः संबन्धाच्च दश आवृत्तिद्वयं चेति विंशतिः । पादानां द्विधा विभागे एकस्मिन्पद्ये चत्वारो भागा भवन्ति। तत्र प्रथमपादादिभागद्वितीयपादादिभागयोरैक्ये एकं यमकम्। प्रथमपादान्त्यभागद्वियीयपादान्त्यभागयोरैक्ये द्वितीयम् । प्रथमपादान्त्यभागयोरैक्ये चतुर्थम् । प्रथमपादादिभागस्य अन्त्यभागत्रयेणैक्ये पञ्चमम् । प्रथमपादद्वितीयपादादिभागापेक्षया आदित्वेन तस्येतरापेक्षया अन्त्यत्वेनेतरयोरैक्ये षष्ठम्। द्वितीयपादादिभागस्य द्वितीयपादान्त्यभागेनैक्ये सप्तमम्। प्रथमभागस्य चतुर्थभागेन द्वितीयभागस्य तृतीयेन ऐक्ये अष्टमम्। प्रथमभागस्य द्वितीयभागेन तृतीयभागस्य चतुर्थभागेनैक्ये नवमम्। प्रथमद्वितीयभागयोरेकाक्षरत्वे ऐक्ये अर्द्धवृत्त्याख्यं दशमम्। एवमुत्तरार्द्धेऽपि दशेति विंशतिः। ननु श्लोकावृत्तौ भागनिबन्धनो भेदः किमिति नोच्यत इत्यत आह **श्लोकान्तर इति**। श्लोकान्तरे आवर्त्यमानस्य भागस्य अप्रतीयमानत्वेन चमत्कारकारित्वादिति भावः । पादानां त्रिधा विभागे उक्तक्रमेणासंबंधे त्रिंशद्भेदा भवन्तीत्याह **त्रिखण्ड इति**। चतुर्द्धा विभागे चत्वारिंशद्भेदा भवन्तीत्याह **चतुःखण्ड इति**। एवं शुद्धभेदानभिधाय भागनिबन्धनान् यमकभेदानाह विभजते **पाद तद्भागेति**। पादः पद्यचतुर्थांशः।

**सारबोधिनी**—तत्र विकल्पेन यमनमाह **प्रथमो द्वितीयादावित्यादि**। प्रथमद्वितीयादिभिः पादैः पादाभिधानं प्रथमो द्वितीयादौ नियम्यत इत्यन्वयः। समुच्चयेन यमनमाह **त्रिष्वपीति**। **प्रथमेति** । प्रथमपादस्य विकल्पेनावृत्तौ त्रीणि, द्वितीयस्य द्वे, तृतीयस्य चैकं, प्रथमस्य त्रिषु समुच्चयेऽप्येकमिति सप्तता। पादानां पादयमकानां अर्धावृत्ति श्लोकवृत्तिभ्यामेकादशभेदता। अत्रेदं बोध्यम्। यमकं तावत् समस्तपादावृत्तिरूपं तद्भागावृत्तिरूपञ्चेति प्रथमं द्विधाभूय बहुप्रकारम्। तदेतदाह **प्रथम इत्यादिना**। तत्र पादावृत्तौ यत्र प्रथमपादो द्वितीयपादेन तुल्यरूपस्तदा मुखं नाम यमकम् । यदा तृतीयेन तदा संदंशः, यदा चतुर्थेन तदावृत्तिः, एव यदा द्वितीयस्तृतीयेन तदा गर्भः, यदा चतुर्थेन तदा सन्दष्टकम्, तृतीयस्तु यदा चतुर्थेन तदा पुच्छम्, यदा तु प्रथमः सर्वत्र तदा पङ्क्तिरिति पादावृत्तिरूपाः शुद्धभेदाः। समेत्य तत्र मुखपुच्छयोः संयोगे युग्मकम्, गर्भावृत्त्योर्योगे परिवृत्तिरिति। तदेवं पादानां नवभेदत्वम् । अर्द्धावृत्तिः समुद्गमकम्। श्लोकावृत्तिर्महायमकमिति पादद्वयमर्द्धं पादचतुष्टयं श्लोक इत्यनयोः पादरूपता।

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीयपादादिगते आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम्। अन्तादिकम् आद्यन्तिकम् तत्समुच्चयः, मध्यादिकम् आदिमध्यम् अन्तमध्यम् मध्यान्तिकम् तेषां समुच्चयः। तथा तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेषु, अनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम्। तदेतत् काव्यान्तर्गडुभूतम् इति नास्य भेदलक्षणं कृतम्। दिङ्मात्रमुदाह्रियते।

**बालचित्तानुरञ्जनी प्रथमादीति**। प्रथमश्चासौ पादश्च प्रथमपादः आदौ येषां ते प्रथमपादादयः तेषु गतानि च तानि अन्तार्द्धानि तेषामादिः भागः द्वितीयः पादः। आदौ येषां तेषु गतानि यान्यपरार्द्धानि तेषामादिभागो यम्यते इत्यन्वर्थाश्रयणात् अन्तादिकं नाम यमकम्। एवं प्रथमपादगतोऽन्त्यभागः द्वितीयपादगतादिभागः उत्तरपादान्तभागेन यम्यते तदा आद्यन्तकं नाम यमकमित्याद्यनेकप्रकारमित्यर्थः। **तत्समुच्चय इति**। पूर्वपादान्तभागस्य उत्तरपादादिभागे पूर्वपादादिभागस्य उत्तरपादान्ते च यमनात् तयोः अन्तादिकाद्यन्तयोः समुच्चयो भवति। एवं पादविभागस्य पादान्तरादिभागे यमनात् पादमध्यादिकं नाम यमकम्। आदिभागस्य मध्यभागे यमनादादिमध्यं नाम यमकम्। तयोरेकः समुच्चयः। अन्तभागस्य मध्यभागे यमनादन्तमध्यम्। मध्यभागस्य अन्त्यभागे यमने मध्यान्तिकम्। एतयोरेकः समुच्चयः। सर्वेषामेकः समुच्चय इति चत्वारः समुच्चया इत्यर्थः। इत्थं पादान्तरभागापेक्षया पादभागभेदाः प्रदर्शिताः। इदानीमेकस्मिन्नेव पादे भागभेदानाह **तथेति**। अस्य भेदः किमिति न लक्ष्यत इत्यत आह **तदेतदिति**। गडुग्रन्थिः। उक्तप्रकारेण भेदानामानन्त्येन उदाहरणाशक्तेः यथाशक्ति उदाह्रियत इत्याह **दिगिति**।

**सारबोधिनी**—श्लोकावृत्तिप्रकारो भागावृत्तौ न संभवति, यतो व्यवधानेन द्विचतुरक्षरावृत्तौ न चमत्कार इति। त्रिखण्डे चरणस्य भागत्रये। चतुःखण्डे चरणभागचतुष्टये कृते प्रथमादिपादादिभाग इत्यादि पूर्वतनमत्र योज्यम्। अन्वर्थता अनुगतार्थतायोग इत्यर्थः। त्रिखण्डचतुःखण्डादिकं यमनमाह **अन्तादिकमित्यादि**। गडुग्रन्थिः।

सन्नारीभरणोमायमाराध्य विधुशेखरम्।
सन्नारीभरणोऽमायस्ततस्त्वं पृथिवीं जय ॥३६०॥

विनायमेनो नयतासुखादिना विना यमेनोनयता सुखादिना।
महाजनोऽदीयत मानसादरं महाजनोदी यतमानसादरम् ॥३६१॥

स त्वारम्भरतोऽवश्यमबलं विततारवम्।
सर्वदा रणमानैषीदवानलसमस्थितः ॥३६२॥

सत्त्वारम्भरतोऽवश्यमवलम्बिततारवम्।
सर्वदारणमानैषी दवानलसमस्थितः ॥३६३॥

**बालचित्तानुरञ्जनी**—प्रथमतृतीययोरैक्ये यमकमुदाहरति **सदिति**। हे राजन्। सतीः नारीः बिभर्ति या उमा पार्वती तां पाति सम्बध्नाति यः तं पार्वतीविशिष्टमित्यर्थः। विधुश्चन्द्रः शेखरे यस्य तं आराध्य शक्ताः। अरीणामिभाः गजाः यस्मिन् तादृशे रणे यस्य अमायो दंभरहितः सन् ततः त्वं पृथिवीं जय। प्रथमद्वितीययोः, तृतीयचतुर्थयोश्चैको यमकमुदाहरति **विनेति**। विः पक्षी गरुडसंज्ञकः तेन

तत्सदृशेनेत्यर्थः । ऊनयता, ऊनं हीनं कुर्वता । असून् प्राणान् खादति भक्षयति । तेन एनः अपराधं विना स्वस्थानं अप्रापयता सुखानि अत्ति विनाशयति । तेन यमेन अयं योगे महान्तं अजं नुदति हिनस्ति महान् उत्सवान् अजन्ति लुम्पन्ति ये दुर्जनाः तान् नुदति क्षिपतीति वा महाजनोदी महाजनः उत्तमश्लोकः मानसात् चित्तात् अरं शीघ्रं यतमानानां सादमवसादं राति ददाति । यथा तथा अदीयत । अखण्डायतन यमेन महाजनश्चलचित्तः कृत इत्यर्थः । श्लोकावृत्तिमुदाहरति **सत्त्वेति** । सत्त्वप्रधानेषु आरम्भेषु कार्येषु रतः निरतः अवश्यं सर्वदा अबलं गजतुरगादिशून्यं वितनारवं विस्तृताक्रोशं यथा सर्वेषां दारणः विनाशकः यः गर्वः तमेषितुं शीलवान् दावानलेन समं सदृशं स्थितं स्थितिर्यस्या इत्येकः श्लोकः । अन्यस्तु स वर्णनीयो नेता तु अलसं आलस्यं विशिष्टं यथा तथा अवान् अगच्छन् । अस्थीनि स्यति खण्डयति । असन्तवेऽपि धातुत्वादुपधादीर्घभावः । एवंविधः सन् भरतः आरम्भात् सन्नाहात् अवश्यं अविधेयं सत् अवलम्बितानि वस्त्रतया स्वीकृतानि रवाणि वल्कलानि येन तत् अरीणां समूहः आरं सर्वदा नित्यं रणं युद्धं अनैषोत् आनीतवानिति ।

**सारबोधिनी—सन्नारीति** । विधुशेखरमाराध्य ततः आराधनतः पृथिवीं जयेत्यर्थः । सतीं नारीं बिभर्ति पुष्णातीति या उमा तमयते प्राप्नोति । सन्ना अवसन्ना । अरीणां इभा हस्तिनो यत्र तथाभूतो, विधुविशेखरमाराध्य, तत आराधनतः पृथिवीं जयेत्यन्वयः । सती नारी बिभर्ति उमा तां पातीति रणो यस्येति युष्मदर्थविशेषणम् । अमायमकैतवं यथा स्यात्तथा आराध्येति सम्बन्धः । **विनायमिति** । अयं महाजनो महापुरुषो यमेन मानसं चित्तं तदेव मानसं सरः तस्मादरं शीघ्रम् । अदीयत अखण्डयत । मनः संयोगध्वंसो मरणम् । तत्कृतमिति पर्यवसितोऽर्थः । एनो विना अपराधादृते नयता स्थानं प्रापयता, असुखादिना प्राणभक्षकेन । विना पक्षिणेति । ऊनयता हानिं कुर्वता, असुखादिना सुखभक्षकेन । महमुत्सवम् अतिक्षिपति । खलः तन्नोदयितुं शीलमस्येति । महाजनोदीयत मानानां रक्षितुं प्रयत्नवतां सादमवसादं राति ददाति । खण्डनक्रियाविशेषणम् ।

**सत्त्वेति**—स तु प्रकृतो राजा, आरं अरिसमूहम् । सर्वदा सर्वकालम् । रणं समरमनैषीदित्यन्वयः । भरतो गौरवातिशयः । अवश्यं निश्चयेन आरं विशेषयति । **अवलम्बेति** । अवलम्बितमाश्रितम् । तारवं तरुसमूहो येन तथा अलसं यथा स्यात्तथा अवान् अगच्छन् । त्यतस्यति उत्क्षिपतीसुयस्थितः । "तउपक्ष यउ" इति धात्वनुसारात् । धातुनिषेधादुपधादीर्घाभावः । पक्षे सत्त्वेन प्रथमगुणेन य आरम्भस्तत्र रतः सत्त्वगुणेनैव सर्वेषां क्रियामारभते । अवश्यं पश्यतामनापन्नं अबलं सैन्यशून्यं विततो विस्तृत आरवः शब्दो यस्य तं सर्वं दारयति यो मानस्तमिच्छुः दवानलेन दावाग्निना समस्तुल्यः स्थितःस्थिरः । अघोषपरे सकारे वा विसर्जनीयस्य लोपः । यद्वा समं स्थितं यस्येति समासः ।

अनन्तमहिमव्याप्तविश्वां वेधा न वेद याम् ।
या च मातेव भजते प्रणते मानवे दयाम् ॥३६४॥
यदानतोऽयदानतो नयात्ययं न यात्ययम् ।
शिवेहितां शिवे हितां स्मरामितां स्मरामि ताम् ॥ ६५॥

सरस्वति प्रसादं मे स्थितिं चित्तसरस्वति ।
सर स्वति कुरु क्षेत्रकुरुक्षेत्रसरस्वति ॥३६६॥

**बालचित्तानुरञ्जनी**—अथ खण्डयमकेषु द्वितीयपादान्तभागस्य तुरीयपादान्तभागे यमकमुदाहरति **अनन्तेति** । वेधाः ब्रह्मा अनन्तेन महिम्ना व्याप्तं विश्वं यथा तां न वेद । या च मातेव प्रणते नम्रे मनुष्ये दयां कृपां भजते कुरुते ।

अथ सर्वपादेषु भागानामन्त्यभागेषु यमकमुदाहरति **यदानत इति** । यस्यै आनतः प्रणतः अयं श्लोकः अयस्य शुभावहस्य विधेः अभितः वितरणात् नयात्ययं नीतिव्याख्या तां न याति न प्राप्नोति । शिवं ईहितं यस्याः सा शिवे हरे हितां अनुकूलां स्मरामि । ता स्मरेण कामेन अभितां अपरिच्छिन्नां अलौकिकश्रृङ्गारामित्यर्थः । तां गौरीं स्मरामि चिन्तयामि ।

अथ सवर्गभेदमुदाहरति **सरस्वतीति** हे सरस्वति । क्षेत्रं शरीरं तदेव कुरुक्षेत्रं तस्य सरस्वति नदीविशेषभूते मे चित्तमेव सरस्वान् समुद्रः । तत्र स्थितां "सरस्वती सरिद्भेदे भूवाग्देवतयोरपि । स्त्रीरत्ने चापगायाञ्चे"त्यभिधानात् । हे सरस्वति स्त्रीरत्नभूते इत्यर्थः । अस्मिन् पक्षे स्थितिं कुरु प्रसादं कुर्वित्यर्थः । अत्र प्रथमतृतीययोरादिभाग तृतीयचतुर्थयोर्यम्यत इति साङ्कर्यम् ।

**सारबोधिनी--अनन्तेति** । यां दुर्गां वेधा ब्रह्मा न वेद स्वरूपतो न जानाति । या च प्रणते मानवे दयां भजते । सन्दष्टकमिदम् । **यदानत इति** । यस्यां दुर्गायां मानतोऽयं जनो न यस्य नीतेरत्ययं विनाशं न याति । तां स्मरामि । अयं शुभावहो विधिस्तस्य दानात् । नित्यविनाशे हेतुरयं शिवेन शङ्करेण ईहितां अर्थिताम्, पक्षे शिवे कल्याणे हितां शिवदात्री स्मरेण कामेन मिताम् । आद्यन्तयमकमिदम् । **सरस्वतीति** । हे सरस्वति ! वाग्देवि ! प्रसादं स्वति सर । सुष्ठु अतिशयेन सर गच्छ । मे मम चित्तसरस्वति चित्तसमुद्रे स्थितिं कुरु । क्षेत्रं शरीरं तदेव कुरुक्षेत्रम् । तत्र सरस्वती नदीविशेषः ।

ससार साकं दर्पेण कन्दर्पेण ससारसा ।
शरन्नवाना बिभ्राणा नाबिभ्राणा शरन्नवा ॥३६७॥

मधुपराजिपराजितमानिनीजनमनःसुमनःसुरभि श्रियम् ।
अभृत वारितवारिजविप्लवं स्फुटितताम्रतताम्रवणं जगत् ॥३६८॥

**बालचित्तानुरञ्जनी**—अथार्धद्वयेऽपि प्रथमादिभागे द्वितीयान्तभागे द्वितीयप्रथमान्तभागे द्वितीयादिभागे च यम्यत इत्येतदुदाहरति **ससारेति** । सारसैः पक्षिविशेषैः सह वर्तत इति सारसा । शरं काशं बिभ्राणा नवं कर्द्धमाभावान्नूतन अनः शकट यस्यां सा, वीनां पक्षिणां आण शब्दः स न विद्यते यत्र सा अविभ्राणा सा न भवतीति । नाविभ्राणा नवा नतना शरद् ऋतुः दर्पेण साकं ससार आजगाम ।

एवं द्विखण्ड उदाहरणान्यभिधाय चतुःखण्ड उदाहर्तुमाह **मधुवति** । वारितः निवारितः वारिजानां कमलानां विप्लवो यत्र, स्फुटितानि विकसितानि ताम्राणि ततानि विस्तृतानि आम्रवणानि चूतवनानि यस्य तत् जगत् । मधुपानां भ्रमराणां राज्या पङ्क्त्या पराजितो मानिनीजनस्य मानो याभिस्तासां सुमनसां सुरभिश्रियं सौरभ्यलक्ष्मीं अभृत दध्रे । अत्र खण्डचतुष्टयेषु द्वितीयखण्डः तृतीयखण्डे यम्यते ।

विविधधववना नागगर्धागतनाना-[?]
विविततगगनानाममज्जज्जनाना ।
शशरुरुवलना नावबन्धुं धुनाना
मम हिततनानाननस्वस्वनाना ॥

बलभद्रं प्रति श्रीकृष्णेन समुद्रपरिसरभूर्वर्ण्यते । विविधानि धवानां वृक्षविशेषाणां वनानि यस्यां सा, नागेषु गर्धेन सर्पभक्षणाभिलाषेण आगतैः वृद्धैः समृद्धैः[?] नानाविधैः विभिः पक्षिभिः विततं व्याप्तं गगनं यस्याः सा, अनामेन अनमनेन मज्जन्तः जना यस्यां सा । अविद्यमाना नरः यस्यां सा अना, समासान्तविधेरनित्यत्वात् नघृतश्चेति कबभावः । यद्वा अविद्यमानः अः विष्णुः, यस्यां सा अना । शशानां रुरूणां वलनं विलासो यस्यां सा । नौ आवयोः अबन्धुं शत्रुं धुनीते धुनाना मम हितं तनोतीति हिततना अनाननः अमुखः स्वस्य स्वन एव अनः प्राणो यस्यां सा । इत्याद्यन्यदप्युदाहार्यमित्याह **एवमिति** ।

**सारबोधिनी--ससार सेति** । शरत्ससार प्रससार । साकं कन्दर्पेण दर्पेण च, कं ब्राह्मणं दर्पितवान् यस्तेन । सारसाः पक्षिभेदाः तैः सहिताम् । नवमनः शकटम् यत्र । शरं काण्डं बिभ्राणा । न विद्यते वीनां पक्षिणां भ्राणः शब्दो यत्र । पश्चान्नञा योगः । नवा नूतना । एतानि द्विखण्डोदाहरणानि । चतुःखण्डे उदाहरति **मधुपराजीति** । जगत् कर्तृ । सुरभिश्रियं वसन्तलक्ष्मीमभृत दधार । मधुपानां राज्या श्रेण्या पराजितं मानिनीजनमनो याभिस्तथाभूताः सुमनसः पुष्पाणि यत्र सुरभौ, यद्वा तथाभूतानां सुमनसां पुष्पाणां सुरभिश्रियं सौरभ्यलक्ष्मीमित्यर्थः । किंभूतं जगत् । वारि जलम् तस्माज्जायते उत्पद्यते यस्तादृशो वारिजानां कमलानां विप्लवो नाशो यत्र । स्फुटितं विकसितम् ताम्रं रक्तवर्णम् ततं विस्तृतं आम्रवणं यत्र ।

एवं वैचित्र्यसहस्रैः स्थितमन्यदुन्नेयम् ।

**वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।**
**श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा ॥८४॥**

'अर्थभेदेन शब्दभेदः' इति दर्शने 'काव्यमार्गे स्वरो न गण्यते' इति च नये वाच्यभेदेन भिन्ना अपि शब्दा यत् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते स

